# सागरिका

## विश्वसंस्कृत-सम्मेलन-विशेषाङ्कः

विक्रम-संवत्सरे २०३८


सम्पादकाः

[illegible]नजी उपाध्यायः ( प्रधानः ) — डा० रेवाप्रसाब द्विवेदी

राधावल्लभः त्रिपाठी — डा० रामगोपाल मिश्रः



प्रकाशिका

सागरिका-समिति

महामनापुरी

वाराणसी-५

( B. H. U. )

# विषय-सूची


| विषय | लेखकः | पृष्ठ-संख्या |
|---|---|---|
| १. भारतीयो रङ्ग. | डा० राधावल्लभ त्रिपाठी | १–३४ |
| २. वेदस्य गौरवम् | डा० व्रजविहारी चौबे | ३५–३८ |
| ३. शाकुन्तलीयो नायकः | डा० कुसुम भूरिया | ३९–४५ |
| ४ अलङ्कारशास्त्रे काव्यबिम्बपरामर्शः | डा० अयोध्याप्रसाद द्विवेदी | ४७–६० |
| ५. पञ्चम-विश्वसंस्कृत-सम्मेलनम् | | |
| निष्पत्तिदर्शनम् | | ६४ |
| पूर्ववृत्तम् | | ६३ |
| अनुसन्धान-संहिता | | ६५ |
| विदेशेषु संस्कृताध्ययनम् | | ७९ |
| सम्मानोपाधि–वितरणम् | | ८१ |
| विश्वसंस्कृतसम्मेलनस्य का भाषा भवितुमर्हन्ति | | १०१ |
| काश्या गौरव–मण्डनम् | | १०३ |
| शास्त्रचर्चा–परिषद् | | १०४ |
| मनीषिणा प्रबोधनम् | | १०५ |
| पारितनिर्णयाः | | ११२ |
| सम्मेलन–समीक्षा | डा० रेवाप्रसाद द्विवेदी | ११३ |
| ६. ग्रन्थसमीक्षणम् | | १०७ |

# आमुखम्

विधाय भारतीवृत्त्या रङ्गदैवतपूजनम् ।
भारतीयस्य रङ्गस्य वृत्तं व्याख्यायते मया ॥
आदौ रङ्गसमुन्मेषो रङ्गायतिरनन्तरम् ।
रङ्गस्य विविधाः पक्षाः प्रस्तूयन्ते समासतः ॥
सतथ्यमिदमित्थं यदनुन्मीलितपूर्वकम् ।
रङ्गेतिवृत्तविज्ञान रङ्गाय सुखकृद् भवेत् ॥

—राधावल्लभः

# रङ्गसमुन्मेषः

नाट्यं नाम मनुष्यजातेः सहजो गुणः। अनुकरणं नाम सर्वत्र मानवेषु स्वाभाविकी प्रवृत्तिः, अनुकृतेश्च समुन्मिषति नाम नाट्यम्। नाट्यस्यानुकरणात्मकता मुनिना भरतेनाप्यूरीकृता। तथाहि—

त्रैलोक्यस्यास्य सर्वस्य नाट्यं भावानुकीर्तनम्।—ना० शा० १।१०७
लोकवृत्तानुकरणं नाट्यमेतन्मया कृतम्।—१।११२
सप्तद्वीपानुकरणं नाट्यमेतद् भविष्यति।—१।११७

अतश्च सृष्ट्युद्भवक्रमे मनुष्यजन्मना सहैव नाट्यमप्यजायतेति वक्तुमुचितम्। तथापि आदिममनुष्येऽनभिव्यक्तदशायां विलसन् नाट्यं नाम कदा कथं च बहिः स्फुटत् संवादैः संवलितं सत् प्रेक्षकपुरतः प्रदर्शनार्हं रूपमाप इति प्रश्नो विमर्शमपेक्षते।

विमर्शेऽस्मिन् इदम्प्रथमतया वेदेष्वेव परापतति अनुसन्दधती दृष्टिः। वेदानां कर्तारो नाट्यानुरागिणो गीत-नृत्त-वादित्र-दत्तरुचयो बभूवुरिति प्रमाणीकर्तुं शक्यते। तथाहि—तैरिन्द्रोषः प्रभृतीनां स्वदेवाना नृत्येन सम्बन्धः परिकल्पितः। अतश्च कृतमेव स्यान्नाट्येन तेषां जीवने पदमिति निश्चिनुमः। एवं स्थिते केचन पण्डिता ऋग्वेदस्य संवादसूक्तेषु नाट्यमूलमूरीकुर्वन्ति। सन्ति चात्र विप्रतिपत्तयोऽपि। १८६९ ई० वर्षे विपश्चिदपश्चिमेन मोक्षमूलरेण ऋग्वेदस्य मरुत्सूक्तम् (१।१६५) अनुवदता, सूक्तमिदं याज्ञिकानुष्ठाने पक्षद्वयविभक्तैर्नटैरभिनीयते स्मेत्यभाणि। अनन्तरं १८९० ई० वर्षे प्रा० सिल्वां लेव्ही अपि मतमिदमुपोद्वलयन् सामवेदे सङ्गीतविलसितं प्रमाणत्वेन प्रस्तौति स्म। अनन्तरं च मैक्डानल-विण्डिशौल्डेनवर्गप्रभृतयो भारतीय-विद्यापारावारपारङ्गताः पण्डिताः वैदिकसंवादसूक्तानि समीक्षाञ्चक्रुः।

सन्ति ऋग्वेदे बहुसंख्यकानि संवादसूक्तानि। तेषु महत्त्वभाञ्जि—

उर्वशीसूक्तम् (१०।९५), सरमापणि-सूक्तम् (१०।१०८), लोपामुद्रा गस्त्यम् (१।१७९), यमसूक्तम् वृषाकपिसूक्तम् (१०।८६ इन्द्रनेमिसूक्तम्—(८।१०), विश्वामित्रनदीसंवादः (३।३३)

इत्येतानि सन्ति । एतषु नाटचतत्त्वमन्तर्गभितं दृश्यते । तद्यथा –

( १ ) न किमपि सूत्रं स्वत एव पूर्णत्वं भजते । केन किमुच्यत इति निर्देश एतेषु न लभ्यते । यथा हि उर्वशीसूक्ते "अथ पुरूरवा उवाच" उर्वशी प्रत्युवाच" इत्यादिवाक्यानि यावत् पाठकैः गायकैर्वा न योज्यन्ते, तावत् सूक्तमनन्वितमेव तिष्ठति । यथा नाटचाभिनयकाले क्वचित् सूत्र-धारः प्रेक्षकाणा पुरतः पात्राणां कार्यव्यापारं व्याचष्टे, तथैव सर्वाणीमानि सूक्तानि व्याख्यासापेक्षाणि सन्ति । अतश्च एतेषां जनसमाज–समक्षं प्रयोगा अभूवन्, तत्कृत एवेमानि वस्तुतो रचितानि, प्रयोगेषु च नटाः शैलूष–गायका वा निर्देशवाक्यानि सूत्रधार–सदृशव्याख्यानं वा जनरुचि-मवेक्ष्य स्वतः संयोजयाम्बभूवुरित्यनुमातु सुकरं युक्तियुक्तं च ।

( २ ) सर्वाण्येव सवादसूक्तानि प्रायशः कामपि जनरुच्यनुकूलां लोक-प्रसिद्धां लोकविश्रुतां वा पुराणकथामाश्रित्य प्रवर्तन्ते । तेन च एतेषां नाटचप्रयोगे रञ्जकत्वं समपद्यत ।

( ३ ) कथाया नाटचप्रयोगयोग्य एवाश. संवादसूक्तेषु गृहीत । उर्वशी-सूक्ते उर्वशी-पुरूरवसं चिरन्तनकालाय परित्यज्य विलुप्ता, अनन्तरं क्वचि दसौ तां सरोवरे हंसिनीरूपेण विहरन्तीं ददर्श । अतः परं उभयोर्मिथो योऽ त्यन्तमेव करुणासंवलितः शोकोद्रेकमय. संवादः सम्प्रवृत्तः, तमेव सूक्तमिदं विषयीकरोति । तथैव वृषाकपि सूक्ते वृषाकपिः इन्द्रस्य सख्यमुद्वहन् अपि छद्मना पौलोमी चकमे । इन्द्रेण आविष्कृते तदीये रहःप्रणये उभयोः मिथः कलहः समजायत । परवर्तिकथाभागं सूक्तमिदं विषयीकरोति । गृहीतकथाभागस्य संवादसूक्तेषु सर्वत्र भावसन्धि–भावशबलतादिसंवलित-त्वं नाटचप्रयोगक्षमत्वं च ज्ञायत एव ।

( ४ ) संवादसूक्तेपु अन्यसूक्तेष्वपि वा क्वचिन्नाटचशास्त्रीया हस्तपादाद्यभिनयमुद्राः करणाङ्गहारादीनि वा सङ्केतितानि । यावदभिनय-सामग्रचा तत्तत् सूक्त न प्रस्तूयते, तावदपि तस्य अपूर्णत्वम् । अतश्च अभिनयप्रयोजनं तत्तत् सूक्तमिति सिद्धचति । यथा हि एकस्मिन् इन्द्र-सूक्ते ( ऋ०१०।११९।९ ) इमां पृथिवीमिह वा निदधानि, इह वेति कथयति देवो इन्द्रः । सायणाचार्यश्चात्र भाष्ये विशदयति—

'इह वा अन्तरिक्षे निदधानि इह वा द्युलोके इति हस्तेन निर्दिशति ।'

अत्र सुस्पष्टमेव 'इह वा इह वे' ति कथनेन हस्तनिर्देशमुद्रा सङ्केतिता।

तथैव उर्वशीसूक्ते प्रथममन्त्रे, 'हये जाये मनसा तिष्ठ घोरे' इत्यत्र पुरूरवसं विलोक्य पराङ्मुखी अन्यत्र व्रजन्ती चोर्वशी निवारयितुं 'तिष्ठ' इति कथनात् आवाहन–निषेधादि मुद्राः स्युः। द्वितीये मन्त्रे उर्वश्याः 'दुरापना वात इवाहमस्मि' इति कथनात् तस्य वेगेन गमनपूर्वकमङ्गहारः, तथैव १५ तमे मन्त्रे पुनस्तस्या एव कथने 'पुरूरवो मा मृथा मा प्र पप्तो मा त्वा वृकासो'—इत्यादौ निषेधसूचकः सङ्केतः स्यात्। तत्प्रत्युत्तरे 'नि 'वर्तस्व हृदयं परितप्यते मे' इति पुरूरवसो वाक्ये पुनर्निवारणाय मुद्रा अपेक्ष्यते। अन्ततश्च मुहुर्मुहुरनुरुन्धमानं सकरूणं परिदेवमानं पुरूरवसं न्यक्कृत्य उर्वशी प्रचलत्येव। सोऽपि सर्वथा हताशो भग्नहृदयः परावर्तत इति उभयोर्नाटयायित विना सूक्तमिदं हृद्यं हृदयङ्गमं च न स्यात्। एतादृङ्नाटचाभिनयमुद्रादिव्यापारः संवादसूक्तेषु समान एव।

(५) संवादेषु प्रत्युत्पन्नमतिजनित उक्तिप्रत्युक्तिचमत्कारः प्राणत्वेन परिव्याप्तः। एतत्–संवादगतवैशिष्ट्यं तत्र नाटकीयतत्त्वमादधाति। उर्वशीसूक्ते नायको यत्किमप्याह नायिका त्वरितं तत् खण्डनं कुर्वन्ती आबभाषे। अस्मिन् सूक्ते १८ मन्त्राः तेषु नव पुरूरवःप्रोक्ता नव च उर्वशीप्रोक्ताः। पुरूरवसा कथितस्य एकैकस्य मन्त्रस्य पश्चादेव प्रायशः उर्वश्या कथितो मन्त्रः परापतति। तेन स्पष्टमेव नाटचं तत्र समुज्जृम्भते। सरमा–पणि–संवादे तु सरमा स्वतीक्ष्णव्यङ्ग्यपूर्णाभिः प्रत्युक्तिभिरेव क्रमशः पणीन् पराहतान् विदधाति।

संवादसूक्तानि कामं न भवन्तु भारतीयनाट्यस्योद्गमस्थानं, तथापि नाटचस्यादिमं प्राचीनतमं वा रूपं तेषु सुरक्षितमिति कथनं तु सर्वथा श्लिष्यत एव। अस्मत्संस्कृतेरुषःकाले यादृशं नाटचं प्रावर्तत, तस्य स्वरूपं संवादसूक्तेषूपलभ्यते। एतेषां च संवादसूक्तानामभिनयो याज्ञिकेष्वनुष्ठानेष्वजायत। यज्ञो हि नाम तदानीं नाभूद् धार्मिकमेव कृत्यं केवलम्, अयं तु समग्राया आर्यजातेः सांस्कृतिकोन्मेषाय रङ्गपीठायते स्म। यज्ञे देवेभ्य आहुतिभिः सह अशनपानादिकम् अथ च सङ्गीतकं विविधा क्रीडा मनोरञ्जनोपायाश्च समायोजिता अभवन्। उक्तं च यजुर्वेदे यद् यज्ञे 'नृत्ताय सूतं गीताय शैलूषं' (३०।६) च नियोजयेत्। अतो यज्ञे नृत्तगीतादिव्यापाराः साधारणा अभूवन्। कात्यायनश्रौतसूत्रा-

नुसारेण ( २१ । ३ । ११ ) पितृमेधे नृत्य-गीत-वादित्रमायोजितम् । वाजपेययज्ञे यजमानस्य भार्याः गोधावीणाः काण्डवीणाश्च वादयाम्बभूवुः ( १४ । ३ । ७१ )। अन्यान्यपि वाद्यानि तत्रावाद्यन्त ( १४ । ३ । ७५ )। यज्ञे वीणावादनं बहु मन्यते स्म । तदानीन्तनाश्च वीणायाः श्रेष्ठा आचार्या सशिष्यास्तत्र तौर्यत्रिकायोजनाय निमन्त्रिताः । ते 'वीणागणगिन' इति भण्यन्ते स्म ( २० । ३ । २ )। वाजपेययज्ञे उत्तरमन्द्रारागेण गाथानां गायनमभवत् ( २० । २ । ७ ) । अश्वमेधेऽपि वीणावादका आकारिताः । तेभ्यः प्रत्येकशः स्वर्णमुद्राणां शतं वेतनमदीयत ( २० । ३ । २-७ )। यज्ञो हि नाम आर्याणां कलात्मकप्रवृत्तीनां सहजोल्लासस्य चाभिव्यक्तौ मन्यते स्म । अत एव नाटचप्रयोगस्य तत्रानुषक्तत्वं सर्वथा युज्यत एव । यज्ञे बहून्यनुष्ठानानि नाटचप्रदर्शनभावनयैव सम्पादितानि । समुपस्थिता च जनता तानि दर्शं दर्शमानन्दमनुबभूव । तद्यथा-वाजपेययज्ञे रथधावनस्पर्धा एतादृशमेवायोजनम् ( का० श्रौ० सू० १४।३।१६-४२ )।

एवमेव वैदिकसंवादसूक्तान्यपि यज्ञे जनताया रञ्जनार्थं यज्ञेऽभ्यनीयन्त इत्यविसंवादेन वक्तुं शक्यते । अभवच्च भूयसा संवादानामभिनयो यज्ञेष्विति बहुशो वैदिकग्रन्थाः प्रमाणयन्ति । तथाहि-अग्निष्टोमयागे अध्वर्यु-सोमविक्रयिणोः संवादः प्रस्तूयते स्म । अत्र सोमविक्रयी न वास्तविको विक्रेता, अपितु अध्वर्युपक्षीय एव कश्चिज्जनः विक्रेतुरनुकरणं विदधाति । अतश्च सुस्पष्टमेवात्रप्रहसनकोटिकं नाट्यमभिनीयते । कात्यायनश्रौतसूत्रे चास्य संवादस्य नाट्यरूपमेव इत्थं सूचितम्—

'तं विक्रयिणे प्रयच्छति । पञ्चकृत्वः सोमं पणते । स आह—सोमविक्रयिन्, क्रय्यस्ते सोमो राजा ३ इति । क्रय्य इत्याह सोमविक्रयी । तं वै ते क्रीणानीति । क्रीणीहीत्याह सोमविक्रयी । कलया ते क्रीणानीति । भूयो वात सोमो राजार्हतीति सोमविक्रयी । भूय एवातः सोमो राजार्हति । महांस्त्वेव गोर्महिमेत्यध्वर्युः । गौर्वै प्रतिधुक्, तस्यै शृतं तस्यै शरस्तस्यै दधि, तस्यै मस्तु, तस्या आतञ्चनं तस्यै नवनीतं तस्यै घृतं तस्याआमिक्षा तस्यै वाजिनमिति ।

भूय एवेत्यतः प्रभृति चतुरावर्तयति ।
एकैकेनान्ते पणते शफेन पदार्धेन गवा ।
ते क्रीणानीत्यन्ततः । प्रश्नान्ते प्रश्नान्ते ॥'

[ का० श्रौ० ७।७।२२-७।८।१२
चौखम्भा सं. सी. सं. पृ० ६६२ ]

एवं चाध्वर्यु-विक्रयिणौ स्वस्वसंवादात् पुनरावर्तयन्ति। अन्ततश्च स्थिरीभवति पणः। अध्वर्युः सोमेन सह न्यग्रोधमपि क्रीणाति। विनिमयेन च विक्रयिणे स्वर्णं प्रयच्छति। यदासौ यज्ञदैवतपूजनं विधाय साधयितुमीहते तदा सहसैवाध्वर्युपक्षीयास्तस्य हस्तात् स्वर्णमाच्छिद्य तं काष्ठदण्डेन ताडयन्ति।

वस्तुतोऽध्वर्यु-सोमविक्रयिणोः पात्रद्वयमभिनीयत एवात्र, न भूतार्थतया भवति सोमक्रयघटना। अन्ते च समुपस्थितानां प्रेक्षकाणां रञ्जनाय सोमविक्रयी ताड्यते। तदानीं आर्याणां कृते सोमस्य दुर्लभतां महत्त्वमावश्यकतां सोमविक्रयिणां च गृध्नुतां वीक्ष्य प्रहसनात्मकेऽस्मिन्नभिनये यद् विक्रयी सावमानं प्रधर्ष्यते तद् युक्तियुक्तमेव प्रतिभाति। नाट्ये सोमविक्रयिण एतादृशी दुर्दशां दर्शं दर्शं तस्य लोभेन दुराग्रहेण वा संत्रस्ता आर्या आह्लादिता अभवन्नित्यनुमातुं शक्यते। अत एव चावगन्तुं शक्यते अस्य प्रहसनस्य तस्मिन् कालेऽतीव लोकप्रियत्वम्।[1]

एवमेव सोमयागस्य महाव्रताविधौ पुंश्चलीब्रह्मचारिणोः संवादोऽभिनीयते स्म। अस्यानुष्ठानेन धरित्र्या उर्वराशक्तिर्वर्धत इति विश्वास आर्याणामभवत्। वस्तुतः पुंश्चली ब्रह्मचारी चैतद् द्वितयमपि पात्रम् असामान्यं, लोकानां कृते कुतूहलजनकं च। उभावपि परस्परेण सर्वथा विपरीतौ, अतश्च तौ परस्परस्य समक्षमुपस्थापयन्नाट्यं कमपि चमत्कारं तनुते। संवादोऽप्यत्र अश्लीलतां स्पृशन् राजशेखरस्य कर्पूरमञ्जर्यां दासी-विदूषकयोर्वाक्कलहस्य स्मारयति। संवादोऽयं काठकसंहितायां (३४।५), कात्या० श्रौ० सूत्रे (१३।३।६-७) चोल्लिखितः। लाट्यायनश्रौतसूत्रे च संवादवाक्यान्यपि प्रत्तानि। तद्यथा—

"पूर्वेण आग्नीध्रीयं ब्रह्मचारी अन्तर्वेदि उदङ्मुखः तिष्ठेत्। बहिर्वेदि पुंश्चली दक्षिणामुखी। सा ब्रूयात्—दुश्चरितिन्नवकीर्णिन् इति॥ धिक् त्वा जाल्मि पुंश्चली ग्रामस्य मार्जनि पुरुषस्य पुरुषस्य शिश्नपुणेजनि इति ब्रह्मचारी॥ एवम् आतृतीयं व्यत्यासम्॥

[ ला० श्रौ० सू० ४।३।६-१२ ]

---

१—नाट्यमिदं वाजसनेयिसंहितायाम् (३०६), तैत्ति० ब्राह्मणे (३।४।२।१) शतपथे (१।२।५, ३।३।२।६) गोपथे (३।३।३।९) चापि उल्लिखितम्।

संवादेनानेन सह वणिक्शूद्रयोः संवादोऽप्येवमेवानुष्ठितः। अथ याज्ञिकानुष्ठानमात्राण्येतानि, कथमत्र नाट्यमिति चेन्न। यतः सर्वेष्वपि देशेषु सर्वासु च संस्कृतिषु आदिमकाले नाट्यं धार्मिकैस्तान्त्रिकैः कर्मकाण्डगतैर्वा विधिभिः संवलितं सदेव विकसति। याज्ञिकविधौ उपयुज्यमानानामप्येताद्दशसंवादानां नाट्यरूपं न शक्यते प्रत्याख्यातुम्। वस्तुतस्तस्मिन्नतिपुरातने काले जनभावनासु समुन्मिषता नाट्येन धार्मिक–तान्त्रिक–याज्ञिकानुष्ठानेषु सुदृढमवलम्बं प्राप्य स्वस्वरूपमधिगतम्।

अतश्च–वैदिका आर्या न नाट्य–सङ्गीतादिकलानां नामाप्यजानन्, एतास्तु तैरार्येतरजातिभ्यः शिक्षिता इति ये केचन पण्डितम्मन्या विवेकविश्रान्तं प्रतिपादयन्ति, तेऽश्रद्धेयाः। तत्र केचन नाट्यशास्त्रप्रवर्तको भरतमुनिरवैदिक आसीदित्यूचिरे। कश्चिच्च विपश्चिन्नाट्यस्यार्येतरोद्गममुपोद्बलयन् राज्ञो नहुषस्य दृष्टान्तमुपस्थापयामास।[1] 'न जुहोति' ( न + हुद् ) इति व्युत्पत्त्या तेन 'नहुष्' आर्येतरो नृपतिरिति स्थिरीकृतम्। इयं च सर्वथा भ्रान्तिरेव। नह् + उषच्' इति व्युत्पत्त्यां ग्राह्यो भवति नहुषइति शब्दो, न 'नहुष्' इति प्रातिपादिकम्। अयं च नहुष आर्यनृपतेरायुषः पुत्रः पुरूरवसश्च पौत्रः। नाट्यशास्त्रस्य चरमेऽध्याये नाट्यसमुन्मेषप्रसङ्गेस्य कर्तृत्वं बहु मतम्। अस्यैव प्रेरणया प्रार्थनया वा स्वर्गस्था भरता भूलोकमवातरन्। भरतोऽपि वैदिक एव ऋषिः प्रतीयते, 'वेदाभ्यासिनः संशितव्रता ऋषयो ब्रह्मणा नाट्यवेदानुशीलनाय प्रेरिता' इति नाट्यशास्त्रोक्तेः। नाट्यप्रवर्तने वैदिकदेवस्य इन्द्रस्य भूमिकापि भृशं चर्चिता नाट्यशास्त्रे। अस्यैव इन्द्रदेवस्य असुरेषु विजयमुपलक्ष्योत्सवत्वेन भरतमुनिना स्वकीयं रूपकमेकमिदम्प्रथमतया प्रायोजि। अनन्तरं चासुरैर्विनाशिते तत्प्रयोगे इन्द्रो जर्जरप्रयोगेण तान् जर्जरीकुरुते स्म। भरताय चासावेव नाट्यप्रयोगेष्विदम्प्रथमतयोत्थाप्यमानं शक्रध्वजं प्राहिणोत्। इन्द्रमहसि च नाट्यप्रवृत्तयः प्रकर्षमधिजग्मुरिति सन्ति वैदिकपरम्परायां नाट्यप्रादुर्भावस्य तदभिवृद्धेश्च भूयांसि प्रमाणानि। एतद्विपरीतं न सन्ति तथा प्राचीनकालेऽवैदिक परम्परायां नाट्यप्रकर्षस्योल्लेखाः।

अथ भारते नाट्यस्योद्गमं व्याचिख्यासवो बहवो विपश्चितो मतान्तराणि प्रस्तावयाम्बभूवुः। तत्र मुग्धानलप्रभृतयो व्याचक्षीरन्[2]—नृत्येन

---

१—Sanskrit Drama : I. Shekhar. p 28

२—Hist. of Sans. Lit. Macdonnel P. 346–47

नाट्योद्गम इति। यथा नृत्यस्य तत्त्वमादिमरूपेणैव मानवानां संस्कारेष्वन्तर्निहितं तथैव संवादतत्त्वमपीति नृत्येन नाट्योत्पत्ति प्रतिजानतोऽस्य मते न किमपि क्षोदक्षमत्वम्। तथापि नृत्य–नाट्ये विकासप्रक्रियायां परस्परेण संश्लेषमभजन्निति तु सत्यम्। नाट्य–विकासस्य प्रथमसोपाने नृत्यप्रबन्धइत्यपरनाम्ना प्रथितानि उपरूपकाणि प्रथमं समुद्गतानीत्यपि प्रतीयते।

१८७७ ई० वर्षे श्रीमता शङ्करपाण्डुरङ्गपण्डितेन अनन्तरं च तमनुहरता पिशल्महोदयेन पुत्तलिकानाटयाद् भारतीयनाटयोत्पत्तिरूरीकृता। यद्यपि पुत्तलिकाचालनमुल्लिखितं महाभारतादौ[1] किन्तु मानवानां नाटयं ततोऽपि प्राचीनतरमित्यपि उल्लेखैः सिद्धयतीति न पुत्तलिकाभ्यो नाट्योत्पत्तिः स्वीकर्तुं शक्यते। कामसूत्र–कथासरित्सागरबालरामायण-नाटकादिषु अपि पुत्तलकानां प्रयोगा वर्णिताः। तैर्नाट्योत्पत्तिः शक्या साधयितुम्। पुत्तलिकानां नर्तयिता स्वहस्तयोः सूत्रमधारयत् इत्यसौ सूत्रधारः कथितः। स एव सूत्रधारो नाटयप्रयोगान् प्रवर्तयामास इति सिद्धयति पुत्तलिकानाटयेन नाट्योद्गम इति यत्कथितं तदप्यसाधु। यतो हि आवैदिककालाद् यज्ञवेदिमापनाय सूत्रधारणात् सूत एव सूत्रधारत्वेनापि समाम्नातः। अयमेव च रामायण–महाभारतकाले 'पौराणिकः' 'स्थपतिः' वास्तुविद्याविशारदोऽपि स्मृतः। उक्तं महाभारते—

स्थपतिर्बुद्धिसम्पन्नो वास्तुविद्याविशारदः।
इत्यब्रवीत् सूत्रधारः सूतो पौराणिकस्तथा॥[2]

न पुनर्लिकानां सूत्रधारणात् सूत्रधार इति संज्ञा। नाट्यस्य सूत्रज्ञत्वादसौ सूत्रधारः प्रोक्त इति सुस्पष्टमेवाभाणि भरतेन—

---

१— यथा दारुमयी योषा नरवीर समोहिता।
ईरयत्यङ्गमङ्गानि तथा राजन्निमाः प्रजा॥

म० भा० वन ३।१।२२

सूत्रप्रोता दारुमयीव योषा। — तत्रैव ४।३६

२— सूतस्य नानाशिल्पविचक्षणत्वं विविधव्यवसायसमाश्रयश्च सिद्ध एव। अत्र टीकायां नीलकण्ठस्तं 'शिल्पग्रामवेत्ते' त्याह।

गानस्य च वाद्यस्य पाठ्यस्याप्येकभावविहितस्य ।
शास्त्रोपदेशयोगात् सूत्रज्ञः सूत्रधारस्तु ॥

ना० शा० १५ ।७६

दशरूपक–भावप्रकाश– नाट्यदर्पणनञ्राजयशोभूषणादिपरवर्तिग्रन्थेषु सविस्तरं सूत्रधारस्य लक्षणं गुणाः कर्तृत्वं च निरूपितानि । न तत्र कुत्रापि पुत्तलिकानाट्येन तस्य सम्बन्धः सङ्केतितः । अपरं च पुत्तलिकानां नर्तयिता प्राचीनभारतेषु 'सूत्रधार' इति नैव कथ्यते स्म, अतश्च सर्वथा विप्रतीपमेव पुत्तलिकानाट्यात् नाट्यसूत्रधारस्यागमनम् । 'कथाकोष' इति जैनेषु प्रथिते ग्रन्थे, पुत्तलिका–नाट्यं वर्णितं, किन्तु पुत्तलिकानां नर्तयिता तत्र 'नर्तक' इति प्रोक्तो, न सूत्रधारः । एतेन तु न पुत्तलिकानाट्यान्नाट्योत्पत्तिरपितु नाट्ये निरता भरता एव क्वचिदाजीविका–प्रसिद्ध्यर्थं पुत्तलिका प्रयोगं संश्रितवन्त इति प्रमाणीक्रियते । द्वादशशतके विरचिते मेघप्रभाचार्यकृते धर्माभ्युदयनाटके नायकस्य पुत्तलो रङ्ग उपस्थाप्यते । तेन नाटकेषु चमत्काराधानाय क्वचित् परवर्तिकाले पुत्तलकाः प्रयुक्ताः अतश्च नाट्यमेव प्रत्युत पुत्तलकप्रयोगस्य मूलं न पुत्तलकप्रयोगो नाट्यस्येति सिद्ध्यति ।

पुत्तलिकानाट्यवच्छायानाट्यस्यादिमत्वमपि केचिद्दूरी कुर्वन्ति । बृहत्तरभारतेऽनेकत्र अफ्रिकादेशेषु चातिप्राचीनकालाच्छायानाट्यं प्रचलितमासीदिति सुविदितमेव । किन्तु भारते छायानाट्यस्य नाट्यात् पूर्ववर्तित्वे साधकप्रमाणाभावन्मतमिदमनुत्थानोपहतमेव । यद्यपि आन्ध्रप्रदेशे चर्मपुत्तलकानां छायाभिर्नाट्यप्रदर्शनस्य परम्परा प्रचलिता विद्यते तथैव नीलकण्ठेन महाभारतटीकायां 'रूपोपजीवन' मिति पदमाटीकमानेन छायानाट्यं सङ्केतितमपि—

'रूपोपजीवनं जालमण्डपिका इति प्रसिद्धम् । यत्र सूक्ष्मवस्त्रं व्यवधाय चर्ममयैराकारैः राजामात्यादीनां चर्या प्रदर्श्यते ।'

इत्येतेन पुरा भारते छायाभिर्नाट्यप्रदर्शनस्य परम्परा प्रचलिता आसीदिति यद्यपि ज्ञायते, तथापि न तेन छायानाट्यस्योपजीव्यत्वं सिद्ध्यति । संस्कृतरूपकेषु यानि छायानाटकानीति प्रथितानि, न तेषां छायाभिरभिनेयत्वाच्छायानाटकत्वमपितु कथावस्तुनि छायातत्वस्य

उत्तररामचरितस्य तृतीयाङ्कादिवत् प्रयोगा' दिति मतमुत्थाप्य[1] श्रीमद्भी रामजीउपाध्यायवर्यैः छायानाट्यविवादः साधु निराकृत इति नास्ति तत्र सम्प्रति शङ्कावकाशः।

रामायण–महाभारतादीतिहासकाव्यानां कुशीलवादिभिर्जनसमाजसमक्ष गायनेन नाटकं समुदियायेति कीथमहाभागः कथयति। मतेऽस्मिन गाथा–नाराशंसीतिहासप्रभृतिकाव्यानां चारणादिभिर्जनमनोरञ्जनाय गायनं आवैदिककालात् प्रचलितमासीदिति विद्यते क्षोदक्षमत्वम्। वैदिककाले सूतो वेदिनिर्माणप्रभृति यज्ञस्यानुषङ्गिककर्मसु प्रावीण्यं प्रकटीकुरुते स्म, स एव च कथा–व्याख्याने गाथा–नाराशंसी–प्रभृतिगायने पुराणपाठे च पाटवमाविष्चकार। महाभारतीया समग्रापि कथा सूतेन शौनकादिसमक्षं सम्यक् व्याकृतैव। अयमेव सूतस्तत्र 'सूत्रधारः' 'पौराणिकः 'स्थपतिः' वास्तुविद्याविशारदश्चाप्युक्तः। अतश्चेतिहासपुराणादीनि गायं गायं जन-समाजे तेषां लोकस्पृणत्वं साधयन् सूतः लोकरुचिवर्धनाय पश्चात् पारिपार्श्विकमेकं गायनेन सहाभिनयकर्मणि नियोज्य नाट्यस्य सूत्रधारः सञ्जात इति श्रीमनमोहनघोषाद्यरङ्गाचार्यादयो यन्मन्यन्ते तत् तथ्यमेव। किन्तु इतिहासपुराणादीनां गायनमेव नाट्यस्य बीजमिति यदि मन्यते तदनुचितमेव। नाट्यस्य बीजवपनं तु वैदिकसंवादसूक्तानां रचनायाः प्रागेव विहितम्। इतिहासपुराणादीनां पाठेन गायनेन च तत् बीजं पुनरपि सिक्त–मङ्कुरितं पल्लवितं च। वैदिककालिकः सूत इतिहासपुराणकाले नाट्याभिनयव्यवसायमपि पारिपार्श्विकादिसाहाय्येनावलम्ब्य, नाट्यशालास्थापत्यनिर्माणात् क्वचित् स 'स्थापकः' क्वचित् रङ्गभूमिप्रमाणाय सूत्रधारणात् पुनरपि सूत्रधारः ततश्च नाट्यस्यापि तौर्यत्रिक–सूत्रधारः सम्बभूव। अत एव केरलेषु प्रथिताः 'चाक्यारइति संज्ञया पुरातना अभिनेतारः स्वात्मानं उत्तराया दिशि दक्षिणस्यां समागतस्यास्यैव सूतस्यान्वये जातान् मन्यन्ते।

सूतः कथां कामपि जनसमाजसमक्षं प्रस्तुन्वन् गायनाभिनयसमावेशेन तत्र हृदयावर्जकत्वं सम्पद्यत इत्यनुभवति स्म। श्रोतारोऽपि तस्मिन् सूते अभिनेतृत्वमारोपयन्तः प्रेक्षकत्वे परिणताः। कथकस्याभिनेतृत्वे श्रोतुश्च

---

१—'छायानाटकम्'—डॉ० रामजी उपाध्यायः, सागरिका १०। १, पृ०१–५।

प्रेक्षकत्वे इयं परिणतिः सर्वथा स्वाभाविका एवासीत्। इयं च भोजेन शृङ्गारप्रकाशे सोदाहरणं सङ्केतिता—

'तथाहि—कंसं घातयति इति उक्ते कंसवधमाचष्ट इति प्रतीयते।'[1]

वैदिकसूक्तानीव इतिहासपुराणयोरुपनिबद्धान्याख्यानान्यपि बहुशः संवादरूपाणि सन्ति। तत्र 'युधिष्ठिर उवाच' 'कृष्ण उवाचे' त्यादीनि वाक्यानि नाट्यनिर्देशवत् संवादेभ्यो पृथग् योजितानि। तेन चैतेषामाख्यानानां यदा सूतेन कथकेन वा जनसमाजे पाठे क्रियमाणे नाट्यत्व सौकर्येण समपद्यत। एवमेव कुशीलवादिभि क्रियमाण कथागायनं नाट्याभिनये सङ्क्रान्तमभवत्। आख्यानानां गायनाभिनयाभ्यां सह प्रस्तुतेः परम्परा परवर्तिकालेऽपि प्राचलत्। इयं भोजेनैव साधु विवृता—

नलसावित्री—षोडशराजोपाख्यानवत् प्रबन्धान्तः।
अन्यप्रबोधनार्थं यदुपाख्याति तदुपाख्यानम्।
आख्यानसत्ता तल्लभते यद्यभिनयन् पठन् गायन्।
ग्रन्थिक एकः कथयति गोविन्दवदवहिते सदसि।[2]

अतश्च नाट्योत्पत्तेर्भरतमुनिना कीर्तितायां पारम्परिककथायां नाट्यजन्मनि वैदिकसंहिताभिः सह इतिहासकाव्यानामप्यवदानमूरीकृतमेव—

नाट्याख्यं पञ्चमं वेदं सेतिहासं करोम्यहम्। १।१५
इतिहासो मया सृष्टः स सुरेषु नियुज्यताम्। १।१६

एतेन वैदिककाव्यमुपजीव्य समुद्गतं नाट्यं इतिहासपुराणेषूपनिबद्धानामाख्यानानां सामग्र्या उपचितमिति सिद्धम्। इतिहासोऽपि वेदस्यैवोपबृंहणम्, तथैव नाट्यमपि। एवं तस्मिन् काले इतिहासो नाट्यं च परस्परं भावयतः स्म।

नाट्यशास्त्राभिनयदर्पण-भावप्रकाशादौ वर्णिताभ्यो नाट्योत्पत्तिकथाभ्यो हिमालयोपान्तवर्तिप्रदेश एव भौगोलिकदृशा नाट्योद्गमस्थलमिति सिद्धयति. अस्मिन्नेव प्रदेशे अप्सरसः किन्नरा यक्षा गन्धर्वाश्च न्यवसन्। भरतस्य प्राथमिकेषु प्रयोगेषु नारदेन सह अप्सरसो गन्धर्वाश्च सम्मिलिता। आदौ नाट्यप्रयोगे तिस्र एव वृत्तय आसन्,

---

१—Srngara Prakasa – V. Raghavan. P. 620

२—तत्रैव ६१६ पृष्ठे।

अप्सरसां तत्र प्रवेशेन सह ब्रह्मणः प्रेरणया तत्र चतुर्थी कैशिकी अपि योजिता। हिमालय एव शङ्करस्यापि वसतिः तस्यैव प्रेरणया भरतेन पूर्वरङ्गे नृत्याङ्गहारादिकं ताण्डव-लास्यादिकं च योजितम्। नाट्यस्यैतेषु प्राथमिकप्रयोगेषु आसीत् महती प्रीतिः रुचिश्चेन्द्रस्य। पश्चादिन्द्रपदमधिष्ठति राज्ञि नहुषे तस्य प्रेरणया भरतः स्वर्गान्नाट्यं भूलोकं निनाय। एतद् वस्तुतो हिमालयोपान्तवर्ति क्षेत्रान्नाट्यस्य क्रमशः दक्षिणदिग्वर्तिक्षेत्रेषु प्रसारं सङ्केतयति।

आदिमावस्थायामार्याणां जीवनगतानां सोमविक्रय-सदृशदैनन्दिनवृत्तानामनुकृत्या नाट्यमुदियाय। यज्ञे विनियोगेनास्य महात्म्यमुपचितम्।

अनन्तरं क्रमशः प्रवर्धमाने इतिहासपुराणसङ्ग्रहे तद्गता वृत्तान्ता अपि सूत्रधारादिभिर्नाट्यत्वेन प्रयोजिताः। एव च नाट्यं नाम आर्यजातेः पुरातनस्मृतीनां सांस्कृतिकरिक्थस्य च संग्राहकत्वेन समुल्ललास। भरतेन इदम्प्रथमतया प्रयोजितैः अमृतमन्थन-समवकार-त्रिपुरदाहडिमादिरूपकैः नाट्यस्यैतद्वैशिष्ट्यं क्रोडीकृतमेव। सोमविक्रय-सदृश-प्रारम्भिकरूपकेषु केवलं भारतीवृत्तिरेव प्राधान्यमभजत्। पश्चाच्च समुद्रमन्थन-त्रिपुरदाहसदृशेषु सात्त्वती आरभटी चाप्यास्ताम्। अनन्तरं स्त्रीपात्राणानुपादानं कैशिक्याश्च ग्रहणमभवत्। कलेवरदृष्ट्यापि पृथममेकाङ्कानि रूपकाण्युपादीयन्त, अनन्तरं द्व्यङ्कानि पश्चाच्च त्रिपुरदाहडिम-समुद्रमन्थनसमवकार-सदृक्षाणि त्रिचतुरङ्कानि। एवं नाट्यलीलायितं क्रमश उल्लासमाततान। तदयमत्र सङ्क्षेपः—

बीजं तु प्रकृतिर्मूला वृत्तिर्याऽनुकृतेर्मता।
तद् बहुधा व्यकिरद् भूमावभिव्यक्तेश्च भावना॥
लोकवृत्तानुकरणं तौर्यत्रिकसमन्वितम्।
यत्र इन्द्रोत्सवादौ वासिच्चद्रक्तपादपम्॥
वृत्तिस्तमपुषन्नूनं नाट्यं स्तनन्धयं शिशुम्।[1]
आदौ सा भारती नाम पश्चात् तिस्रोऽपि मातृकाः॥

---

१ सर्वेषां काव्यमुख्यानां मातृका वृत्तयः स्मृताः।
आभ्यो विनिःसृतं ह्येतद् दशरूपं प्रयोगतः॥
इति भरतोक्तेः।

अङ्कादङ्कान्तरं गच्छन्नङ्कैः पुष्णन् कलेवरम् ।
रङ्गे च विविधं खेलन् लास्यं तेनेऽथ ताण्डवम् ॥
इतिहासपुराणानामाख्यानैरुपजीवितम् ।
सूत्रधारकृतारम्भं कुशीलवसमेरितम् ॥
रसैर्भावैरभिनयैर्धर्मिवृत्तिभिः ।
रङ्गस्योन्मिषितं जातं मङ्गलायतिरङ्गितम् ॥



# रङ्गायतिः

वैदिकयुगमनु इतिहासपुराणकाले सङ्गीत–नृत्य–नाट्यकला बहुशो ववृधिरे। राजसंरक्षणमेतासां विकासायालमभवत्। राजकन्यकानां नृत्त-वादित्रादिशिक्षाग्रहणाय आचार्या नियुक्ताः। महाभारतेऽर्जुनो गन्धर्वेभ्यो नृत्यसङ्गीतादिकमधीयानः विराटकन्यकानां कलागुरुरभवत्। अस्मिन्नेव काले नाट्यनृत्यादिप्रदर्शनाय प्रेक्षागाराणां निर्माणं बाहुल्येन प्राचलत्। महाभारते नर्तनागाराः प्रेक्षागारा वा असकृदुल्लिखिताः।[1] राजपुत्राणामस्त्रविद्यानैपुण्यप्रदर्शनाय धृतराष्ट्रो विशालं प्रेक्षागारं निर्ममे, यन्मध्ये विस्तृतो रङ्गो निर्मापितः प्रेक्षाकालेऽनवरतं वाद्यान्यवाद्यन्त। यद्यपि भवनमिदमस्त्रविद्याप्रदर्शनाय निर्मापितं तथापि सङ्गीतादिकलानां प्रदर्शनायापि एतादृशाः प्रेक्षागाराः निर्मीयन्तेस्मेति महाभारताद् ज्ञायते। एतेषु प्रत्येकस्मिन्नागारे सहस्रशो जना. प्रेक्षाकाले संगमिताः। तदानी 'समाजा' अपि बहुश आयोजिता यत्र नृत्तगीतवादित्रैः सम्मर्दः समजनि। नगरेषु नटनर्तकसंघा संघटन्ते स्म।[2] युधिष्ठिरस्य राजसूये रामराज्याभिषेकोत्सवे वा गणिका नटाश्च सबहुमानमाकारिताः। तेन वैदिकयुग इवास्मिन्नपि काले यज्ञे नाट्यं प्रतिष्ठितमासीदिति ज्ञायते। नाटकमपि इतिहासपुराणेषु बहुशो उल्लिखितम्।[3]

तदानीं समग्राभिनयसामग्री–संवलितानि नाटकानि प्रयोगमापुरिति हरिवंशपुराणाद् ज्ञायते। पुराणेऽस्मिन् द्वारकायाः पिण्डारकक्षेत्रे यादवानामुत्सवो वर्णितः यस्मिन् अप्सरसो नृत्तगीतादिभिः श्रीकृष्णचरितं नाट्यत्वेनाभिनीतवत्य.। अन्यस्मिन् प्रसङ्गे श्रीकृष्णो भद्रनामानं नटमुत्पाद्य

---

१—म० मा० १।१३४।१०, ११।१८५।१६, ३।२०।२७

२—नटनर्तकसंघानां गायकाना च गायताम्।
मनःकर्णसुखा वाचःशुश्राव जनता ततः॥ रामा० २।६।१४

३—रामा० २।६६।१४ महा० २।११।३६, ३।५।१४ १२।६९।६० २।४।७, २।३३।४६, १।२९८।१०, १२।२६५, १२।३०।२३

तेन सह यादवानां छद्मनटमण्डलीं निर्माय वज्रनाभ-नगरं प्रेषयाम्बभूव। तत्रप्रद्युम्नो नायकं, साम्बो विदूषकं गदः पारिपार्श्विकमन्ये च यादवा नटीरभिनिन्युः। वज्रनाभ-पुरं प्राप्य ते रामायणनाटकं नाटयामासुः। दशरथर्षि-शृङ्गशान्तारामलक्ष्मणादिपात्राणा परमं प्रभविष्णु अभिनय वीक्ष्य प्रेक्षकाः पौरा अतितरा प्रीयन्ते स्म। अनन्तरं नटानां कीर्तिः कर्णाकर्णि राजानं वज्रनाभं प्रति स्यन्दते स्म। सोऽपि ता नटमण्डलीं राजसभायां प्रेक्षणकप्रदानाय निमन्त्रयाम्बभूव। यादवाश्च तत्र कौबेर-रम्भाभिसारं नाम नाटकं प्रयुयुजिरे। तेषामभिनयनैपुण्यं वीक्ष्यासुरनार्य-स्तेभ्य आभूषणान्यवतार्यं ददुः।

इतिहासपुराणकालमनु सम्प्राप्ते बौद्धयुगे नाटयोपक्रमा बहुधा व्यवर्धन्त। तदानी यावत् शिलालि-कृशाश्वप्रभृतयो नाट्याचार्याः कलितकृतित्वा आसन्। ललितविस्तरानुसारेण राजपुत्राश्चित्रकला वीणावादनं नृत्यं, गीतमभिनयं नाट्यप्रयोगं च शीलयामासुः।[1] अवदानशतके नृत्तगीतवादित्रादिगोष्ठ्य उल्लिखिताः। तत्रैव राज्ञो बिम्बसारस्य स्वसभायां नटमण्डलीमानीय्य बुद्धचरितनाट्योपस्थापनमपि वर्णितम्। तत्र सूत्रधारः स्वयमेव बुद्धस्य भूमिकां जग्राह।[2] एषैव च नटमण्डली राजगृहेऽपि स्वनाटकं प्रस्तुतवती, यस्मिन् कुवलयाख्यनट्या अभिनयसौष्ठवं सौन्दर्यं च दर्शं दर्शं भिक्षवो भृशं मुग्धास्तत्प्रणयभिक्षवो बभूवुः, बुद्धश्च कुवलयाया आकर्षणात् तान् रक्षितुं कुवलया स्वधर्मं दीक्षयामास। बौद्धागमेषु विनयपिटके कीटगिरौ संस्थिता रङ्गशाला वर्णिता। अवदानशतकस्यापरस्यां कथायां राज्ञः ककुच्छदस्याज्ञया शोभावत्यां नाटक प्रयोजितं, यत्र नाट्याचार्य एव सूत्रधार आसीत्। संयुक्तनिकाये विदूषकमभिनयतो नटस्य प्रत्यक्षदृष्टमिव सजीव-चित्रमुपस्थापितम्—

नटानां भासमानां यो सो नटो रंगमज्झे समाजमज्झे संचलिकेन जनं हासेति रमेति—'

—गामणीसंयुत्तम्, संयुत्तनिकाये-४, पृ० ३०६

दीर्घनिकायेऽपि शोभणगरकस्य (नटमण्डल्याः) उल्लेखो विहितः।

---

१. ललितविस्तरे (मिथिला ग्रन्थमाला) पृ० १०८

२. अवदानशतके २।८४, २।१७, ३।३०

जैनेषु विश्रुते "राजप्रश्नीयागमे" देवकुमाराः देवकुमार्यश्च महावीर-समक्षं नृत्यनाट्यमकुर्वन्निति वर्णितम्। तत्र नृत्येषु आवर्त- प्रत्यावर्त–श्रेणी-प्रश्रेणी–प्रभृतीनि, मण्डलरचनासु स्वस्तिक–श्रीवत्स-नन्दिकावर्त-वर्धमानक-भद्रासंहलास्य–मत्स्य–दर्पण–प्रभृतयश्च प्रयुक्ताः। ईहामृगे चन्द्रावलि-चन्द्रोद्गम–सूर्योद्गमादीनि च नाट्यानि तत्र प्रदर्शितानि। एवं च क्रमेणा-गमेऽस्मिन् ३२ नाट्यानि वर्णितानि। अनन्तरं च नटा महावीरस्य जीवन-चरितं नाटयन्ति स्म।

कौटिल्यस्यार्थशास्त्ररचनाकाले व्यावसायिकानि नाट्यदलानि नगरान्न-गरं ग्रामाद् ग्रामं चाटन्तो नाट्यं दर्शयाम्बभूवुः। राजा चैतेभ्यो नाट्य-दलेभ्यः कथं शुल्कादिकं गृह्णात्विति विधानं कौटिल्येनोपकल्पितम्। एकस्याः प्रेक्षायाः कृते पञ्च पणकाः शुल्कं निर्धारिताः। नटाश्च चारत्वे-नापि राज्ञा शत्रुषु नियोजिताः[1]। नट-नर्तक–गायक–वाग्जीवक–शौभिक–चारणप्रभृतयः कौटिल्येनोल्लिखिताः[1]। प्रेक्षागृहाणि नगरमध्ये न निर्मातव्यानि इति स निर्दिशति। तेन प्रेक्षागृहाणां स्वनगरे यथा-स्थानं निर्माणं राज्ञ एव दायित्वं तदानी मतमिति ज्ञायते। अन्यच्च नटानां नटीनां च प्रशिक्षणायोपयुक्तां व्यवस्थां राजा सम्पादयेदिति कौटिल्यस्य निर्देशः।

कामसूत्राद् ज्ञायते तदानी नगरेषु नृत्यगीत–गोष्ठी–नाट्यप्रयोगादि-प्रेक्षायोजनाये सरस्वतीभवनानामवस्थितिः। पक्षस्य मासस्य वा सुनिश्चितेऽह्नि एतेषु भवनेषु 'समाजो' ऽभवत्।[2] समाजेषु एतेषु बहिष्टा-दागता नटा अपि प्रेक्षां दत्तवन्तः।[3] इमे च बाहीका नटा नागरकैर्यथोचितं सत्कृता प्रथमे दिने प्रेक्षां प्रदाय अपरेद्यु. स्ववेतनमगृह्णन्। वेतनं च तेभ्यो वितीर्य नागरका यथारुचि, पुनरपि प्रेक्षां–प्रदानाय तान् प्रार्थयन्त, अन्यथा नटा आपपृच्छुः। उत्सवे व्यसने चैव इमे नटा राजपुरुषा इव सत्कृताः। एतेन च अपारः सम्भूतबहुविधव्यापारो नाट्यसंसारस्तदानीं समजायतेति वक्तुं युज्यत एव। एकतस्तु राजसभासु नियोजिता नटास्त-द्व्यतिरिक्ताः पुनरपरत आहिण्डमाना नाट्यमण्डल्यो नाट्योल्लासं वितेनुः।

१—अ० शा० अध्यक्षप्रचारे ३८।
२—का० सू० नागरकवृत्ते–१५
३—तत्रैव–१६

एवमेव पतञ्जलिप्रोक्ताः शोभनिका ग्रन्थिकाश्चापि नाट्यजगति कामप्यभिख्यां ख्यापयामासुः । तैरप्यतिविचित्र–परम्परावाहिनि नाट्यलोके कंसबध–बलिबन्धादिनाट्यानि लोकम्पृणं विदधिरे । तद्यथोक्तं महाभाष्यकारेण—

ये तावदेते शोभनिका नामैते प्रत्यक्षं कंसं घातयन्ति, प्रत्यक्षं च बलिं बन्धयन्ति इति । चित्रेषु कथं—चित्रेष्वपि उद्गूर्णा निपतिताश्च प्रहारा दृश्यन्ते । कंसाकर्षण्यश्च । ग्रन्थिकेषु कथम्—यत्र शब्दगडुमात्रं लक्ष्यते । ते ऽपि तेषामुत्पत्ति प्रभृत्याविनाशाद् ऋद्धीर्व्याचक्षाणाः सन्तो बुद्धिविषयं प्रकाशयन्ति । अतश्च सतो व्यामिश्रा दृश्यन्ते । केचित् कंसभक्ता भवन्ति । केचिद् वासुदेवभक्ताः । वर्णान्यत्वं खलु पुष्यन्ति । केचिद् रक्तमुखा भवन्ति, केचित् कालमुखाः ।

एतेन तावत् शोभनिका नाम चित्राणि जनसमाजे दर्शयन्तस्तत्राङ्कितानां दृश्यबन्धाना व्याख्यानं साभिनयमकुर्वंस्तथैव ग्रन्थिकाश्च ग्रन्थात् कस्माच्चिदपि काव्येतिहासादिकमपठन् तेषां पारिपार्श्विकाः सहायकानटा वा तदनुसारतो नृत्यन्ति, नाटय वा कुर्वन्ति स्म इति महाभाष्यकारस्याभिप्रायः प्रतीयते । भोजेनापि ग्रन्थिकेन ग्रन्थपाठस्तदधिकृत्य गायनस्याभिनयस्य च परम्परा वर्णितेत्युक्तमेव प्राक् । शोभनिकाश्च चित्रितं पटं दर्शयन्ति स्म । परवर्तियुगेऽपि तेषां परम्परा प्रचलिता । बाणेन लक्ष्मीपटप्रदर्शयिता वर्णितः स्तथैव मुद्राराक्षसकारेण यमपटदर्शयिता ।

इत्थं च ख्रिस्तपूर्वशतकेषु नाट्यं विविधै रूपै स्वात्मानं प्रकटीचकार । आदिमकाले प्रस्तूयमानं रूपकं न भवति स्म पृथक्तया लेखरूपेण निबद्धम् । इतिहास–पुराणान्युपजीव्य सूत्रधाराः कुशीलवादयश्च स्वत एव जनरुचिमवेक्ष्य अवसराकूलं तस्य रचनां व्यदधुः । एवं च प्रतिप्रयोगं कस्मिंश्चिद् रूपके परिवर्धनं संशोधनं वाजायत । एवं महाभारतादिवद् नाटकमपि कालक्रमेण विकसति स्म । अस्या विकासप्रक्रियाया उदाहरणं हनूमन्नाटकेऽवलोकयितुं शक्यते । नाटकस्यास्यादिमं रूपं नाट्यशास्त्रादपि प्राचीनतरं सम्भाव्यत इति श्रीमनमोहनघोषोऽनुमिनोति । प्रयोक्तॄणा परम्परयास्मिन्ननेकशः परिवर्तनं व्यधायि, अत एव विद्यतेऽस्य पश्चात् सङ्कलितयोः संस्करणयोरत्यधिकं वैषम्यम् । यस्मिन् अतिपुरातने काले भरतेन अमृतमन्थन–त्रिपुरदाहादि–रूपकाणि प्रयोजितानि, तस्मिन् कालेऽपि लिखितरूपकाणां परम्परा नासीदिति सम्भाव्यते, भरता मौखिकपरम्पर-

यैव नाट्यसाहित्यं रक्षन्तः संवर्धयाम्बभूवुर्यथा ऋषयः संहितादीन्। अत एव तस्मिन् काले नाट्यसाहित्यस्य रचनापि भरतानामेव तथैव दायित्वमभवद् यथा नाट्यस्य प्रयोगसम्पादनम्। शनैः-शनैः स्वतन्त्रतया नाट्यलेखनस्य तत्र मौलिककवित्वप्रकर्षस्य चावकाशमनुभवन्तस्ते नाट्यमण्डले नाट्यलेखकमपि समावेशयन्तिस्मेति भरतेनोल्लिखितः। तथापि नाट्यस्य प्रयोगप्रधानत्वात् तत्प्रयोजनमूलत्वाच्च नाट्यकारस्य पृथक्तया इयत्ता न तदानी बभूव, अतश्च न ज्ञायन्ते तस्मिन् काले सम्भूतानां नाट्यकर्तृणां नामादीन्यपि।

एवं च शनैः-शनैः समेधमाने नाट्यलीलायिते प्रथमं कविताकामिन्या हासो नाट्यकृदग्रणीर्भास स्वप्रतिभाभासा भारतीयं रङ्गमण्डपं भृशं व्यदीपयत्। भासो राजसभायां सभ्यो बभूव, तदन्तर्गतमेवास्य रूपकाणि प्रयोगमापुरिति अग्रे सप्रमाणं विवेचयिष्यामः। भासमनु सौमिल्ल-कविपुत्रौ नाट्यकारेषु कामपि ख्यातिं गतौ। एतेषां भास-सौमिल्ल-कविपुत्राणां रूपकाणि बहुना कालेन कालिदासकालं यावत् रङ्गे मुहुर्मुहुः प्रायुज्यन्तेति प्रतीयते, यतश्च विक्रमोर्वशीये सूत्रधारो ब्रूते—

"पूर्वेषां कवीनां दृष्टाः प्रयोगबन्धाः।" नन्वत्र 'दृष्टा' इति कथनेन 'भृशं दृष्टाः अतश्चालं तै' रित्येव ध्वनिः।

समेषामेव कालिदासीयरूपकाणामिदम्प्रथमत्वेनाभिनयः विद्याविश्रुतानां कलाकोविदानां राजसत्कृतानां सभ्यानां समादृताया विद्वत्परिषदः' 'अभिरूपभूयिष्ठायाः परिषदो' वा पुरतोऽजायत। शाकुन्तलस्य केषुचित् संस्करणेषु तु 'राज्ञो विक्रमादित्यस्याभिरूपभूयिष्ठा परिषदिय' मित्यप्युल्लिखितम्। परिषदेषा नोदीयोमानं कमपि नाट्यकारं निकषोल्लीढमविधाय सहसा सत्कर्तुमुत्सहते स्म। अत एव मालविकायाः प्रस्तावनायां मारिष एतस्याः पूर्वपक्षं स्फोटयति—

'मा तावत्। प्रथितयशसां भास-सौमिल्लकविपुत्रादीनां प्रबन्धानतिक्रम्य वर्तमानकवेः कालिदासस्य क्रियायां कथं बहुमानः ?'

अत एव मालविकायाः प्रथमप्रयोगार्थं परिषदा वसन्तोत्सवावसरो निर्धारितः, यस्य हर्षोल्लासप्रमोदपूरिते समये 'नूतनस्यापि कवेः क्रिया' कथंचित् सह्या स्यात्। किन्तु कवेः प्रथमेनैव रूपकेण परिषत्पण्डिता एतस्य प्रतिभाया अपूर्वोन्मेषं परिचीय विस्मयान्विता 'एतत्क्रियायां बहुमानवन्त.'

सञ्जाताः। अतश्च विक्रमोर्वशीये सूत्रधारः "अहमस्यां कालिदासग्रथितवस्तुना ......त्रोटकेनोपस्थास्य' इति तथा ब्रूते यथा केवलं कालिदासस्य नामग्रहणमेव पण्डितानां प्रेक्षकाणां सर्वथावधानं आकृष्टुमलमिति अभिप्रायः प्रतीयते। ततश्च पुनरपि प्रेक्षकान् सावधानान् विधातुमयं तस्य निर्देशः—"शृणुत जना अवधानात् क्रियामिमां कालिदासस्य।' सर्वत्र विशेषणादिविहीनं कालिदासनामग्रहणं 'वर्तमानस्यापि कवेः' कामपि ख्यातिं प्रसृतां प्रत्याययति अथ शाकुन्तलस्य प्रथमाभिनयो न मालविकाग्निमित्रादिवद् वसन्तोत्सवेऽपि तु 'अचिरप्रवृत्ते उपभोगक्षमे ग्रीष्मसमये' समजनि, यस्मिन् 'दिवसाः परिणामरमणीया बभूवुः'। एतेन वसन्तोत्सवस्य क्षणिकहर्षप्रमोदाकुलः काल नैतादृशगम्भीरोदात्तवस्तुग्रथितनाटकस्य प्रयोगाय समीचीन इति चिन्तयन्तः परिषत्-पण्डिता अतिवसन्तं अचिरागतग्रीष्मं सुभगमनुकूलं समयं तत्प्रेक्षणाय प्रस्तावयाम्बभूवुरिति प्रतीयते।

कालिदासानन्तरं मृच्छकटिकं नाम प्रकरणं विवादास्पदतया नूतनवस्तुयोजनया च लोकप्रचारमाप। शाकुन्तलवदस्याप्यभिनयो ग्रीष्मकाल आयोजितः। परिषच्चास्य प्रयोगावेक्षणायातितरं कौतूहलाविष्टा आसीदिति 'अलमति विस्तरेण' इति नान्द्यन्तरं प्रयुक्तस्य पारम्परिकवाक्यस्थाने सूत्रधारस्यात्रैतत् कथनं ज्ञापयति—

'अलमनेन परिषत्कौतूहलविमर्दकारिणा परिश्रमेण।'

प्रकरणस्य प्रस्तावना प्रथमप्रयोगसमये नाट्यकारस्य दिवङ्गतत्वमाचष्टे। नाट्यकारश्चात्र साहित्ये इतिहासेषु च सुविश्रुतो नृपतिः शूद्रकः कथितः। वस्तुतो मृच्छकटिकस्य कर्ता कोऽप्यज्ञातनामा कविस्तदानीमभवद् यः स्वकृतौ विवादास्पदत्वेन राजनीतिक-सामाजिक-प्रसङ्गानां यथातथ्यनिरूपणेन प्रयोगकाले विरोधः सम्मर्दो विघ्नाश्च स्युरित्याशङ्क्य स्वपरिचयं प्रकटीकर्तुं नोत्सहते स्म, चाक्यारास्चैतत् प्रकरणं भासनाम्नान्ये विरोधमुपशमयितुं शूद्रकनाम्ना प्रचारयामासुः, येन पुरातनकवेर्भासस्य, पुरातननृपतेः शूद्रकस्य कर्तृत्वज्ञापनात् समकालिकी अपि कथा पुरातनी प्रतीयेत, सामाजिकाः अन्ये वा विमता न विरुध्येरन्। अन्यदप्यवधेयं मृच्छकटिकप्रयोगविषये यत् प्रस्तावनायां प्रयोगकालो मध्याह्नः सूचितः। एतेन चास्य प्रथमः प्रयोगोऽसमान्यपरिस्थितिषु अन्ये जना मा जानन्त्विति दृष्ट्वा यथा छद्मलेखक नाम्ना तथैव छद्मस्थाने कृत इति अनुमानं जायते।

अनन्तरं महाराजपृथुसूनुसामन्तबटेश्वरदत्तपुत्रस्य विशाखदत्तस्यापूर्वं नाटकं शाकुन्तलादिवत् परिषदादेशेन प्रयोजितम्। नाट्यकारश्चासौ देवी-चन्द्रगुप्तम् अभिसारिकावञ्चितकमि'ति रूपकद्वयेन प्रागेव स्वकृतित्वमहिम्ना तदानी परिचित इति मुद्राराक्षसप्रथमप्रयोगसमये परिषदस्यं कृते बहुमान-वती दृश्यते। अरालपुरवास्तव्यस्य दिङ्नागस्य कृतिः 'कुन्दमाला' अपि तदानीं परिषदाज्ञयैव प्रदर्शिता। विज्जकायाः कौमुदीमहोत्सव-वस्तु पाटलिपुत्रराजसभायां कल्याणवर्मनृपते राज्याभिषेकसमये प्रयोज्यतां गतम् कान्यकुब्जनरेशः श्रीहर्षस्तु स्वसभायां नाटेभ्य आश्रयं ददौ, तेऽपि सामन्तसमाजसमक्षं यथावसरं तत्कृतानि रूपकाणि प्रयुञ्जिर इति रूपकाणां प्रस्तावनाभिः कुट्टनीमतकाव्याच्च ज्ञायते। प्रियदर्शिका रत्नावली चोभे नाटिके वसन्तोत्सवे प्रदर्शिते। नागानन्दं नाम गम्भीरं नाटकं तु न वसन्तोत्सवसदृशेऽत्युल्लास-चाञ्चल्य-कोलाहलसङ्कुले काले-ऽनुष्ठानयोग्यमिति तद् इन्द्रमहसि प्रयोजितम्। एतेन आभरतान् इन्द्रोत्सवे नाट्यप्रयोगस्य या परम्परा प्रसृता सा श्रीहर्षस्य समयं यावन्निर्वाह्यते स्म इति सुकरमनुमातुम्। राजसत्कृतत्वात् आसीत् श्रीहर्षस्याश्रितानां नटानां कोऽपि सरम्भः, राजसभायामपि च विजृम्भते स्म चाटुका-रितया सह आत्मश्लाघा, अत एव ते 'आ परितोषाद् विदुषां न साधु मन्ये प्रयोगविज्ञान' मिति कालिदासीय सूत्रधार इव न विनयविभूषिताः, अपि तु 'नाट्ये च दक्षा वयम्' इति सर्वदा गर्वमुद्वहन्ति स्म। श्रीहर्ष इव पल्लवनरपतिरत्तिविलासप्रहसनकर्ताः महेन्द्रविक्रमः, तथैव कालञ्जराधि-राजोऽनङ्गहर्षमायुराजः तापसवत्सराजनाटकप्रणेता च राजकीयां रङ्गशालां संवर्धयाम्बभूवतुः। अनङ्गहर्षस्तु तापसवत्सराजप्रस्तावनायामात्मानं स्वगोष्ठीभावितात्मे'ति कथयति, एतेन स राजसभायाः पण्डितैर्नाट्यकोविदैश्च नाटकप्रणयने तत्प्रयोगे च प्रेरित इति प्रतीयते, तथापि नाटकस्यास्य प्रथमप्रयोगः न स्वल्पसंख्यकानां परिषत्सदस्यानां पुरतोऽनुष्ठितः, यतो हि प्रस्तावनायां 'जनाः' सामाजिकाश्च प्रेक्षकत्वेन सम्बोधिताः, न पुनः परिषत्तत्रोल्लिखिता। अस्मिन्नेव काले दक्षिणेषु कुलशेखरवर्मणा केरलीयो रङ्गपीठोऽत्युच्चशिखरं स्वसमुद्योमेनोन्नायितः।

आ भासात् उपर्युक्ताः सर्वेऽपि नाट्यकाराः राजसभाया रङ्गशाल्यानु-षक्ताः। एतद्ग्रथितानां रूपकाणां संविधानं रङ्गविधानं च राजकीयः प्रेक्षा-गारः प्रभावयति। न पुनः सर्वेऽपि प्रतिभाशीलाः रूपककाराः राजसभासु

प्रवेशमलभन्त। ते स्वरूपकाणि देवालय–रङ्गपीठे उपस्थापयितुं प्रायतन्त। देवालयेषु यात्रामहोत्सवा आयोजिता यत्र प्रायो नाट्याभिनयोऽभवत्। प्रेक्षागारा अपि देवालयेषु निर्मापिताः। एतच्च सर्वमस्माभिर्विष्णुधर्मोत्तर-पुराणमन्यांश्च शिल्पादिग्रन्थानुपजीव्य 'नाट्यमण्डपम्' इति प्रबन्धे विवृत-मेव। भवभूतिः राजसभातो निर्विण्णो नटमण्डलेन मैत्री सन्धाय सर्वाणि स्वनाटकानि भगवतः कालप्रियनाथस्य यात्रामहोत्सवेऽभिनयार्थं तेभ्यः समर्पयाम्बभूव। एतन्नाटकानां वस्तुविन्यासः नाट्यविधानं च देवालय-प्रेक्षागारेण अमृष्टं प्रतीयते। यतो हि द्वयोर्नाटकयोः रामायणीयं वृत्तम्, अपरस्मिन्नपि बृहत्कथानुसारि लोकरञ्जकं वस्तु प्रपञ्चितम्, सर्वत्र अन्तःपुरिकादिक्षुद्रप्रणयवृत्तान्तमपाकृत्य विदूषकस्य दूषितांश्च विकृतकूर्दना-दिसमन्वितनर्मप्रलापान् दूरीकृत्य भूरिभावभरितानि लोकमाङ्गल्यमयानि तत्त्वानि भवभूतिना रूपकेषु भावितानि। अनन्तरं मुरारेरनर्घराघवं नाटकमपि देवालये श्रीपुरुषोत्तमस्य यात्रोत्सवे प्रयोगात् प्राक् सञ्जाता अभूवन् केचन प्रयोगाः। तेषु दाक्षिणात्यः कश्चन नाट्यकारः भयानक–बीभत्सादिबहुलं नाट्यं प्रयोज्य जनतामुद्वेजितवान्। अतश्च जनताया रुचिपरिष्काराय सुचरितो नाम नाट्यकारः संयोगवशात् तत्र समुपस्थितः पूर्वसमुद्योगं विनैव तत्कालमनर्घराघवं प्रयोक्तुं सन्नद्धो बभूव। एतेनासमग्रसामग्रीका अपि तदानीन्तनाः स्वसुचरित–प्रयोगतया विश्वस्ताः कथमाकस्मिकतयापि प्रयोक्तुमुत्काः अभवन्निति ज्ञायते। बिल्हणकवेः कर्णसुन्दरीनाटिका एका-दशशतके श्रीशान्त्युत्सवदेवगृहे भगवतो नागेशस्य यात्रायां रङ्गस्था विहिता। राजशेखरस्य तु पुनः सर्वाण्यपि रूपकाणि महीपाल–महेन्द्रपाल–युवराजदेवनृपाणां सदसि प्राप्तराज्याश्रयैर्नटैः प्रयुज्जिरे।

एतद्व्यतिरिक्ता आसंस्तादृशा अपि तदानीं नाट्याचार्या ये नाट्यं न राजसभामण्डपे न वा देवालयमण्डपेऽपि तु ग्रामेषु जनपदेषु यत्र कुत्रापि नाट्यमण्डपवर्जमनुतिष्ठन्ति स्म। भगवदज्जुकस्य प्रहसनस्य प्रयोग इद-म्प्रथमतया एवमेव सञ्जात इत्यनुमीयते। यतो ह्यस्य रूपकस्य प्रस्ताव-नायां नोल्लिखिता राजपरिषन्नवा सूचितो देवालयस्य कोऽपि यात्रामहो-त्सवः। सूत्रधारस्तु विदूषकं प्रति पुनरेतद् ब्रूते—

'अद्यास्मि बहिर्नगरादागच्छता अनेकसिद्धादेशजनितप्रत्ययेन लक्षणिना ब्राह्मणेनाहमादिष्टः—अद्य इतः सप्तमेऽहनि तव राजकुले प्रेक्षा भविष्यति। ततस्त्वत्प्रयोगपरितुष्टेन राज्ञा दत्ता महती श्रियमवाप्स्यसीति।'

एतेन राजकुलान्नाट्यानुष्ठाननिमन्त्रणप्रत्यर्थी सूत्रधारोऽयं न राजप्रासादरङ्गशालायां न वा देवालयप्रेक्षागारे स्वप्रहसनं सम्प्रति प्रस्तौति, उभयबाह्यः क्वचिदन्यत्रैवेति सुकरमनुमातुम् ।

इत्थं च राजसभा, देवालययात्रामहोत्सवा ग्रामजनपदाश्चेत्येतासु तिसृषु दिक्षु भारतीयनाट्यायतिः प्रसरन्ती दृश्यते ।

क्रीडन्ती विविधासु दिक्षु सततं राजाश्रये मन्दिरे
स्वातन्त्र्येण समुल्लसन्त्यपि पुना रङ्गप्रभोल्लासिता ।
आ भासाद् भरतेन तेन मुनिना या पितृवत् पालिता
नीता योन्नतिमद्भुता सुकविभी रङ्गायती राजताम् ।



# राजकीयो रङ्गः

आ महाभारतकालादेव राज्याश्रयं प्राप्य नाट्यं कमपि प्रकर्षमातनुते स्मेति पूर्वं निरूपितमेव। राजानः स्वयमेव नृत्तगीतवादित्रादिविचक्षणा अभूवन्। एवं स्थिते नाट्यप्रदर्शनादिषु तत्करणे योजने च पुनः पुनः तेषां प्रवृत्तिः स्वाभाविकी अभूवन्। सुप्रथितं विद्यते बृहत्कथादौ भासादिषु वा राज्ञ उदयनस्य वीणावादननैपुण्यम्। १५० ई० पू० काल उत्कीर्णायां हाथी-गुम्फाप्रशस्तौ खारवेलनृपतिरपि गान्धर्ववेदविचक्षण इति वर्णितम्ः तद्विजय-मुपलक्ष्य नृत्य–गीत–वादित्रमायोजितम्। चतुर्थशतके समुद्रगुप्तस्य वीणा-वादने प्रवीणता प्रथिता अभवत्। स्वमुद्रास्वसावुपवीणयन् मुद्रितः।

राजसभासु कवयो नाट्यकारो नाट्याचार्या नर्तका गणिका नटाश्च सबहुमानं पदमलभन्त इति सोमेश्वरस्य मानसोल्लासे[1] राजसभावर्णनात्, स्पष्टमेव। नाट्यकारेषु भास इदम्प्रथमतया स्वप्रतिभा-भासा राजसभां समाजयतिस्मेति प्रतीयते। तस्यरूपकेषु राजकीया रङ्गशाला तत्रत्याश्च प्रयोगाः स्पष्टमेव सूचिताः। तद्यथा प्रतिमायां प्रतीहारी प्राह—

'सारिके, सङ्गीतशालां गत्वा नाटकीयान् विज्ञापय—कालसंवादिना नाटकेन सज्जा भवत इति।'

एतेन राजप्रासादे सङ्गीतशाला भासस्य काले निर्मीयते स्म, तत्र नटा नित्यं नाट्यमभ्यस्यन्ति चेति ज्ञायते। इमे नटा 'नटाकीया' इति प्रोक्ताः। एते तत्क्षणं–सूचनां प्राप्य यथेप्सितं यत्किमपि नाटकं आशु अभिनेतुं समर्था आसन्निति सर्वथा परिपक्वा तेषां नाट्यसाधनासीदित्यप्युपर्युक्तसंवादा-ज्ज्ञायत एव।

अस्मिंश्च नाटकीयसमाजे उभयात्मिका प्रकृतिः सङ्गता बभूव, स्त्रियो-ऽपि तत्र नियोजिता यथोचित-व्यापारेष्वित्यपि भासः सूचयति। प्रतिमाया-मेव नाटकीयेषु प्रसाधनादिसामग्रीसंचयाय नियुक्ता 'नेपथ्यपालिनी' तेन चित्रिता। आर्यरेवाख्येयं नेपथ्यपालिनी चेटिकया कयाचन चोरयित्वा नीते स्वसङ्ग्रहात् वल्कलवस्त्रे, सीतायां च देव्यां परिहासेन तत् परिदधानायां,

---

१—मानसोल्लासे ११।२, गायकवाड ओ० सी०, पृ० १०५

ससम्भ्रमं नूतनवल्कलवस्त्राणि देव्याः कृते प्रेषयति। एतेन च नेपथ्यपालिस्या सङ्ग्रहे सर्वविधपात्राणां कृतेऽनुरूपाणि परिधानानि सन्निधापितानीति नाटकीयानां साधनसम्पन्नता सूचिता भवति। भास इव कालिदासोऽपि स्वकाव्यकृतिभिः राजसभाया नाट्यमण्डपं मण्डयति स्म। तस्य समये नाट्याभिनय-प्रगतिः, प्रेक्षागृहविन्यासः, जवनिकासौष्ठवसङ्गीतक-कुतप-गीत-नृत्यादीनां प्रयोगविधिरित्येतत्सर्वमस्माभिः कालिदासीयरूपकत्रयमुपजीव्य 'कालिदासीयनाट्यविधान' मिति लेखे विस्तरशो निरूपितमेव।[1]

मध्यकाले सामन्ताः सम्पन्ना नागरिका गणिकाः श्रेष्ठिनश्च स्वभवनेषु प्रेक्षागारान्निर्मापयामासुर्यत्र स्वैरं नाट्याभिनयादिकमायोजितम्। शूद्रकेण मृच्छकटिके वसन्तसेनाया भवने स्थिता सङ्गीतशाला वर्णिता यत्र युवतयो गायन-वादन-नाट्याभिनयादिकमभ्यस्यन्त्यो ददृशिरे।

'पादताडितके' नाम्नि भाणे गणिकाभिः प्रयुक्ता प्रेक्षोल्लिखिता। इयं च प्रेक्षा वेश्याध्यक्षभवने समायोजिता। 'उभयाभिसारिकायाम्' रामसेना स्वतनुजां चरणदास सङ्गीतकव्याजेन गृहमाकारयति।[2] सङ्गीतकं नाम गेयरूपकमित्यपि तत्रैव विशद्यते। प्रियङ्गुसेना विटं सूचयति यदद्य तया राजसभायां पुरन्दरविजयं नाम सङ्गीतकमनुष्ठेयमिति।[3] सङ्गीतकाभिनये गणिकाः परस्परेण स्पर्धन्ते। स्पर्धां श्रुत्वा विट आह—

'अहो देवदत्ताया अकुशलता या त्वया सह संघर्षं कुरुते। यस्यास्तावत् प्रथमं रूपश्रीनवयौवनद्युतिकान्त्यादीनां गुणानां सम्पत्, चतुर्विधाभिनयसिद्धिः द्वात्रिंशद्विधो हस्तप्रचारः अष्टादशविधं निरीक्षणं, षट्स्थानानि, गतिद्वयं अष्टौ रसाः त्रयो गीतावादित्रलया इत्येवमादीनि नृत्ताङ्गानि त्वदाश्रयेणालङ्कृतानि।'

संवादेनानेन तदानीन्तना गणिका नाट्यशास्त्रनिरूपिताभिनयपद्धतिं सर्वाङ्गरूपेण सम्यक् शीलयन्ति स्मेति ज्ञायते। अन्यत्रोभयाभिसारिकायामेव 'मदनाराधनं' नाम सङ्गीतकस्य प्रयोगः ख्याप्यते[4] गणिका नाट्यशास्त्रमध्यापयितुमाचार्या नियुक्ताः। दिवङ्गते श्रीहर्षनृपतौ तत्सभायां नियोजितो

---

१—सागरिका १६।४

२—चतुर्भाणी, पृ० १२३–२४

३—तत्रैव १४१–४२

४—तत्रैव पृ० १२३

नाट्याचार्यो वाराणस्यां मञ्जयाख्यगणिका नाट्यं शिक्षयन्नाजीविकां निरवाहयदिति कुट्टनीमत-काव्याद् ज्ञायते। नाट्याभिनयादेव गणिका तदानीं 'पात्री' त्यपरनाम्नापि विज्ञाता।[1] नाट्याभिनयार्थं गणिका राजसभासु देवगृहेषु च सादरं निमन्त्रिताः। मेघदूते वेश्याः महाकालमन्दिर-सान्ध्यपूजायां नृत्तं कुर्वाणा वर्णिताः। चतुर्भाण्यां मदनाराधन नाम सङ्गीतकं भगवतो नारायणभवने गणिकाभिरनुष्ठितमिति सूच्यते।[2]

दशमशतकभवस्य राजशेखरकवेः रूपकाणि तदाश्रयदातुः नृपतित्रयस्य सभासु यथाक्रमं प्रयोजितानि इति प्राक् सूचितमेव। राजशेखरीयरूपकेभ्यस्तत्कालिकं राजसभाया नाट्यमण्डपं मत्तवारणी ध्रुवागानपद्धतिं प्रसाधनसामग्री चर्चरीं एवमेव बहूंश्च नाट्यविषयानधिकृत्य अवितथं ज्ञानमुपलभ्यते इत्येतत्सर्वमस्माभि 'र्यायावरीयं नाट्यवृत्त' मिति लेखे विस्तरशः प्रपञ्चितमेव।[3] राजसभासु कथं नाट्यकर्म उन्नतपदमधिरोहति स्मेति कथासरित्सागरेऽप्यनेकत्र सूचितम्।[4]

विद्यापतेः 'पुरुषपरीक्षायां' एकादशशतकभवस्य बङ्गनृपतेर्लक्ष्मणसेनस्य राजसभायामुत्तररामचरित-छायाङ्कस्याभिनयो वर्णितः। तद्यथा—

'बभूव गौडदेशे लक्ष्मणसेनो नाम राजा। तस्योमापतिधरो नाम मन्त्री गन्धर्वनामा नटश्चासीत्। एकदा राज्ञः सभावसरे स नटः कृतस्नानश्चन्दनबिन्दुभूषितललाटस्तत्राजगाम। तं दृष्ट्वा मन्त्रिणा कौतुकेनोक्तम्—अये गन्धर्व सबिन्दुमौलिर्दृश्यसे। तत्किं नटं नाम? गन्धर्व उवाच—उमापतिधर, पश्य मे कण्ठे चन्दनबिन्दुं, तस्मान्नटोऽस्मि'। एतेन त्वमुमापतिधरो नाम वृषापरपर्यायः अहं तु नटोऽ र्धच्छिद्रकरोऽस्मि त्वदारोहणकर्तेति सूचितम्। तच्छ्रुत्वा राजा स्मेराननो बभूव। मन्त्र्युमापतिधरश्चुकोपोवाच च—अरे नटाधम, चारण जायाजीव कथमेतादृशं प्रगल्भं वदसि। तव वचनेनाहमुमापतिधरस्तत्किमनड्वान् भवामि। नट उवाच—भवताप्युक्तं यथा ककारः शिरोबिन्दुना 'कं' भवति तथा त्वमपि नटमिति। नटं तु कुपठितं मूर्खं क्लीबं चाभिधत्ते। तदुत्तरं मया कृतं यदहं

१—तत्रैव, पृ० १६२

२—तत्रैव, पृ० १२३

३—सागरिका १८। १-२

४— क० स० सा० १२।४, १२।७

बिन्दुद्वयात्मकेन विसर्जनीयेनालङ्कृत क इव नटः सर्वज्ञो भवामि ।' उमापतिधर उवाच--'सर्वज्ञोऽसि तर्हि नाट्य भवभूतिकविकृतस्योत्तररामचरितनाटकस्य छायाभिधानमङ्कमाश्रित्य रामचेष्टितम् । नट उवाच–नाटयिष्यामीति । राजा सकौतुकस्तस्मै नटाय तथा कर्तुमाज्ञा ददौ । पश्चाद् वृत्ते रङ्गावसरे रामभूमिका परिगृह्य नटो नृत्यमारेभे । नृत्यंश्च सीतास्पर्शार्थी स्पर्शमनासाद्य भूमौ निपतितो रामतादात्म्यात्तनुं त्यक्त्वा मुक्तो बभूव ।'

धारानृपतिर्भोजराजः सदैव स्वसभायां नूतननाटकप्रयोगाय सोत्सुकोऽभवत् । तेनाभिनयार्थं समस्तराजविडम्बननाटकमिति कथितानि प्रहसन-कोटिकरूपकाणि स्वयं निर्मापितानि, येषु विभिन्नराज्ञां चेष्टादिकं हास्योद्रेकायानुकृतम् । एवमेव स्वसिद्धरसनिर्माणक्षमत्वं ख्यापयतां योगिनां विषयेऽपि नर्ममर्मनिर्भरं नाटकं भोजेन नाटितमिति सर्वं मेरुतुङ्गाचार्यस्य प्रबन्धचिन्तामणौ विवृतम् । भोज पूर्ववर्ती सिद्धराजोऽपि नियमितं नाट्य-प्रदर्शनाय नाट्यशालां निर्ममे ।

राजसभासंस्था नाट्याचार्या अपि नूतननाटक–प्रयोगकुतूहलात् तन्मातृकोपलब्धये वा सुदूरं प्रोषिता इति गङ्गाधरकृत--गङ्गाप्रतापविलास--नाटकाद् ज्ञायते। नाटकमिदं १४४९ ई० वत्सरे चम्पानेरनृपतिगङ्गा-प्रतापस्य मोहम्मदशाहोपरिविजयमुपलक्ष्य कालीमन्दिरेऽभिनीतम् । एत-द्वितीयाङ्के राज्ञो गङ्गाप्रतापस्य राजसभायां नाट्यरसिको नाम नाट्याचार्यः सनाट्यं प्रविशति । नाट्याचार्योऽयं विजयनगरराजसभायामुषितपूर्वः । तत्र च चम्पानेरनृपतिना स्वजीवनचरितात्मकं नाटकं किमपि लेखापितं तत्प्रयोगमसौ कारयितुमिच्छतीति कर्णाकर्णिकया श्रुत्वासौ विजयनगरात् चम्पानेरं प्रति प्रस्थित इति स्वयमेवासौ राजानं सूचयति ।

दशमशतके राज्ञः कुलशेखर वर्मणो रङ्गेऽतिमहदुद्यमः दक्षिणेषु सुप्रथितमेव । न केवल तपतीस्वयंवर–सुभद्राधनञ्जय–रूपकद्वयरचनयाऽपि तु केरलेषु कूडियाट्ट–रङ्गमञ्च–परम्परा प्रवर्तकत्वेन नटानामाश्रय-दातृत्वेन रङ्गपरिष्कारेणाप्यसौ नृपतिर्जयते ।

राजसभाश्रित–पण्डितपरिषदः प्रभावेण तदन्तर्वर्तिरूपकेषु कलात्मकं सौष्ठवं मनोहारिता च लसतः । मुद्राराक्षस–मृच्छकटिक-सदृशयथातथ्यनि-रूपकाणां रचनापि राजसभानाट्यमण्डपान्तर्गतमेव सम्वोभवति । शास्त्रीय-दृष्ट्या राजसभायां नाट्यप्रयोग· परमं परिष्कारं प्रापितः । तदानीन्तना राज्याश्रिताः पण्डिता राजकुमारा गणिकाद्यश्च कथं भारतीयं नाट्यशास्त्रं

शीलयन्ति स्मेति जिनेश्वरसूरिकृतकथाकोशे वर्णितात् प्रसङ्गाद् ज्ञायते। काचित् गणिका राजकुमारसिंहसमक्षं स्वनृत्यं दर्शयति स्म। नाट्यशास्त्रमनुसृत्य तया चतुःषष्टि हस्तमुद्रा अक्षि-भ्रू-नासा-कपोलादिमुद्राश्चाभिनीताः। अनन्तरं कियन्नाट्यशास्त्रमनेन राजपुत्रेणाधीत-मिति कुतूहलात् कुसृतिपरायणया तया जानन्त्यापि कपोलभङ्गस्थाने ताराभङ्गोऽभिनीतः। तत्क्षणमेवासौ राजपुत्रस्तां निवार्यापृच्छत्—कतमं शास्त्रमनुसृत्य नृत्यति भवती ? साप्याह—"भरतनाट्यशास्त्रम्" राजपुत्रः सहेलमवादीत्—मया समग्रं नाट्यशास्त्रं सम्यगधीतम्, स्मर्यते च तत्सर्वमपि, न तत्र स्खलनमनुमतम्" इति।

राजसभा-नाट्यमण्डपानुशीलनेन "भारतेषु नाट्यमण्डपाः पुरा न निर्मिता' इति पाश्चात्यविदुषां मतमपास्तं भवति। न केवलं भासकालिदासादिभिः राजप्रासादान्तर्वर्ति-रङ्गशाला वर्णिता, सङ्गीतरत्नाकर-शिल्प रत्नप्रभृतिग्रन्थेष्वपि सा निरूपिता, प्रत्यक्षमेव राजश्री रङ्गशालानिर्माणमप्यनेकत्रोल्लिखितम्। लिङ्गन्नकृते-कर्नाटकभाषायाः कालडीनृपविजयकाले ( १७६३ ई० ) वेङ्कटप्पराज्ञा इक्केरीतिस्थाने नाट्यशाला निर्मापितेति वर्णितम्। मैसूरनृपतिनरसरावः ( १६३८-१६५६ ई० ) स्वप्रासादे नाट्यशालां स्थापयति स्मेति गोविन्दवैद्यः सूचयति। विजयनगरराजप्रासादेऽपि नाट्यमण्डप आसीत्। तथैव तञ्जौरराजप्रासादेऽपि। मुकुडशिलालेखेन ( १०४५ ई० ) धारवाडसमीपं मुकुटनाम्नि स्थाने राजादेशेन नाट्यमण्डपनिर्माणं ज्ञायते। एतैश्च प्रमाणै राजश्री रङ्गशाला आ महाभारतकालात् आमध्यकालं यथावसरं मुहुर्मुहुः कारिता इति सिद्धम्। नागार्जुनीकोण्डायामुत्खनिता रङ्गशाला तु महाभारतोक्तधृतराष्ट्रनिर्मितप्रेक्षागारस्य स्मारयति। वस्तुतो भारतीयरङ्गो राज्ञामवदानं कलासमृद्धय अलमभवदिति निश्चप्रचम्।

❁

# देवालय–रङ्गः

प्रमुखदेवालयेषु पुरा प्रेक्षागारा अवश्यं निर्मिताः। विष्णुधर्मोत्तर–पुराणानुसारेण प्रेक्षागृहं देवालयस्योत्तरतः स्यात्।[1] तत्राधिष्ठातृदेवस्य यात्रामहसि आसन्न अहानि नाट्याभिनयो बभूव। स चैवं वर्णितो विष्णु–धर्मोत्तरे–

'अथ देवयात्राविधिर्भवति।...यस्या देवस्य या तिथिः स्वकीया उक्ता तस्य तस्यां तिथौ यात्रां कुर्यात्।'''शुभेऽह्नि विनायकपूजनं कुर्यात्। द्वितीयेऽह्नि ग्रहर्क्षपूजनं, तृतीयेऽह्नि नागपूजनं, चतुर्थेऽह्नि प्रमथपूजनं, पञ्चमेऽह्नि ब्राह्मण-पूजनं दीनानाथदानं च, षष्ठेऽह्नि स्नपनम्। तत्र वृहत्स्नपनं कृत्वा सर्वे एव नागरा जना सुशुक्लवाससः पवित्रकृतपाणयः महता वाद्यघोषेण सुभगानर्तितेन सरत्सरित्प्रस्रवणागारं नगरसन्निकर्षमासन्नतमं गच्छेयुः। तस्मादुदककलशा-नादाय गजपृष्ठगतान् वा वाससा शुभेनाच्छादितान् प्रवेशयेत्। प्रवेश्य श्रीभगवन्तं स्नापयेत्। भोगनिधि पूर्वकेण प्रतिष्ठान्तेन विधिना पूजयेत्। नृत्त-वाद्य-गीतैश्च श्रीभगवन्तमर्चयेत्। ततो यात्रादिने प्राप्ते प्रतिमाख्यां...अश्वैर्दा-न्तैर्व्यायतैर्वापुरुषैर्नगरे भ्रामयेत्।....एवं नगरे सम्भ्राम्य चिह्नागमं ज्ञात्वा प्रतिष्ठायां प्रतिमार्चायां महदुत्सवं कुर्यात्। द्वितीयदिवसादारभ्य यावत् सामर्थ्यं प्रत्यहं नट–नर्तक–मल्लैन्द्रजालिकादीनां प्रेक्षापूर्वकं धनं दद्यात्। प्रेक्षाकाले च ेक्षकं जनं माल्य-ताम्बूलानुलेपनादिदानेनार्चयेत्। अदृश्याना प्रेक्षाकाणां भूतानां रङ्गा दिक्षु विदिक्षु सोदकमन्नाद्यं फलानि पुष्पाणि पललोल्लापिका मोदकानि विकिरेत्। प्रेक्षकाणां यथागतानां च श्रेयश्चास्तोत्युदीरयेत्। यथागताः प्रेक्षकाः आगामिनी यात्रा पश्यन्त्वित्युदीरयेत्"।[2]

देवालया वस्तुतो विविधकलात्मकप्रवृत्तीनां प्रवर्तनकेन्द्रत्वेन नियोज-कत्वेन च तदानीं समुल्लसन्ति स्म। न केवलं यात्रापर्वसु अन्यदापि अनेकशो देवालयेषु प्रेक्षा आयोजिताः। कथासरित्सागरे ईश्वरवर्मा नाम वणिक्पुत्रः काञ्चनपुरे कस्मिंश्चिद् देवालये प्रेक्षणकमपश्यत्। तत्र सुन्दरी

---

१—उदक्प्रेक्षागारम्—वि० ध० पु० पृ० २७३

२ –वि० ध० पु० तृ० खण्डे, ११७ अ०, पृ० ३५४

-नाम नृत्याङ्गना नटति स्म ।[१] नटगणिकादिभ्यः प्रेक्षावसरदानाय कथं सर्वदा सर्वकालेषु मन्दिरद्वाराण्यनावृतकवाटान्यभवन्निति कुट्टनीमत -काव्ये काश्यां विश्वनाथमन्दिरे रत्नावली–प्रयोगस्य विशद–वर्णनाद् विज्ञा- -यते । एतच्च सर्वमस्माभिः "कुट्टनीमते रत्नावल्याः प्रथमाङ्कस्य प्रयोग' इति -लेखे सविस्तरं प्रकटितमित्यलं पुनरावृत्या ।[२]

जैनमन्दिरेष्वपि यात्रोत्सवा आयोज्यन्त । त्रिलोकप्रज्ञप्ति नाम्नि जैनागमे जिनमन्दिरस्थानाट्यशाला वर्णिता । एकादशशतके कृतायां नर्मदासुन्दरी- कथाया जैनमन्दिरे यात्रोत्सवासरे प्रस्तूयमानानि नृत्य–नाट्यादीनि -वर्णितानि तद्यथा—

जिणमन्दिरेसु जम्मो अणवरअपयट्टगीअनट्टेसु ।
पत्तो पिच्छइ लोओ तण ण भावेइ सुरलोअम् ।
कत्थइ नच्चंति नडा कत्थइ कुद्दंति रासयं तरुणा ।
गायंति चच्चरीओ खिल्लाविज विविहकरणेहि ।
तह वट्टंते रंगे पिक्खणवक्खित्तमानसा लोआ ।
अन्नोन्न पेल्लणेणं इओ तओ विभरंति ।

— नर्मदासुन्दरीकथायां पृ० ८, २०, ४१-४२

तथैव कथाकोषप्रकरणे कुन्तला नाम राज्ञी स्व निर्मापिते जैनालये कथं नृत्य–नाट्यादि कारयतीति वर्णितम् ।[३]

केचन देवालया नाट्यशास्त्रानुशीलन–प्रयोगविधिशिक्षणयोश्च महान्तो- विद्यापीठाः सञ्जाताः । यथा उत्कलेषु जगन्नाथमन्दिरे जयदेवकविकृत– गीतगोविन्दनाट्यप्रयोग आसहस्राब्दं परम्परया नियमितं क्रियत अशिक्ष्यत तथैव तत्प्रयोगस्य शुद्धिरपि तथैव बहुकालं संरक्षिता । उज्जयिन्या महाकाल- मन्दिरमप्येवमेव नाट्य–कलाश्रयस्थाने प्रतिदिवसं महाकालस्य सान्ध्ये

१—क० स० सा०, १०१९, पृ० २९७
२—सागरिका १४।४
३—त्रिलोकप्रज्ञप्ति, ३।२२-६३
४—कथाकोषे पृ० १३० ।

पूजाविधौ गणिका नर्तनाय समुपतस्थुः। मेरुतुङ्गः प्रबन्धचिन्तामणौ—राजा विक्रमादित्योऽस्मिन् महाकालमन्दिरे नाट्यावलोकनार्थं प्राय आगच्छदिति वर्णयति।[1] पञ्चतन्त्रस्य मित्रभेदे पञ्चमकथायां कस्मिंश्चिद् देवालये यात्रामहोत्सवो वर्णितः, यत्र "नटनर्तकचारणसङ्कुले नानादेशागतजनावृते" देवतायतने महान् सम्मर्दः समजनि।

देवतायतनविततेऽस्मिन् नाट्यविलसिते राजानोऽमात्याः श्रेष्ठिनश्च साहाय्यमचरन्। भोजस्य समये कश्चिच्छ्रेष्ठी शिवालये नाट्यं समायोजयति स्म। एकदा नृपतिरपि तत्र प्रेक्षार्थं गतवान्, नाट्यप्रस्तावनायां तस्य श्रेष्ठिनः सम्पत्तिवर्णनमुपश्रुत्य 'कथमहमपहरेयमस्य वित्तजात'-मिति वासना भोजराजस्य चेतसि प्रादुरभवदिति मेरुतुङ्गो[2] वर्णयति।

दक्षिणेषु केरलीयदेवालया आसहस्राब्दमिदानीं यावत् परम्परासम्मतं नाट्यशास्त्रानुसारि संस्कृतनाटकानां प्रदर्शनं प्रथयन्ति। तत्र भासस्य रूपकाणि, सौगन्धिकाहरणं, तपतीस्वयंवरं, भगवदज्जुकं, मत्तविलासमाश्चर्यचूडामणिश्चेत्यादीनि बहुधाऽनुष्ठीयन्ते। एतादृशा बहुसंख्यका देवालयाः त्रिचूर-कोट्टायम्—एर्णाकुलम्—अलेप्पी प्रभृतिजनपदेषु अवस्थिताः। देवायतनेषु नाट्यशास्त्रानुशीलनं यथैकनिष्ठयाक्रियत तथा चिदम्बरस्थ-नटराजमन्दिरे भरतनिरूपितानां १०८ करणानां प्रतिमाभिः तत्सम्बन्धि-नाट्यशास्त्रस्य लक्षणश्लोकानां च प्रत्येककरणस्या [illegible] उत्कीर्णत्वाद् विज्ञायते। शारदातनयेन चोलराजानां शासने शारदामन्दिरे रूपकोपरूपकाणां प्रयोगान् स्वयं विलोक्य "भावप्रकाशे" तान् वर्णितवान्।

यथा राजकीय-नाट्यमण्डपे प्रयुक्तानां नाटकानां संविधानं राजवृत्तेन प्रभावितम्, तथैव देवालयस्थनाट्यमण्डपार्थं विरचितानां रूपकाणां संविधानमपि तदनुरूपतां गतम्। तथाहि—भवति-मुरार्यो रूपकाणि देवालययात्रोत्सवे प्रयोगार्थं विरचितानि रामायणीयेन वस्तुनोपजीवितानि। भवभूतेर्मालतीमाधवं तु लोकप्रियां बृहत्कथान्तर्गामिनः कथामेकामनुसरति। राजकीये मण्डपे तु स्वल्पा एव अमात्यादयः कवि-पण्डिताश्च सभ्याः प्रेक्षकाः, देवालयमण्डपे पुनः यात्रोत्सवे समागता सहस्रशो लोकाः। अत एव लोकरुचिमपेक्ष्य प्रावर्तत देवालयमण्डपार्थं रचितानां रूपकाणां

१. प्रबन्धचिन्तामणौ पृ० ८

२. तत्रैव।

वस्तुविन्यासः प्रयोगविधिश्च । कूडियाट्टरङ्गमण्डपे नाटकस्य प्रस्तावनायां केवलं विदूषकस्यैवाभिनयः बहूनि दिनानि प्रचलति । नाटकस्य संवादेष्वपि विदूषकस्यः विचित्रा संवादांशा प्रयोगं रञ्जयन्ति ते। पुनर्मूलरचनामनपेक्ष्यैव विजृम्भन्ते । एवमेव अभिनयविधिरपि असंस्कृतज्ञाः प्रेक्षका अपि संस्कृत-संवादमगच्छन्त्विति धिया विशिष्ट प्रकारेणैव विकासितः केरलीयैश्चयारैः ।

मन्दिरस्थ-नाटमण्डपस्य रचना कथं नाट्यकारेण कल्पितं वस्तुविधानं विशेषयतीति गङ्गाप्रताप-विलासनाटकाद् विज्ञातुं शक्यते। नाटकमिदं चम्पानेरदुर्गस्थ महाकालीमन्दिरमण्डपे प्रायुञ्जि। नाटकस्य प्रथमाङ्के कालीमन्दिरस्यैव दृश्यं विलसति। वास्तविके कालीमन्दिरेऽनुष्ठीयमानं कालीमन्दिरविषयनाट्यं कमपि चमत्कारं तनुते। अस्मिन्नेवाङ्के पूजकः ब्राह्मणान् महाकालीपूजनं विधातुं प्रेरयति, कालीपूजा च नाटके विधीयते। द्वितीयाङ्केऽपि नायको भगवत्या दर्शनार्थं तदेव मन्दिरं प्राप्नोति। संवादेषु मन्दिरभित्तिपूत्कीर्णा विविधदेवानां प्रतिमाः सूचिताः। ताश्च प्रतिमा वस्तुतस्तत्र स्युरिति प्रेक्षकाणां कृते स्वाभाविकं दृश्यविधानं निर्मीयते।

नाटकस्य षष्ठाङ्के युद्धस्य दृश्यं विस्तारितम्। मन्दिरप्राङ्गणे स्थानस्यावकाशात् तदभिनेतुं सम्भावितमिति प्रतीयते। सप्तमाङ्के मोहम्मदः गजाख्-चम्पानेर दुर्गमाक्रममाणः प्रदर्शितः। एतत्सर्वं मन्दिरप्राङ्गणस्य विशालत्वादेव सम्भाव्यते।

भरतेन अमृतमन्थनसमवकारः त्रिपुरदाहो नाम डिमश्च शिवस्य समक्षं हिमवतः निसर्गरम्ये स्थले प्रयोजितौ—

ततो हिमवतः पृष्ठे नाना नगसमाकुले।
बहुचूतद्रुमाकीर्णे रम्यकन्दरनिर्झरे॥
पूर्वरङ्गे कृते पूर्वं तत्रायं द्विजसत्तमाः।
तथा त्रिपुरदाहश्च डिमसंज्ञः प्रयोजितः॥

( ना० शा० ४।६, १० )

तत्रैव शिवोऽपि स्वशिष्यान् तण्डुप्रभृतीन् नाट्यं समुपदिशति स्म। एतेन मनुष्यनिर्मितकृत्रिमभित्त्यादिविरहितायामकृत्रिमायां निसर्गरङ्गशालायामपि तदानीं नाट्यं समुल्ललासेति ज्ञायते। भरतेनापि प्रथमं स्वनाट्यप्रयोगा मानवकृतप्रेक्षागृहं विनैव मुक्ताकाशमधोऽनुष्ठिताः। पश्चादसुरैः कृते विघ्ने रङ्गशाला सुरक्षार्थं निर्मातव्येति विचारः समुदियाय। सञ्जातेऽपि कृत्रिमप्रेक्षागृहस्य प्रादुर्भावे निसर्गरङ्गशाला रसिकानरञ्जयदिति परम्परा दृश्यते। तद्यथा कालिदासीयौ पार्वती–परमेश्वरौ हिमवत उपत्यकायामप्सरसां प्रयोगं ददर्शतुः—

तौ सन्धिषु व्यञ्जितवृत्तिभेदं रसान्तरेषु प्रतिबद्धरागम्।
अपश्यतामप्सरसां मुहूर्तं प्रयोगमाद्यं ललिताङ्गहारम्॥

( कुमार० ७।९१ )

वस्तुतो कान्तारेषूपत्यकासु पर्वतकन्दरासु हिमवतः क्रोडे वा यथा तपस्विनां वसतिस्तथैव नटानां नर्तकानामप्सरसामपि वा निवासस्तेषु। सम्पन्ना नागरिका अपि तत्र विहारार्थं न्यवसन्निति मेघदूते शिलावेश्मानि प्रमाणयन्ति। तथैव च नृत्यनाट्यादीनामभ्यासाय विविध–ललित–शिल्प–कलानां चाभिव्यक्तयेऽपि पर्वतकन्दरा उपयुक्ताः। तद्यथा–औरङ्गाबादगुहायां नर्तनरता नर्तकी तत्र प्रवर्तितं नाट्यव्यवसायं सूचयति। उदयगिरिखण्डगिरि-गुहा अपि तथाविधा एव। नासिक–गुहायां तु 'अत्र नृत्यादिक प्रयुज्यत' इति सूचयन् लेख प्राप्यते। तथैव जूनागढगुहायामपि नृत्यं नाट्यं चाक्रियतेति प्रमाण्यते। पर्वतगुहासु नटा नर्तक्यश्चावसन् तं च तत्रैव स्वकलामाकलयन्निति मध्यप्रदेशस्थाम्बिकापुरे जोगीमारा–सीतावेंगागुहाभ्यां सम्यग् ज्ञायते। अत्र खिस्तात् द्विशतवर्षपूर्वकालिकं शिलालेखद्वयं तदानीन्तनाः कलात्मकप्रवृत्तीः सङ्केतयति। तद्यथा—

(१) अदि पयंति हृदयं समाव गुरु कवयो ए रातयं ।
दुले वसंतिया । हासावनुभूते ।
कुदम्फतं एक अलगं (त)।

(२) सुतनुका नाम देवदाशिक्यी । 'तम कमयिश
वालानशेये देवदिन्न नाम लूपदक्खे ।

एतेन प्रथमगुहायां वसन्तोत्सवेषु कवयो हृदयावर्जकेन काव्यपाठेन रसिकान् रञ्जयन्ति स्मेति प्रतीयते। द्वितीयायां पुनः सुतनुका नाम देवदासी उवास, वाराणसेयो देवदत्तो नाम रूपदक्षश्च तां चकमे। रूपदक्ष इति विशेषणेन तस्य नाट्यादिषूपयुज्यमानं प्रसाधन-परिधान-विधि-नैपुण्यं परिचीयते।

गुहेयं नाटचप्रदर्शनाय तदानीमुपयुक्ता वा न वेत्यत्र अध्येतारो विप्रतिपद्यन्ते। वस्तुतो गुहाद्वारे जवनिका-बन्धनाय भूम्यां कृत छिद्रद्वयं, गुहाभ्यन्तरे प्रेक्षकाणामुपवेशनार्थं सोपानाकृतिपीठकानि आसनानि, तत्सम्मुखं च रङ्गपीठमित्येतत्सर्वमस्या गुहाया प्रेक्षायोग्यत्वं प्रमाणयति। तथापि गुहान्तः प्रायशः चत्वारिंशत्संख्यकाः प्रेक्षका एव स्थातुमर्हन्ति इत्यत इयं न जनसाधारण-प्रेक्षणाय स्यात्। किन्तु गुहायाः पुरो विस्तीर्णं क्षेत्रं अभितश्च तत् सोपानाकृतिपीठकान्यासनानि निसर्गत एव उपस्थापयन्त्य उपत्यका इति समुचितेयं रङ्गस्थली। जनपदेभ्यो विप्रकृष्टत्वात् कथमत्र सहस्रसंख्यकानां प्रेक्षकाणामागमनं सम्भाव्यत इति चेत्, निकषा गुहास्थलं देवालयस्य विद्यमानत्वात् तद्यात्राप्रसङ्गे सम्भाव्यते नाना दिग्भ्यो जनानामागमनं तन्मनोरञ्जनाय चाभूत् गुहायां सुतनुका-प्रभृतीनां नाटकीयानां वसतिरिति दिक्।

# वेदस्य गौरवम्

डॉ० व्रजविहारी चौबे

वेदो विश्वस्य प्राचीनतमः पवित्रतमश्च ग्रन्थोऽस्ति। भारतीय परम्परायां तस्य प्रामाण्यं सर्वैर्हिन्दुसम्प्रदायैः समानरूपेणाभ्युपगतं तस्य परमेश्वरनिश्वासोद्भूतत्वात्। मानवस्य कल्याणार्थं यः कोऽपि धर्मः प्रवर्तितस्तस्याधारो वेद एव। उक्तं च मनुना—'वेदोऽखिलोधर्ममूलम्' (मनु० २.६) इति। वेदनाम दिव्या वाणी स्वयं परमात्मनाकृता। उक्तं च भगवता कृष्णद्वैपायनवेदव्यासेन महाभारते—

अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः॥
(महा० शा० २४४-५५)

ज्ञानार्थको लाभार्थकश्च विद् धातोर्निष्पन्नोऽयं वेदशब्दो ज्ञानस्य वाचकः। ऋग्वेदप्रातिशाख्यवर्गद्वयवृत्तेः प्रस्तावनायामुक्तं विष्णुमित्रेण—'विद्यन्ते जायन्ते लभ्यन्ते वा एभिर्धर्मादिपुरुषार्था इति वेदाः' इति। अर्थात् येन ग्रन्थेन धर्मार्थकाममोक्षाख्याश्चतुर्विधपुरुषार्था ज्ञायन्ते प्राप्यन्ते वा स ग्रन्थो वेदः। सायणाचार्येणाप्ययमेवाभिप्रायोऽत्र प्रकटितः 'इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति स वेदः' (ऋ० भा० भूमिका) इति। किं नाम वेदस्य वेदत्वमिति ज्ञापयितुं सायणाचार्येणैकः श्लोक उद्धृतः —

प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।
एतं विदन्ति वेदेन तस्माद् वेदस्य वेदता॥

वेदः सर्वासां विद्यानां, सर्वेषां ज्ञानानां चाक्षयो निधिः। सर्वाः संस्था व्यवस्थाश्च वेदादेव प्रसिद्धा इत्युद्घोषयति मनुः —

सर्वेषां तु नामानि कर्माणि च पृथक् पृथक्।
वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे ॥

( मनु० १-२१ )

वेदस्य किं स्वरूपमिति विषये बहवो विचारा प्रकटिता विद्वद्भिः। आपस्तम्बबौधायनाचार्याभ्यां सर्वप्रथमं 'मन्त्रब्राह्मणयोर्वेदनामधेयम्' इति मन्त्रब्राह्मणोभयात्मकं स्वरूपं वेदस्य निर्धारितम्। अनन्तरं वेदस्येदं लक्षणं सर्वैः सूत्रकारैर्मीमांसकैर्भाष्यकारैश्चापि यथावत् स्वीकृतम्। परमधुना तु त्रिविधानाम् ऋग्यजुः साम्ना संकलनरूपाणाम् ऋग्वेद-यजुर्वेद-सामवेदाथर्ववेदाख्याना चतसृणा संहितानामेव वेदत्व समाम्नातम्। ब्राह्मणानि मन्त्रव्याख्यानानि मन्यन्ते। सहितासु ब्राह्मणग्रन्थेषु च ऋग्यजुः सामरूपं त्रिविधमन्त्रात्मक स्वरूपमपि वेदस्य कथितम्—'त्रयी विद्या', 'त्रयो वेदाः' चेति वस्तुतो वेदस्वरूपविकासक्रमस्य तिस्रोऽवस्था सन्ति। प्रथमावस्थायां वेदशब्देन त्रिविध मन्त्रात्मकं स्वरूपमवगम्यते। चतसृष्वपि सहितासु यत्र यत्र ज्ञानस्य वाचको वेदशब्द उद्धृतस्तत्र तत्र स त्रिविधमन्त्रात्मकस्वरूपस्यैव ज्ञापकः। ब्राह्मणग्रन्थेषुद्धृतानि 'त्रयो वेदाः', 'त्रयी', त्रयी विद्या' इत्यादि वचनानि अपि वेदस्य त्रिविधमन्त्रात्मकस्वरूपस्यैव पुष्टिं समर्थयन्ति। यदा कृष्णद्वैपायनेन व्यासेन त्रिविधानां मन्त्राणां यज्ञसौकर्यार्थम् ऋग्वेद-यजुर्वेद-सामवेदाथर्ववेदा इति नामभिः चतस्रः संहिताः कृतास्तदा वेदशब्दश्चतसृणां संहितानां वाचकोऽभवत्। वेदस्य चतुःसहितात्मकं स्वरूपं वेदस्वरूपविकासक्रमस्य द्वितीयावस्था आसीत्। ब्राह्मणानि मन्त्राणां व्याख्या सन्ति। यत्र मन्त्रा व्याख्याताः तत्र तेषु यज्ञानां सम्यग् विवेचनमपि कृतम्। यज्ञः परमेश्वरस्य रूपम्, अत एव तस्य विवेचकानां ग्रन्थानामपि अस्ति वेदत्वं ज्ञानरूपात्मकत्वाद् इति सर्वे सूत्रकारा मीमांसका वेदभाष्यकाराश्च मन्यन्ते। वेदस्य मन्त्रब्राह्मणोभयात्मकं स्वरूपं सूत्रकाले एव प्रचलितम्। सूत्रकालात्पूर्वं ब्राह्मणकाले नासीद् ब्राह्मणानां वेदत्वम्। अत एव वेदस्य ऋग्यजुःसामात्मकं त्रिविधमन्त्रात्मकं स्वरूपं, तेषामेव मन्त्राणां संकलनरूपं चतुःसंहितात्मकं स्वरूपं च मुख्यतयाङ्गीकर्तव्यम्। ब्राह्मणानां तु वेदत्वं गौणरूपेणैवाङ्गीकर्तव्यम्।

अहो कियद् विशालमासीद् वैदिकवाङ्मयम्। प्रारम्भादेव भार-

तीयानामस्ति वेदं प्रत्यास्था श्रद्धा भक्तिश्च। न कोऽपि वेदस्याज्ञामुल्लङ्घयितु क्षमः। इतिहास-पुराण-स्मृत्यादीनां सर्वेषामपि धर्मग्रन्थानां प्रामाण्य तावदेव यावत् वेदमनुसरन्ति। वस्तुतस्ते वेदमेवोपबृंहन्ति। ते वेदस्य साधकाः। उक्तं च व्यासेन महाभारते—

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति॥

वेदस्याध्ययनं प्रवचनं च नित्यमेवकर्तव्यम्। उक्तं च महाभाष्यकारेण भगवता पतञ्जलिना—

'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति' इति। 'स्वाध्यायोऽध्येतव्य', 'स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्' इत्यादिवचनानि वेदस्यैव स्वाध्यायत्व प्रतिपादयन्ति। उक्तं च मनुना—

अनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः॥

वेदो जीवनयात्रायै धर्मस्य सुगमं श्रेयस्करं मार्गं दर्शयति। धर्मार्थकाममोक्षरूप-चतुर्विधपुरुषार्थस्य सम्यक् सिद्धिर्भवति वेदेनैव। यज्ञेषु देवतानां प्रीत्यर्थं वेदमन्त्राणां विनियोगेन पूर्णकर्मफलस्य सिद्धिर्भवति। उक्तं च यास्केन निरुक्ते—'कर्मसम्पत्तिर्मन्त्रो वेदे' इति।

वैदिकऋषय ऋत-सत्य-दीक्षा-तपो-ब्रह्मादीनां नानासूक्ष्मतत्त्वानां चिन्तनं मननं निदिध्यासनं च कुर्वन्ति स्म। सर्वे मानवाः कथ संघटिताः स्युरित्युद्दिश्य संघटनस्य महत् सूत्रं वेद उपदिशति—

संगच्छध्वं संवदध्वं स वो मनांसि जानताम्।
देवा भागं यथापूर्वं संजानाना उपासते॥

पारिवारिकैकताया मूलमन्त्रः परस्परमविद्वेष इति प्रतिपादयन् वेद उद्घोषयति—

सहृदयं सांमनस्यमविद्वेषं कृणोमि वः।
अन्यो अन्यमभिहर्यत वत्सं जातमिवाघ्न्या॥

अनुव्रतः पितुः पुत्रो माता भवतु संमनाः ।
जाया पत्ये मधुमतीं वाचं वदतु शन्तिवाम् ॥

मा भ्राता भ्रातरं द्विक्षन्मा स्वसारमुत स्वसा ।
सम्यञ्चः सव्रता भूत्वा वाचं वदत भद्रया ॥

( अथर्ववेदः ३.३०.१-३ )

अयं वेदस्य महिमा गरिमा च । पाश्चात्त्या अपि वेदस्य गौरवं स्वीकुर्वन्ति । मोक्षमूलर-विल्सन-गेल्डनर-मैक्डानल-कीथ-प्रभृतिभिः पाश्चात्यविद्वद्भिर्वेदस्य महत्त्वं मुक्तकण्ठं प्रतिपादितम् । तैर्वेदाध्ययनस्यानेकाः शाखाः प्रवर्तिताः ।

प्राध्यापक

विश्वबन्धुसंस्थानम्, होशियारपुर

# शाकुन्तलीयो नायकः

डॉ० कुसुम भूरिया

नाटयशास्त्रस्य ३४ तमे अध्याये भरतमुनिना पुरुषाणां स्त्रीणां च तिस्रः प्रकृतयो निरूपिताः।

समासतस्तु प्रकृतिस्त्रिविधाः परिकीर्तिताः।
पुरुषाणामथ स्त्रीणामुत्तमाधममध्यमाः॥

—ना० शा० ३४।१-२

अत्रैव नायकानां चत्वारो भेदा अपि परिगणिताः। ते चोत्तममध्यम-प्रकृतिद्वये विश्राम्यन्ति—

तत्र चत्वार एव स्युर्नायकाः परिकीर्तिताः।
मध्यमोत्तमायां प्रकृतौ नानालक्षणलक्षिताः॥

—ना० शा० ३४।१६

नाट्यशास्त्रानुसारेण नायकास्त्रिधा विभिद्यन्ते—

**प्रकृतिभेदात्**

उत्तममध्यमाधमाः ( ना० शा० अ० ३४ )।

**शीलभेदात्**

धीरोद्धत-धीरललित-धीरोदात्त-धीरप्रशान्ताः (ना० शा० अ० ३४)

**नायिकाप्रसङ्गाच्च**

अनुकूल-दक्षिण-शठ-धृष्टाः ( ना० शा० अ० २४ )।

दुष्यन्तोऽभिज्ञानशाकुन्तलस्य नायकः। स सत्त्वबलान्वितः प्रजापालकश्च नृपतिर्विद्यते। नायकभेदानामुपर्युक्तं विभागमनुसृत्य तस्य चरित्र-विश्लेषणं प्रस्तूयते।

## प्रकृतिभेदः

प्रकृतिभेदानुसारेण दुष्यन्त उत्तमप्रकृतिको नायको विलसति। नाट्यशास्त्रे उत्तमप्रकृतेर्निम्नलिखिता गुणाः प्राप्यन्ते—

जितेन्द्रिया ज्ञानवती नानाशिल्पविचक्षणा।
दक्षिणाऽथ भगालक्षा दीनानां परिसान्त्वनी॥
नानाशास्त्रार्थसम्पन्ना गाम्भीर्यौदार्यशालिनी।
धैर्यत्यागगुणोपेता ज्ञेया प्रकृतिरुत्तमा॥

—ना० शा० ३४।२-४

उत्तमप्रकृतेर्निम्नलिखिता गुणा दुष्यन्ते विद्यन्ते—

**जितेन्द्रियत्वम्**

दुष्यन्तो जितेन्द्रियोऽस्ति न वेति विवादास्पदम्। एकतः स राजर्षिरिति कथ्यते, अन्यतश्च तस्याचरणं तद्विपरीतं दृश्यते।

प्रथमाङ्के आश्रमं प्रविश्य वृक्षान्तरितो राजा दुष्यन्तस्तपस्विकन्यकानां वार्तालापं शृणोति। तासां विश्रब्धं क्रियमाणस्य नर्मालापस्य छद्मना श्रवणं नास्ति जितेन्द्रियजनोचितम्। तृतीयाङ्के स्वबाहुपाशे बद्धां शकुन्तलां स आह—

**अपरिक्षतकोमलस्य यावत्,**
**कुसुमस्येव नवस्य षट्पदेन।**
**अधरस्य पिपासता मया ते,**
**सदयं सुन्दरि गृह्यते रसोऽस्य॥** शा० ३।२१

( इति मुखमस्याः समुन्नमयितुमिच्छति। शकुन्तला परिहरति नाट्येन। )

नाटकस्यास्मादंशात् तस्य जितेन्द्रियता नाध्रियते। विवाहपूर्वमथ च तपोवने तस्य ईदृशो व्यवहारस्तं जितेन्द्रियत्वपदादधः पातयति।

एतद्विपरीतं पञ्चमाङ्के राजसभायामुपस्थितां सुन्दरीमपि शकुन्तलां दृष्ट्वा कथयति—भवतु अनिर्वर्णनीयं परकलत्रम्। अस्मात् कारणादेव प्रतीहारी तं श्लाघते—अहो धर्मापेक्षिता भर्तुः। ईदृशं नाम सुखोपनतं रूपं दृष्ट्वा कोऽन्यो विचारयति इति।

उपर्युक्तात् स्थलादतिरिक्तः स यत्र-तत्र राजर्षिरित्यपि कथ्यते—

शकुन्तला—सखि यतः प्रभृति मम दर्शनपथमागतः स तपोवन-रक्षिता राजर्षिः ( तृतीयाङ्के ) अपि च, अनसूया—अद्य स राजर्षिरिष्टिं परिसमाप्य"( चतुर्थाङ्के )।

एतानि निदर्शनानि तस्य जितेन्द्रियत्वं सूचयन्ति। इत्थं जितेन्द्रियत्वाजितेन्द्रियत्वयोरद्भुतं मिश्रण विद्यते दुष्यन्तस्य चरित्रे।

**कलावैशारद्यम्**

दुष्यन्तो बहुज्ञानवान् विविधकलाविचक्षणश्च राजा विद्यते। स मृगया-शास्त्र-सङ्गीत-चित्रादिषु अबाह्य। समुदाचारेणापि स विशिष्यते। पंचमाङ्के राजसभाया ऋषीणामागमनं श्रुत्वा स सर्वप्रथमं ऋषीणा तेषां गुरूणा च कुशलवृत्तान्त पृच्छति—

राजा—अपि निर्विघ्नतपसो मुनयः ?

अथ भगवांल्लोकानुग्रहाय कुशली काश्यपः इति।

दुष्यन्तः शिल्पकलासु विचक्षणो विद्यते। षष्ठाके दुष्यन्तनिर्मितं शकुन्तलायाश्चित्रं दृष्ट्वाप्सराः सानुमती कथयति—अहो एषा राजर्षेनिपुणता। जाने सख्यग्रतो मे वर्तते। तत्रैव विदूषकोऽपि कथयति—तर्कयामि यैषा शिथिलकेशबन्धन"सा शकुन्तला।

पंचमाङ्के हंसपदिकाया "अभिनवमधुलोलुपः" इति गीतं श्रुत्वा "अहो रागपरिवाहिणी गीतिरिति कथनं तस्य चार्थावबोधस्तस्य संगीतनिपुणतां परिचाययति।

**दाक्षिण्यम्**

राजा दुष्यन्तः स्वपरिजनेभ्य अत्यन्त स्निह्यति। दयावशादेव स धनमित्रस्य वणिजो धनं तस्य मरणानन्तरमपि स्वकोषे न सगृह्णाति अपि तु तस्य भाविसन्ततिमेव तस्य धनस्य स्वामिनमुद्घोषयति—

ननु गर्भः पित्र्यं रिक्थमर्हति। ( षष्ठाके ) तथा

येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना।
स स पापादृते तासां दुष्यन्त इति घुष्यताम्॥ शा० ६।२३

**भगालक्षत्वम्**

भगालक्षः अर्थादैश्वर्यवान् । दुष्यन्तस्य सम्राजः पदमेव तस्यैश्वर्यं प्रकटयति ।

**दीनानां हितचिन्ता**

दीनानां शुभचिन्तको राजा दुष्यन्तो द्वितीयाङ्के राक्षसभीतान् मुनीन् रक्षति यस्योल्लेखः शिष्यस्योक्तौ—

**का कथा बाणसन्धाने ज्याशब्देनैव दूरतः ।**
**हुंकारेणैव धनुषः स हि विघ्नानपोहति ॥** शा० ३।१

षष्ठाके भीतं धीवरं भयमुक्तं कृत्वा पुरस्करोति ।

**नानाशास्त्रार्थसम्पन्नता**

दुष्यन्तः शास्त्रार्थसम्पन्नोऽपि अस्ति । शास्त्रज्ञः स प्रथमाङ्क एव स्वसारथिं प्रति कथयति—**ननु विनीतवेषेण प्रवेष्टव्यानि तपोवनानि नाम।**

तृतीयाङ्के स शकुन्तलां कथयति यत् गान्धर्वविवाहः शास्त्रसम्मतो विद्यते—

**गान्धर्वेण विवाहेन बह्व्यो राजर्षिकन्यकाः ।**
**श्रूयन्ते परिणीतास्ताः पितृभिश्चाभिनन्दिताः ॥** शा० ३।२१

**गाम्भीर्यम्—**

दुष्यन्तस्य गाम्भीर्यं प्रशंसनीयं विद्यते । पंचमाङ्के शार्ङ्गरवस्य कटुवंचनानि स जोषं शृणोति कथयति च—'विशेषेणाधिक्षिप्तोऽस्मि ।' षष्ठाके राजश्यालोऽपि तं प्रकृतिगम्भीरं कथयति—'मुहुर्तं प्रकृतिगम्भीरोऽपि पर्यश्रुनयन आसीत् ।'

**औदार्यम्—**

औदार्यगुणपरिपूर्णो दुष्यन्तः स्वप्रजाः प्रति कथयति—

**येन येन वियुज्यन्ते**……घुष्यताम् । शा० ६।२३

स्वप्रजां पुत्रवत् पालयति सः, यस्योदाहरणं कञ्चुकिन इयमुक्तिर्विद्यते—

**प्रजाः प्रजाः स्वा इव तन्त्रयित्वा ।** शा० ५।५

धैर्यम्

स धैर्यवान् राजास्ति। पंचमांके ऋषीणां वाग्वज्रं सधैर्यं शृणोति। प्रियावियोगदुःखितोऽपि स वणिजो धनमित्रस्य परिवारं प्रति धैर्यपूर्वकं विचारयति।

त्यागः

दुष्यन्तः स्वप्रजासुखार्थं स्वसुखानि परित्यजति। वैतालिकोक्तौ—

स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः
प्रतिदिनमथवा ते वृत्तिरेवंविधैव।
अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं
शमयति परितापं छायया संश्रितानाम्॥ शा० ५।७

दातापि स विद्यते। षष्ठाङ्के धीवराय प्रभूतं धनं ददाति सः—'एष भर्त्रांगुलीयकमूल्यसम्मितः प्रसादोऽपि दापितः' (षष्ठाङ्कस्य प्रवेशकः) इत्थं नायको दुष्यन्तः उत्तमप्रकृतिगुणयुक्तोऽस्ति।

## शीलभेदः

आचार्यभरतानुसारेण देवा धीरोद्धताः, राजानोधीरललिताः, अमात्याः सेनापतयश्च धीरोदात्ताः, ब्राह्मणा धीरप्रशान्ताश्च नायका भवन्ति—

देवा धीरोद्धता ज्ञेया ललितास्तु नृपाः स्मृताः।
सेनापतिरमात्यश्च धीरोदात्तौ प्रकीर्तितौ॥
—ना० शा० ३४।१८

अभिनवभारत्यामभिनवगुप्तो विवृणोति—'उदात्त इति वीररसयोग्यः। तेन धीरललितधीरप्रशान्तधीरोद्धतधीरोदात्ताः चत्वारोऽपि गृह्यन्ते। (अभि० भा० भा० ५, पृष्ठः ४११)

नाट्यशास्त्र इदं नास्ति सुस्पष्टं यत् धीरोद्धतादीनां नायकानां कानि वैशिष्ट्यानि सन्ति। परवर्तिनाट्यशास्त्रकारैस्तत् विवृतम्। (दशरूपके २।३-५, साहित्यदर्पणे ३।३२-३४, रसार्णवसुधाकरे १।७३-७७ इत्यादि)।

दुष्यन्तो धीरोदात्तो नायको विद्यते। धीरोदात्तस्य लक्षणं दशरूपकानुसारं विद्यते—

महासत्त्वोऽतिगम्भीरः क्षमावानविकत्थनः ।
स्थिरो निगूढाहंकारो धीरोदात्तो दृढव्रतः ॥ दश० २।४

धीरोदात्तस्य निम्नलिखिता गुणाः सन्ति दुष्यन्ते—

महासत्त्वः

'शोकक्रोधाद्यनभिभूतान्तःसत्त्वः' अनया धनिकव्याख्यया दुष्यन्तो महासत्त्वः प्रतीयते। यद्यपि शकुन्तलावियोगेन शोकाभिभूतः सोऽस्ति, किन्तु स्वमित्रं विदूषकं मातलिभयात् त्रातुं तस्मिन्नेव क्षणे स्वकर्तव्यं साधयितुमुद्यतो भवति–'धनुस्तावद्' इति । ( षष्ठाङ्के )

प्रथमाङ्के शकुन्तलया सह वार्तालापस्य मधुरसमये हस्तिविघ्नं श्रुत्वा शकुन्तलां परित्यज्य गच्छति—गच्छन्तु भवन्तः। **वयमप्याश्रमपीडा यथा न भवति तथा प्रयतिष्यामहे।** अनेन सिद्धैव तस्य महासत्त्वता।

क्षमावान्

दुष्यन्तः क्षमाशीलो नायकोऽस्ति । स ऋषीणां कटूक्तीः सहते सम्राट् सन्नपि । एतेन तस्य क्षमाशीलता परिचीयते । ( पंचमाङ्के )

अविकत्थनः

अविकत्थन अर्थादनात्मश्लाघी । सप्तमाङ्के मातलिर्यदा तस्य शौर्यं शंसति तदा स कथयति—'अत्र खलु शतक्रतोरेव महिमा स्तुत्यः ।

सिध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः
सम्भावनागुणमवेहि तमीश्वराणाम् ।
किं वाभविष्यदरुणस्तमसां विभेत्ता
तं चेत् सहस्रकिरणो धुरि नाकरिष्यत् ॥ शा० ७।४

मातलिः कथयति च 'सदृशं तवैतत् ।'

स्थिरः

पूर्वं त्यक्ते मृगया-निश्चये स्थितः स सेनापतेः मृगयाप्रस्तावं पुनःनानुमोदते । कथयति च—भद्र सेनापते । आश्रमसंनिकृष्टे स्थिताः स्मः । अतस्ते वचो नाभिनन्दामि ।

पंचमांके सुन्दरीमपि शकुन्तलां न गृह्णाति सः ।

**निगूढाहङ्कारः**

दुष्यन्तस्याहंकारो विनयाच्छन्नो विद्यते । मातलिर्यदा तं श्लाघते तदा तस्य वार्तालापस्तादृश एव ।

**दृढव्रतः**

दृढव्रतः अर्थादङ्गीकृतकार्यनिर्वाहकः सोऽस्ति । द्वितीयाङ्के तापसाना यज्ञरक्षायाः प्रतिज्ञा स करोति । तदैव नगरात् मातुः सन्देशं प्राप्यापि स नगरं न गच्छति, स्वकीये स्थाने विदूषकं प्रेषयति च । राक्षसान् निहत्य तेनाङ्गीकृतं कार्यं निर्वाहितम् । शिष्यस्योक्तौ 'अहो महानुभावः''' विघ्नानपोहति । शा० ३।१

इत्थं स धीरोदात्तो विद्यते ।

## नायिकाप्रसङ्गः

आचार्यभरतेन नाट्यशास्त्रस्य २४ तमेऽध्याये स्त्रीपुरुषसम्बन्धो वर्णितः किन्तु स्पष्टरूपेण अनुकूल-दक्षिण-शठधृष्टानां लक्षणानि न दत्तानि दशरूपके स्पष्टतस्तेषा लक्षणानि प्राप्यन्ते । तदनुसारेण दुष्यन्तो दक्षिण-कोटिको नायक सिद्ध्यति। परिभाषानुसारेण मुग्धयापहृतचित्तोऽपि दक्षिणो नायको ज्येष्ठा प्रति सहृदया ( दक्षिण. ) विद्यते—

**दक्षिणोऽस्यां सहृदयः** । दश० २।६

अयं दुष्यन्तो बहुपत्नीको राजास्ति । तृतीयाङ्के स्वयमेव स कथयति—**परिग्रहबहुत्वेऽपि द्वे प्रतिष्ठे कुलस्य मे** । ( शा० ३।१७ ) दुष्यन्तस्य वसुमती हंसपदिका च पत्न्यौ नामतः वर्णिते एव । उभे प्रति स सदय व्यवहरति । पञ्चमाङ्के हंसपदिकाया गीतिं श्रुत्वा स सस्मितं कथयति—**सकृत्कृतप्रणयोऽयं जनः । तदस्या देवीं वसुमतीमन्तरेण महदुपालम्भनं गतोऽस्मि । सखे माधव्य मद्वचनादुच्यतां हंसपदिका । निपुणमुपालब्धः स्म इति ।**

षष्ठाङ्के शकुन्तलायाश्चित्रनिर्माणे तल्लीनं दुष्यन्तं दासी चतुरिका यदा देव्या वसुमत्या आगमन श्रावयति तदा स तत्क्षणमेव विदूषक कथयति—**वयस्य उपस्थिता देवी बहुमानगर्विता च । भवानिमां प्रतिकृतिं रक्षतु ।**

अनेन प्रतीयते यत् शकुन्तलासक्तचित्तोऽपि स ज्येष्ठायाश्चित्तखेद मुत्पादयितुं नेच्छति ।

# अलंकारशास्त्रे काव्यबिम्बपरामर्शः

डॉ० अयोध्याप्रसादः द्विवेदी

समीक्षाशास्त्रे काव्यालोचनप्रतिमानपरं 'बिम्ब'-इति पदम् Image इत्यस्य अनुवादः[1] । 'अतीन्द्रियामनुभूतिम् इन्द्रियग्राह्यतामानेतुम्' अमूर्त्तभावान्मूर्त्तचित्रैः प्रकाशयितुं काव्यनिर्मितिक्षणे कवीनां य उपक्रमः, स एव समालोचकैः 'बिम्ब' इत्युपलक्ष्यते । काव्ये रूपविधानमेव बिम्बसिद्धान्तस्य मूलम् इति वक्तुं शक्यते । नहि क्वचिद् बिम्बादृते कविकल्पना पाठकैरास्वाद्यते । अतः, सहजं स्वाभाविकञ्चेदं काव्यस्य धर्मः[2]। इदं बिम्बग्रहणवैशिष्ट्यमेव अर्थग्रहणपरेभ्य इतरशास्त्रेभ्यः काव्यं पृथक् करोति[3] । गच्छतु नाम 'बिम्बवादस्य' प्रचारश्रेयः पाश्चात्त्यान्प्रति किन्तु, बिम्बं चेत्काव्यस्यानिवार्यमुपादानं तर्हि काव्यप्रादुर्भावादेव काव्यशरीरे तेन प्रतिष्ठितेन भाव्यम्। परं, नहि भारतीयकाव्यशास्त्रस्य विविधप्रस्थानश्रेणीषु बिम्बसिद्धान्तस्य क्वचिद् विवेचनमुपलभ्यते । सार्वभौमिकं

---

१. संस्कृतसाहित्यशास्त्रे काव्यबिम्बविमर्शाय सागरिकायाः १९।४ अंके प्रकाशितः डॉ० राममूर्तित्रिपाठिनः काव्ये वाच्यार्थव्यतिरेक इति लेखो द्रष्टव्यः ।

२. 'The image is the constant in all poetry, and every poem itself is an image Trends come and go, diction alters, metrical fashions change, even elemental subject-matter may change almost out of recognition; but 'Metaphor' remains the life-principle of poetry, the poet's chief test and glory'.

—The Poetic Image, P.17, C. Day Lewis

३. भारतीय साहित्यशास्त्र, पृ० ५१२, आचार्य बलदेव उपाध्याय ।

स्वाभाविकश्च काव्यतत्त्वमिदं कथन्न पौरस्त्यकाव्याचार्यैः सिद्धान्तितम् ? किमासन् तेऽनभिज्ञाः काव्यस्यास्य बिम्बात्मकवैशिष्ट्यस्य ? उत, न स्वतन्त्रतयाविवेचितमपि, तैर्मीमांसितेषु अलङ्कार-गुण-रीत्यादिषु कुत्र-चिदस्यापि समाहारः स्यात्, अथवा कविकल्पनायाः व्यापकतया बिम्बस्य च कल्पनाप्रसूतितया सर्वामेव काव्योक्तिम् अभिव्यक्तिवैचित्र्यं वा तद् व्याप्नुयात्--इत्येषा स्वाभाविकी जिज्ञासा जागर्ति ।

वस्तुतः, प्रत्यक्षसौन्दर्यस्य दिदृक्षैव भारतीयकाव्यालोचनस्योद्भव-भूमिः । तथ्यमिदं न केवलं दृश्यकाव्यस्य प्रकरणे समादरणीयम्[१] अपितु, श्रव्यकाव्यस्य कृतेऽपि तावदेव महत्त्वपूर्णम् । नाट्यस्य माहात्म्यहेतुस्तु तस्य दृश्यात्मको विशेष एव[२] । किन्तु, यदा कविर्दृश्यकाव्यमिव श्रव्येऽपि प्रत्यक्षानुभूतेर्मूलाधारमैन्द्रियतत्त्वमवतारयितुमिच्छति तदा प्रकृत्यैव स बिम्बविधानमाश्रयते । यतो हि प्रत्यक्षा मानसी काव्यार्थोपस्थितिरेव रस-वत्ताया आधारः, यस्तु बिम्बविन्यासैरेव साध्यते। अतः स्पष्टं, यत् श्रव्य-काव्येष्वपि दृश्यकाव्यवत्काव्यार्थानुभूतिर्बिम्बमाध्यमेनैव भोक्तुं शक्यते[३] । बिम्बनशिल्पं विना श्रव्ये काव्यास्वादो दुर्लभ एव[४] । यदिह स्वल्प-

१. (क) 'नाट्यं नाम''''आस्वादनरूपसंवेदनसंवेद्यं वस्तु''''' अभिनवभारती, पृ० २६

(ख) रूपं दृश्यतयोच्यते—दशरूपकम्, पृ० ४ ।

२. (क) 'काव्यं तावन्मुख्यतो दशरूपात्मकमेव । तत्र हि उचितैर्भाषा-वृत्ति-काकु-नेपथ्य प्रभृतिभिः पूर्यते रसवत्ता ।''''काव्यं च नाट्यमेव' —अभिनवभा०, पृ० ५०४ ।

(ख) 'सन्दर्भेषु दशरूपकं श्रेयः' —काव्यालङ्कारसूत्रम्, १।३।३०
'तद्विचित्रचित्रपटवद्विशेषसाकल्यात्' — ,, १।३।३१

३. 'If we realise Rasa in Kavya also, it is because of the intrinsic dramatic quality of the poem.' —भोजः शृङ्गारप्रकाश, पृ० ७९, वी० राघवन्

४. 'न नाट्य एव रसाः काव्येऽपि नाट्यमान एव रसः । काव्यार्थविषये हि प्रत्यक्षकल्पसंवेदनोदये रसोदय इत्युपाध्यायाः । —यदाह काव्यकौतुके

विभावादिभ्यो रसानुभूतिर्जायते तत्र हेतुः कविप्रयुक्तशब्दानां बिम्बात्मकत्वमेव[1] ।

अस्मन्मते तु बिम्बप्रयोक्ता कविः अभिनेतुर्भूमिकां निर्वहति तेन प्रयुक्तानि बिम्बानि चाभिनयमिवाविकल्पमर्थमुपस्थापयन्ति पाठकानां पुरतः । अभिनेतुः अभिनयकौशलात् कवेः बिम्बनकलायाः प्रौढिः अधिकतरं गौरवमधिकरोति कायिकचेष्टाद्यनवसरेऽपि भावसम्मूर्त्तनसमर्थान् तत्कल्पशब्दान् प्रयोगदक्षत्वात् । इत्थं, वस्तुतो बिम्बनशिल्पं 'वागभिनय'-इति पदान्तरेण प्रकटयितुं शक्यते यस्माद्वागभिनयापेक्षया व्यापकतरमर्थमावृणुते।[2] अतएव बिम्बप्रयोक्तारः कवयो जयन्ति नटान्[3] ।

संस्कृतकाव्यशास्त्रस्य प्रथमाचार्यो भरत इदं वागभिनयात्मकं बिम्बनशिल्पं 'लक्षण'-इति नाम्ना प्रस्तौति—'काव्यबन्धास्तु कर्तव्याः षट्त्रिंशल्लक्षणान्विताः'[4] । कथनमिदं काव्यमात्रवैशिष्ट्यपरं न तु नाट्य-

---

प्रयोगत्वमनापन्ने काव्ये नास्वादसंभवः । वर्णनोत्कलिकाभोग-प्रौढोक्त्या सम्यगर्पिताः । उद्यानकान्ताचन्द्राद्या भावाः प्रत्यक्षवत्स्फुटाः ॥

अभिन०, पृ० ५०८ ।

१. 'परिमितविभावाद्युन्मीलने हि परिस्फुट एव साक्षात्कारकल्पः काव्यार्थः स्फुरति' । अभिनवभारती, पृ० ४९२ ।

२. 'The word '*Abhinaya*' is usually translated as 'acting', but as it is used in Natya-sastra it has a very wide meaning, a meaning that includes not only what we understand by 'acting' but other things which go to make up the medium of expression.'
—Introduction to Bharata's Natya-sastra, P.22
by Adya Ranga Charya.

३. 'अतोऽभिनेतृभ्यः कवीनेव बहु मन्यामहे, अभिनेयेभ्यश्च काव्यमेवेति' ।
—भोजः शृङ्गारप्रकाशे, पृ० ८१

४. नाट्यशास्त्रम् । १६।१६२ ।

मात्रकम् । सर्व एव लक्षणभेदा यद्यपि बिम्बात्मकास्तथापि, भूषण[१]–दृष्ट[२]–सारूप्या[३]णां बिम्बधारणया अधिकतरं सामीप्यमस्ति । अस्मादतिरिक्तं श्लेष-प्रसादादीनां विवरणे बिम्बगुणा[४] एव प्रथिता इव ।

आचार्यदण्डिनाऽपि काव्ये मूर्तिमत्ता सबल प्रतिष्ठापिता । तद्दृष्ट्या प्रत्येकं भावो विचारो वा विम्बरूप एव, तस्याभिव्यक्तिरपि बिम्बात्मिकैव । प्रत्येकं शब्दः स्वतः एको बिम्बः । लोकव्यवहारस्य हेतुरयं शब्दबिम्ब एव[५] । सकलमितिवृत्त निखिलञ्च सांस्कृतिकमैश्वर्यम् अस्मिन्नेव दर्पण-वाङ्मयबिम्बेषु सुरक्षितमस्ति । येऽद्यास्माकं पुरतो न विद्यन्ते, तेषां कीर्तिः सम्पूर्णा च भावसम्पत् एभिः शब्दबिम्बैरेवास्माकं समक्षमुपस्थाप्येते[६] । भावाभिव्यक्तिमाध्यम शब्द एव । कथं तद्विना कविकर्म सत्तामियात्[७] ? अत एव तु दण्डी—'शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली[८]' इति काव्यं परिभाषमाणःशब्दबिम्बमेवाधिकं मन्वानो दृश्यते । किन्तु, नैतत् । स सममेव शब्दबिम्बमर्थबिम्बमुभयमपि महत्त्वदृष्ट्या पश्यति । अन्यथा, कथं स सर्वप्रथममर्थालङ्कारं तत्रापि स्वभावोक्ति निरूपयेत् ? दण्डिनोऽलङ्कारवर्गीकरणप्रवृत्ति परिलक्ष्येदं निष्क्रष्टु शक्यते यत् आचार्योऽयं यत्रैकतोऽप्रस्तुतविधानजन्यबिम्बापेक्षातोऽभिधात्मकं

---

१. अलङ्कारैर्गुणैश्चैव बहुभिः समलङ्कृतम् ।
भूषणैरिव चित्रार्थैस्तद् भूषणमिति स्मृतम् ॥ नाट्य० १७।६

२. यथाकाल यथादेशं यथारूपं च वर्ण्यते ।
यत्प्रत्यक्षं परोक्षं वा दृष्टं तद्वर्णतोऽपि वा ॥ नाट्य० १७।२३

३. दृष्टश्रुतानुभूतार्थकथनाभिः समुद्भवम् ।
सादृश्यक्षमजनितं सारूप्यमिति संज्ञितम् ॥ नाट्य० १७।३५

४. नाट्यशास्त्रम् । १७।४२

५. काव्यादर्शः, १।३ तथा ४

६. ,, १।४ 'आदिराजयशोबिम्बमादर्शं प्राप्य वाङ्मयम् ।
तेषामसन्निधानेऽपि न स्वयं पश्य नश्यति' ॥

७. तथाहि दर्शने स्वच्छे नित्येऽप्यादिकवेर्मुनेः ।
नोदिता कविता लोके यावज्जाता न वर्णना ॥ भट्टतौत ॥

८. काव्यादर्श. १।१० ।

वर्णनपरं प्रस्तुतकाव्यवैभवमेवाकृत्रिमत्वेन विनिर्दिष्ट तत्रैवापरतस्स 'समाधि[1]' काव्यसर्वस्वम्[2] इत्युद्घोषयन् अप्रस्तुतविधानजन्यविम्बमपि आद्रियते। भामहस्य विम्बनविषयकं चिन्तनं तस्य 'भाविक'–नामकः प्रवन्धगुण उपस्थापयति। भूतो भावी चार्थो यत्र वर्तमानवन्नयनगोचरता-मायातस्तत्र भवति भाविको[3]गुणः। एतदर्थमर्थस्य चित्रात्मकत्वम्, औदात्त्यम्, अद्भुतत्वम्, सुष्ठु अभिनेयत्वम्, शब्दानुकूल्यं प्रसादयुक्तत्वं वा काव्यगुणा अपेक्ष्यन्ते। स्पष्टमेवात्र आचार्येण काव्यस्य रूपतत्त्वमेव स्वीकृतम्। तथ्यमिदं यावानुपादेयः प्रबन्धाय तावानेव मुक्तकृतेऽपि।

वामनस्य काव्यविम्बमलङ्कारजन्यम्—'काव्यं ग्राह्यमलङ्कारात्'[4]। अलङ्कारः कविकर्मणः समग्रसौन्दर्यस्य द्योतकः[5]। सौन्दर्योत्पत्तिमूला रीतिः,[6] यस्या आधारः शब्दाना विनियोजनविशेषः,[7] शब्दानाञ्चायं प्रयोगविशेषः गुणानां सम्यगुन्मीलन एव शक्यते[8]। इत्थं वामनाचार्यमतेन गुणसवलितानां शब्दानां विशिष्टप्रयोगः काव्यविम्बस्य नियामकत्वेनोद्भावितः। भरत-दण्डिनोर्मान्याः पूर्वोक्ताः दशगुणाः वामनस्याप्य भिमता। एभिर्दशगुणैर्युक्ता वैदर्भीरचनापद्धतिः श्रेष्ठविम्बनविधिः तस्येष्ट। कालिदासस्य 'गाहन्ताम्...' इत्यादिश्लोकमुदाहरता तेनेदमेव प्रकटितम्। वस्तुतो दण्डिवदाचार्यवामनोऽपि अभिधया विधीयमानं वर्णनात्मकं

---

१. अन्यधर्मस्ततोऽन्यत्र लोकसीमानुरोधिना।
सम्यगाधीयते तत्र समाधिः स्मृतो यथा॥ काव्यादर्शः १।९३॥

२. तदेतत्काव्यसर्वस्वं समाधिर्नाम यो गुणः।
कविसार्थः समग्रोऽपि तमेनमनुगच्छति॥ „ १।१००॥

३. भाविकत्वमिति प्राहुः प्रबन्धविषयङ् गुणम्।
प्रत्यक्षा इव दृश्यन्ते यत्रार्थाः भूतभाविनः॥
चित्रोदात्ताद्भुतार्थत्वं कथायाः स्वभिनीतता।
शब्दानूकूलता चेति तस्य हेतुं प्रचक्षते॥ काव्यालङ्कारः ३।१३-१४॥

४. काव्यालङ्कारसूत्राणि, १।१।१।
५. „ १।१।२ 'सौन्दर्यमलङ्कारः'।
६. „ १।२।६ 'रीतिरात्मा काव्यस्य'।
७. „ १।२।७ 'विशिष्टपदरचनारीतिः'।
८. „ १।२।८ 'विशेषो गुणात्मा'।

काव्यबिम्बमेवादर्शत्वेनाङ्गीकुर्वन्निव प्रतीयते। काव्यबिम्बस्यैष रचना-विधिः कलाकारस्य वाग्वैभवं वितनुते सहृदयेभ्यश्च काव्यास्वादार्थमुत्तम-'शब्दपाकः'[1] अपि। अन्यच्च, समग्रतया तु वैदर्भी-गौडी-पाञ्चालीषु तिसृष्वपि रीतिषु कविकर्म तथैवाकारवत्तामादधाति यथा रेखासु चित्रम्[2] इति कथयता किं वामनेन काव्यस्य दृश्यात्मकं वैशिष्ट्यं नोत्थापितम्?

कुन्तकस्य वक्रोक्तिसिद्धान्तस्तु काव्यस्य सम्मूर्त्तनप्रक्रियामेव व्याकुर्वन्निवाभाति[3]। यतो हि वक्रत्वं वस्तुतो रूपगतो धर्मः[4]। तदेव चास्य काव्यसौन्दर्यस्य हेतुः[5]। षड्विधेषु विवेचितेषु वक्रतायाः प्रकारेषु मुख्यत उपचार-विशेषणवक्रता एव बिम्बनशिल्पस्य सिद्धान्तं पुष्णाति। उपचार-वक्रतायां भिन्नप्रकृतिकयोः द्वयोः पदार्थयोर्मध्येऽन्योन्यसम्बन्धारोपो भवति। अस्यारोपणस्य प्रस्तुताप्रस्तुतयोर्यत्किञ्चित्साधारणधर्म एव हेतुर्भवति[6]। अस्मिन्नुपचारविधौ अमूर्त्तस्य स्थाने मूर्तिविधानं, मानवीकरणं, सघनवस्तुनः स्थाने द्रववस्तुनः प्रयोगः क्रियते[7]। यथा—'हस्तापचेयं यशः'। विशेषणवक्रतायां विशेषणमाहात्म्येन वर्ण्यवस्तुनः स्वाभाविकं सौन्दर्यं प्रस्फुटति[8]। अस्यौचिती काव्यस्य जीवातुः[9]। बिम्बीकरणाय नहि

---

१. „ (वृत्ति) १।२।२१।

२. „ „ १।२।१३ 'एतासु तिसृषु रीतिषु रेखास्विव चित्रं काव्यं प्रतिष्ठितमिति'।

३. 'चित्रस्येव मनोहारि कर्त्तुः किमपि कौशलम्'—वक्रोक्तिजीवितम्, ३।४

४. 'उदारस्वपरिस्पन्दसुन्दरत्वेन वर्णनम्।
वस्तुनो वक्रशब्दैकगोचरत्वेन वक्रता'॥

५. वक्रो० १।१०।

६. वक्रो० २।१३।

७. 'यत्रामूर्त्तस्य वस्तुतो मूर्त्तद्रव्याभिधायिना शब्देनाभिधानमुपचारात्'। १।१९ इत्यस्य वृत्तिः।

'सोऽयं स्वभावविप्रकर्षो विरुद्धधर्माध्यासलक्षणः पदार्थानाम्। यथा, मूर्तिमत्त्वममूर्त्तत्वापेक्षया, द्रवत्वं च घनत्वापेक्षया, चेतनत्वमचेतनत्वापेक्षयेति।'
—तदेव, २।१३ इत्यस्य वृत्तिः।

८. वक्रो० २।१५, वृत्तिरपि।

९. „ „ „

सर्वे शब्दाः समर्था भवन्ति प्रत्युत, पदार्थस्य प्रत्यक्षतुल्योपस्थापने विशेषाभिधानमेव शक्नोति[१]। अत एवाचार्यकुन्तकः कालिदासस्य श्लोक[२]मुदाहृत्य 'कपालिनः' इति विशेषप्रयोगमधिकृत्येत्थमुल्लिखति—'अत्र परमेश्वरवाचकशब्दसहस्रसंभवेऽपि 'कपालिनः' इति बीभत्सरसालम्बनविभाववाचकः शब्दो जुगुप्सास्पदत्वेन प्रयुज्यमानः कामपि वाचकवक्रतां विदधाति[३]'। कलाकारो नहि किमपि वस्तु निर्माति अपितु, कल्पनया तत्तथा दीपयति येनाभिधेयस्य प्रत्यक्षतुल्या प्रतीतिरुपजायेत[४]। वक्रोक्तिकारमतेनैतस्य कृते प्रासङ्गिक-सङ्गतिरप्यनुपेक्षणीया[५] एवमेव, आचार्यो राजशेखरोऽपि समीक्षते यत् यथाप्रसङ्गं कविरेकमेवेन्दुं क्वचित् 'अमृतांशुः' क्वचिच्च 'दोषाकरः' इति पृथक्-पृथक् निर्वक्ति[६]। एषैव बिम्बनरीतिः काव्योत्कर्षकारिणी; यदर्थं गुणालङ्काराणां समुचितसन्निवेशः अपरिहार्यः[७]। यतो नहि स्वता वस्त्वपितु, कवेर्बिम्बनशिल्पमेव महत्त्वपूर्णम्[८]। अस्मादेव कारणाद्राजशेखरो बिम्बनप्रवीणं कविवरं सर्वश्रेष्ठं कलाकारं

---

१. 'कविविवक्षितविशेषाभिधानक्षमत्वमेव वाचकत्वलक्षणम्।'
'विशेषाभिधानकाङ्क्षिण पुन. पदार्थस्वरूपस्य तत्प्रतिपादनपरविशेषणशून्यतया शोभाहानिरुपजायते।' तदेव—१।९ इत्यस्य वृत्तिः।

२. कुमारसंभवम्, ५।७१।

३. वक्रो० १।९ इत्यस्य वृत्ति ।

४. 'तदेव सत्तामात्रेणैव परिस्फुरतः पदार्थस्य..........तत्कालोल्लिखित इव वर्णनीय—पदार्थपरिस्पन्दमहिमा प्रतिभासते'.... । वक्रो० ३।२, वृत्तिः।

५. वक्रो० १।९ इत्यस्य वृत्तिः। सार्द्धमेव तुलनीयः पाश्चात्यबिम्बविचारः—
'An isolated image, an image viewed outside of its context, is only half the image. Every metaphor gains full life and significance only from its context'.
—दी डेवलप्मेन्ट ऑफ शैक्सपियर्स इमैजरी, पृ० ३, क्लीमेन।

६. काव्यमीमांसा, अध्यायः ९, पृ० १४६।

७. ,, ,, ६, पृ० ८१।

८. ,, ,, ९, पृ० १४४।

लक्षयति[१]। एतादृशानां कविवराणामेव 'मतिदर्पणे' विश्वं प्रतिफलति[२]। आचार्योऽयमर्थस्य बिम्बात्मकतामधिकं मनुते तदर्थञ्च विस्तारिचित्रणं श्लाघते—'स एव प्रपञ्चश्चित्रः[३]' इति। अर्थचित्रं विवृण्वन्नमरुशतकस्य यं श्लोकं काव्यमीमांसाकार उदाहरति स निराकरणादनन्तरं प्रसादनार्थं नायके पुनरुपस्थिते मानिन्या नेत्रव्यापारस्य शोभनं दृश्यबिम्बमस्ति—

दूरादुत्सुकमागते विवलितं सम्भाषिणि स्फारितं
सश्लिष्यत्यरुणं गृहीतवसने कोपाञ्चितभ्रूलतम्।
मानिन्याश्चरणानतिव्यतिकरे बाष्पाम्बुपूर्णेक्षणं-
चक्षुर्जातमहोप्रपञ्चचतुरं जातागसि प्रेयसि॥

अर्थचित्रस्य बिम्बपरत्वं प्रायः सर्वैराचार्यैरेव स्वीक्रियते। शब्दचित्रात् चित्रकाव्यस्य भेदात् अर्थचित्रमधिकमाह्लादकरम्, तथापि काव्यप्रकाशकारेण काव्यस्याधमकोटौ शब्दचित्रसमकक्षमेव तदपि स्थाप्यते। वस्तुतः, ध्वनेः प्रतीयमानस्य वा उपस्थितिरनुपस्थितिः, तस्य स्फुटत्वमस्फुटत्वं वा काव्यभेदाधारः। नेदं विस्मर्त्तव्य यद् भारतीयकाव्यशास्त्रस्य मुख्यो रसः, काव्यस्यैषा प्रथमा धूः, यत्परितः कविकर्मणः समग्रं बिम्बनचक्रं परिवर्त्तते। आत्मस्थानीय अयमेव साध्यः। बिम्बमपि साधनमेव, न तु साध्यम्। नेह रूपवत्ता विभागहेतुः। तथापि, मम्मटाचार्यस्यार्थचित्रविषयकं चिन्तनं चिन्त्यम्; यत्र पण्डितराजः आक्षिपति शब्दचित्रापेक्षया चोर्ध्वं तदुद्धरति। सर्वप्रथममप्पयदीक्षितो—'यदव्यङ्ग्यमपि चारु तच्चित्रम्'[४] इत्युक्त्वा 'चित्रकाव्यस्य' बिम्बधर्मि व्याख्यानं प्रस्तुतवान्। व्यङ्ग्यराहित्येऽपि चारुत्वहेतुर्नूनमेव काव्यार्थस्य रूपबोधात्मकं सौन्दर्यमेवेह स्यात्। नैतावता अपितु, शब्दार्थोभयेति त्रिविधभेदेन चित्रकाव्यं त्रिधा विभज्य चित्रमीमांसाकारः तेषु सर्वाधिकं महत्त्वं ददाति अर्थ-

---

१. चिन्तासमं यस्य रसैकसूतिरुदेति चित्राकृतिरर्थसार्थः।
अदृष्टपूर्वो निपुणैः पुराणैः कविः स चिन्तामणिरद्वितीयः॥
का० मी० अध्या० १२, पृ० २०२।

२. का० मी०, पृ० १३७।

३. का० मी० ९, पृ० १४६।

४. चित्रमीमांसा, पृ० २७।

चित्रमेव[1]। वस्तुतः, दीक्षितस्य 'चित्रमीमांसा' बिम्बमीमांसा एव। परमेषा मीमांसा काव्यबिम्बस्य समग्रतां नोपस्थापयति, केवलं वाच्यबिम्बमेव विवेचयति। बिम्बन्त्वयमभिधात्मकं लक्षणात्मकं व्यञ्जनात्मकमपि भवति।

सरस्वतीकण्ठाभरणे निरूपिता--'छायोक्तिः' अपि बिम्बधारणया सादृश्यं भजते। 'छाया' एका अनुकृतिः 'अन्योक्तीनामनुकृतिश्छाया'[2]। बिम्बमपि न किमपि वस्तु, अपितु मानसी प्रतिमा—'More specifically in literary usage, imagery refers to images produced in the mind by language, whose words and statements may refer either to experiences which could produce physical perception were the reader actually to have those experiences, or to the sense—impressions themselves.'[3]

अनुकारः उभयत्र समः। वाक्यानामनुकारः प्रतिबिम्बो वा छाया—पदेनेहाभिप्रेतमस्ति तद्यथाह टीकाकारो रामसिंहः 'लोके बिम्ब-प्रतिबिम्बयोः प्रतिबिम्बं चमत्कारितया प्रसिद्धम्। अत एव श्रव्यात्प्रेक्ष्यं ज्यायः' इत्याह। शब्दालङ्कारकाण्डे वाक्यानुकरणमेव प्रतिबिम्बवाचिना छायापदेन गुणवृत्तेनाख्यायते'[4]। अतः, शब्दभेदेऽपि भावसाम्यात्काव्यबिम्बं भारतीयालङ्कारशास्त्रे विश्लेषितं 'प्रतिबिम्बनम्'[5]। निदर्शनायामुपमाविवेचने च बिम्बप्रतिबिम्बभावो वर्णितः। इह बिम्बं मूलवस्तुने—उपमेयाय प्रतिबिम्बं तदनुकृत्यै उपमानस्थानीयम्[6]। अपरञ्चायं बिम्ब-

---

१. 'शब्दचित्रस्य प्रायो नीरसत्वान्नात्यन्तं तदाद्रियन्ते कवयः, न वा तत्र विचारणीयमतीवोपलभ्यत इति शब्दचित्रांशमपहायार्थमीमांसा प्रसन्नविस्तीर्णा प्रस्तूयते'।—चित्रमी०, पृ०, ३०।

२ सरस्वतीकण्ठाभरणम् २।३९।

३. प्रिंसिटन. एन्साइक्लोपीडिया ऑफ पोएट्री एण्ड पोएटिक्स, पृ० ३६३।

४. सरस्वतीकण्ठाभरणम्, २।३९ इत्यस्य टीका।

५. काव्यप्रकाशः, पृ० ६३६।

६. 'बिम्बं शरीरं प्रतिबिम्बं तच्छाया तयोर्भावः बिम्बप्रतिबिम्बत्वमित्यर्थः आकारप्रत्याकारतुल्यत्वमिति यावत्'—काव्यप्रकाशे, टिप्पणी, पृ० ६३६।

प्रतिबिम्बभावः सादृश्यमूलकः[१] । परम्, पाश्चात्त्यबिम्बसिद्धान्तो न केवलं सादृश्याश्रयी प्रत्युत यत्किमपि रूपयत् कथनं तत् तस्यान्तर्वर्ति[२] । सर्वा एव भोजराजनिरूपिता लोक-छेकार्भकोन्मत्त-पोट-मत्तोक्तयः काव्यस्य रूपवत्तामेव लक्षयन्ति। तेन लोकछायोक्तेरुदाहरणे उत्तरमेघस्य 'शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ, शेषान्मासान्गमय चतुरो लोचने मीलयित्वा' इति उद्धृतम् । 'लोचने मीलयित्वा' इति लोकप्रचलितप्रयोगः । यस्योपयोगोऽत्र काव्यबिम्बमिव कृतः । शीघ्रसमागमसंभावना चतुर्णां मासानां च सौकर्येण यापनमिति व्यञ्जनमेवास्य प्रयोजनम् । एवं भोजस्य दृष्ट्या प्रतिभावान् कलाकारः जीवनस्य सामान्यव्यवहारात् अन्यतः कुतोऽपि वा बिम्बमादत्ते[३] । प्रत्यक्षनामकमलङ्कारं विवेचयन् भोजराजः बिम्बमेव व्याकुर्वन्निव प्रतिभाति[४] । प्रसङ्गेऽस्मिन् तेनोद्धृतं शिशुपालवधस्य—

> क्रान्तकान्तवदनप्रतिबिम्बे भग्नबालसहकारसुगन्धौ ।
> स्वादुनि प्रणदितालिनि शीते निर्ववार मधुनीन्द्रियवर्गः ॥ १०।३

इति पद्यं पञ्चज्ञानेन्द्रियैः संवलितं दृश्याघ्रेयादीनां मनोरमं सश्लिष्ट-

---

१. 'वस्तुतो भिन्नयोर्धर्मयोः परस्परसादृश्यादभिन्नतयाध्यवसितयोर्द्विरूपादानं बिम्बप्रतिबिम्बभाव.'—चित्रमीमांसा, पृ० ८९ ।

२. ( It is ) little word-picture used by a poet or prose-writer to illustrate, illuminate ond embellish his thought. It is a description or an idea.......'

—शेक्सपियर्स इमैजरी एण्ड ह्वाट् इट् टेल्स अस, कैरोलिन स्पर्जियन, पृ० ९ ।

३. तुलनीयम्—'It ( image ) way be a simple analogy from everday things 'they'll take suggestion as a cat laps milk.'

—शेक्स० इमै०, पृ० ७ ।

४. 'प्रत्यक्षमक्षजं ज्ञानं मानसं चाभिधीयते ।
स्वानुभूतिमिवं चैवमुपचारेण कथ्यते ॥ सर० कण्ठा०, ३।४६ ।

बिम्बमस्ति। उपमानविश्लेषणे अभिनय-आलेख्य-मुद्राबिम्बानां विश्लेषण-माचार्येण कृतमस्ति। इमानि सर्वाण्यपि प्रकृतबिम्बरूपाण्येव।

बिम्बसिद्धान्तस्य सर्वाङ्गीणं पूर्णञ्च विश्लेषणं ध्वन्यालोके प्राप्यते। प्रतीयमानमेवास्य बिम्बचिन्तनस्याधारः। स्वरूपबोधधिया वाच्यं साधनं प्रतीयमानं साध्यम्[1]। सौन्दर्यबोधदृष्ट्या तूभयोरपि सामरस्यं तारतम्यं वा यथावसरं चारुत्वापेक्षि जायते यतः प्राधान्यविवक्षाया आधारश्चारुत्वमेवास्ति[2]। चारुत्वं, सौन्दर्यमाह्लादो वा काव्ये उत्कर्षाधायकं तत्त्वम्। समीचीनमेवोक्तमानन्दवर्धनेन यत् काव्यस्य निर्णायको नहि काव्यनिष्ठो धर्मः अपितु, अनुभवितुः आनन्दमात्रा[3]। अस्मात् कारणात् भारतीय काव्यचिन्तने रसध्वनिरेव काव्यतमतां लभते[4]। वस्तुतो भावो रसो वा प्रमुखतत्त्वम्। सर्जनादृष्ट्या एतदेव काव्यस्य प्रादुर्भावभूमिः, अनुभव वेलायामपि कविकर्मणश्चरितार्थतापि नेनैव रूपेण भवति। अतो महत्स्वाभाविकं यदेतादृशं रसात्मकमर्थवस्तुपरं काव्यबिम्बमेव महाकवेः प्रतिभानिकषो भवेत्।

तत्प्रतीयमानं, वस्त्वलङ्कार-रसैश्चाक्षिप्तं भवति। 'भम धम्मिअ वीसद्धो[5].....' इत्याद्युहारणे गोदावर्यास्तटे गहनलतावने निवसतोन्मत्त-सिंहेन शुनो वधरूप वाच्यबिम्बन्तु स्पष्टमेव परम्, अनेनैव बिम्बमाहात्म्ये-नाक्षिप्तं—भ्रमणनिषेधरूपं प्रतीयमान वस्तुबिम्बमपि विचारवद्भिर्विचार चक्षुर्ग्राह्यं भवति। भ्रमणमेको मूर्तक्रियाव्यापारः; तस्य कल्पनमेव बिम्बा त्मकं, भवतु नाम भावात्मकमभावात्मकं वा। एवमेव, अत्रान्तरे कुसुम-समययुगमुपसंहरन्नजृम्भत ग्रीष्माभिधानः फुल्लमल्लिकाधवलाट्टहासो महाकालः[6] इत्यत्रापि सत्स्वपि शिवस्यानेकपर्यायवाचिषु पदेषु 'महाकाल'

---

१. ध्वन्या० १।९।

२. ध्वन्या० १।१३, (वृत्तिः)।

३. आनन्दवर्धने, पृ० ८८, रे० प्र० द्वि०।

४. ध्वन्या० १।५ तथा १।६ एवमुभयोर्लोचनटीका।

५. 'भ्रम धार्मिक विस्रब्ध स शुनकोऽद्य मारितस्तेन।
गोदावरीनदीकूललतागहनवासिना दृप्तसिंहेन॥'
(संस्कृतच्छाया)। ध्वन्या०

६. ध्वन्या० २।२१ इत्यस्य व्याख्याने उदाहृतम्।

इत्यस्य प्रयोगो भगवतस्त्र्यम्बकस्य प्रलयङ्कार रूपं ग्रीष्मस्य च प्रचण्डतां सम्प्रेषयितु समभूत् । स्वेन दृश्यात्मकमहिम्नैवेह ग्रीष्मकालस्य 'महा-कालत्वम्' अनुभवपथमायाति । रसस्यानुभूतिस्तु विभावादीनां बिम्ब-धर्मितयैव सम्पद्यत इति तु सुतरां बोधगम्यमेव[1] । यथा—

एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।
लीलाकमलपत्राणि गणयामास पार्वती ॥ कुमा० ६।८४

इत्यत्र पितुः पार्श्वे अधोमुख्याः पार्वत्या लीलाकमलपत्रगणनरूपं वाच्यबिम्बं लज्जागोपनाय प्रयुक्तम्, येन क्रमशः लज्जयावहित्थया शिवगता पार्वतीरतिं बोद्धा प्रमाता स्वयं यां रतिमनुभवति सा साक्षान्-मानसी बिम्बात्मिकानुभूतिः[2] । एवं स्फुटं यद् वाच्यबिम्बमिव प्रतीय-मानबिम्बमपि ऐन्द्रियवैशिष्ट्यसवलितं जायते । दृश्यात्मकत्वं तस्यापि वैशिष्ट्यम् । वाच्यापेक्षया प्रतीयमानस्य रूपवत्ता यत् क्षीणतरा तत् त्वर्थस्य सूक्ष्मतत्त्वात् । कथयितु शक्यते यत् वाच्यबिम्बं दीपशिखेव स्थायित्वं भजते परं, प्रतीयमानबिम्बच्छाया विद्युद्युतिसंकाशा क्षणिका विभाति । योषितां लज्जेव[3] प्रतीयमानमपि यदि कैश्चिन्नानुभूयते तर्हि तस्य सूक्ष्मतैव हेतुः, न तु रूपतत्त्वस्याभावे यथा कतिपयैर्हिन्दीभाषा-समीक्षकैरालोचितम् ।[4] प्रसङ्गप्राप्तमिह सम्प्रति एतदपि विचारणीयं यत्

---

१. 'यस्मादवस्तुसंस्पर्शिता काव्यस्य नोत्पद्यते । वस्तु च सर्वमेव जगद्गत-मवश्यं कस्यचिद्रसस्य भावस्य वाङ्गत्वं प्रतिपद्यते अन्ततो विभावत्वेन । चित्तवृत्तिविशेषा हि रसादयः, न च तदस्ति वस्तु किंचिद्यन्न चित्तवृत्ति-विशेषमुपजनयति, तदनुत्पादने वा कविविषयतयैव तस्य न स्यात् । कवि-विषयश्च चित्रतया कश्चिन्निरूप्यते ॥ ध्वन्या० ३।४२ इत्यस्य वृत्तिः

२. 'स काव्यव्यापारैकगोचरो रसध्वनिरिति'—ध्वन्या. १।४ इत्यस्य लोचनव्या० । 'वस्तुचारुत्वप्रतीतये स्वशब्दानभिधेयत्वेन यत्प्रतिपादयितुमिष्यते तद् व्यङ्ग्यम्। —ध्वन्या० ३।३३ इत्यस्य वृत्तिः ।

३. ध्वन्या० ३।३७, 'मुख्या महाकविगिरामलङ्कृतिभृतामपि ।
प्रतीयमानच्छायैषा भूषा लज्जेव योषिताम् ॥'

४. [क] 'दृश्यतत्त्व का जो अनादर, उपेक्षा और कहीं-कहीं दुर्दशा भी ध्वनि-मत के अन्तर्गत हुई है·····' ।
—नयी कविताः स्वरूप और समस्याएँ, पृ० ६०, डा० जगदीश गुप्त

डॉ० उदयभानुसिंहमहोदयेन निगदितम्—'आनन्दवर्धनस्य 'छाया' पदेनापि बिम्बविधानस्य चित्रविधानस्य वाभिप्रायग्रहणं कर्तुं शक्यत'[1] इति। नैतत्सुचिन्तितमुक्तम्। यतो नहि ध्वन्यालोककारस्य 'छाया'—पदेन बिम्बसिद्धान्तस्य सामञ्जस्यं स्थापयितुं न शक्यते। वस्तुतः, सर्वत्र आनन्दवर्धनेन शोभा-कान्तिचमत्कारार्थेष्वेवास्याः प्रयोगो विहितः। तत्तु प्रतीयमानार्थानुरूपमेव, न तु बिम्बसिद्धान्तस्य साकल्योपस्थापकम्। आनन्दवर्धनस्य 'छाया' न चित्रार्थिका प्रत्युत चित्रस्य चारुत्वमेव।

रसवादिन आचार्यस्याभिनवगुप्तस्य 'चमत्कार.' अपि बिम्बभावोपस्थापकः। उभयस्य साक्षादर्थोपस्थापनं मनसश्च प्रतिभापरत्वं विशेषः[2]। कथयितुमुत्सहामहे यदयमेवाचार्यः सर्वप्रथमं बिम्बनशिल्पमधिकृत्य काव्यस्य मूल्याङ्कनं प्रस्तुतवान्। अभिनवभारत्या रसप्रकरणे 'ग्रीवाभङ्गाभिरामम्'..." इत्यादिकं शाकुन्तलीयं श्लोकमुद्धरन् तेन मृगशावकादीनां विषयाणां प्रत्यक्षतुल्योपस्थितिर्विश्लेषिता[3]। अनेनेदं स्पष्टमाभाति यत् काव्यस्य रूपवत्तया-दृश्यतया-बिम्बधर्मितया वा प्राचीनभारतीयालङ्कारशास्त्रिणः सुपरिचिता आसन्। बिम्बनदिशा काव्य-

[ख] 'रस के भीतर व्यक्त होने वाले रूपतत्त्व पर, जहाँ तक मेरा ज्ञान है, किसी भारतीय काव्य-विवेचक ने दृष्टिपात नही किया है'।

—न० स्व० स०, पृ० ५७, डा० जगदीश गुप्त

[ग] 'संक्षेप मे, स्वीकार करना होगा कि ध्वनि तथा रस के रूप मे काव्य के अत्यन्त सूक्ष्म तत्त्वो का शोध करके भी भारतीय दृष्टि 'मूर्त्तता' के विषय मे वैसी जाग्रत नही रही—जैसी पाश्चात्त्य दृष्टि।'

—तुलसीसाहित्य मे बिम्बविधान, पृ० ३२२, डा० सुशीला शर्मा

१. प्रिंसिपुल्स ऑफ लिट्रैरी क्रिटिसिज्म इन संस्कृत,

—पृ० २२९, डा० रामचन्द्र द्विवेदी

२. 'भुञ्जानस्याद्भुतभोगास्पन्दाविष्टस्य च मनसश्चमत्करणं चमत्कार इति। स च साक्षात्कारस्वभावो मानसोऽध्यवसायो वा सङ्कल्पो वा स्मृतिर्वा तथात्वेन स्फुरन्नस्तु।' अभिनवभारती, पृ० ४७२।

३. '........इत्यादिवाक्येभ्यो वाक्यार्थप्रतिपत्तेरनन्तरं मानसी साक्षात्कारात्मिका........प्रतीतिरुपजायते।........साक्षादिव हृदये निविशमानं चक्षुषोरिव विपरिवर्तमानं भयानको रसः।' अभिनवभारती, ४७०-७१।

समीक्षणं नास्ति नूतनोपलब्धिः काचन। तथापि स्वीकर्त्तुमिदं नात्र सङ्कोचः स्यात् यद्विंशशतके समीक्षाशास्त्रे प्रयुक्तस्य प्रचारितस्य च बिम्बस्य विवेचनं पौरस्त्यकाव्यशास्त्रे नोपलभ्यते। किञ्च 'वाग्विकल्पनामानन्त्यात्' पृथक्त्वेन स्वतन्त्रत्वेनाप्रदर्शितेऽपि कुत्रचिदस्यापि भवेत्समाहार इति न स्यात्कस्यापि विमतिः। भारतीयकाव्याचार्याणां विवेचनेषु यत्र-यत्र बिम्बस्य चिन्तनसादृश्यमनुभूतं तदिह संक्षेपतः समीक्षितमेव। अस्मादतिरिक्तम् अनालोचितग्रन्थेष्वपि तदनुस्यूतमस्ति यन्नात्र विस्तरभिया विवेच्यते। किन्तु नेदं विस्मर्त्तव्यं यदधुना बिम्बं व्यापकार्थवत्तामादधाति। तस्य प्रारम्भिकी मूलविशेषता—मूर्त्तिमत्ता तु गौणी सञ्जाता। सम्प्रति, सकलमेव काव्यार्थं बोधयितुं तत् क्षमतेतराम्। एतस्मिन् दृश्य-श्रव्य-घ्रातव्य-स्पृश्यास्वाद्यानतुनेयादीना सर्वासामपि काव्यसम्पदां समाहारो भवति। पाश्चात्यालोचकानाम् आई० ए० रिचईस०–हर्बर्टरीड–सी० डे० लुईसप्रभृतिमहोदयानां चिन्तनपीयूषवर्द्धितेन बिम्बेन न केवलमैन्द्रियानुभूति जन्यं स्थूलचित्रमेवापेक्ष्यतेऽपितु, चेतनायां क्षणिकमप्युद्भूतमेकं धूमिलं सूक्ष्मतरमनुमितिगम्यं चित्रमपि गृह्यते। अनया दृष्ट्या समीचीनमादरणीयं निष्कृष्टञ्च बिम्बलक्षणं पाश्चात्यकलासमीक्षकस्य कॉलरिज[1]महोदयस्य वर्ततेतमाम्, यदनुसृत्यास्माकं निखिलमपि पौरस्त्यकाव्यप्रस्थानजातं बिम्बान्तर्वर्ति चेत्स्यात्तत्रापेक्षितं रूपवत्त्वम्।

संस्कृत-प्राध्यापक, महाराज-महाविद्यालये, छतरपुरम्, म० प्र०

---

१. An image may be, for example, a visual image, a copy of sensation or it may be an idea, any event in mind, which represents, something, or it may be a figure of speech, a double unit involving comparision.'

उद्धृतम्—जायसी की बिम्बयोजना–इत्यस्य ३७ पृष्ठे।

काशी-हिन्दूविश्वविद्यालये

# पञ्चम-विश्वसंस्कृतसम्मेलनम्

( २०३८ विक्रम-संवत्सरे )

अध्यक्षः प्रो० दाण्डेकरः रामचन्द्रनारायणः

# निष्पत्ति-दर्शनम्

१. उद्घाटनम्—श्री विश्वनाथ-प्रताप सिंहः मुख्यमन्त्री, उत्तरप्रदेशस्य

२. अध्यक्षीय-भाषणम्—प्रो० दाण्डेकरः रामचन्द्रनारायणः

३. व्यवस्थापन-विधानम्—डा० रामकरण शर्मा

४. अनुसन्धान-व्याख्यानम्—पञ्चशतप्राया विद्वांसो शोधनिबन्धैः ज्ञान-विज्ञानस्य विविधक्षेत्राणि प्राकाशयन्

५. शास्त्रार्थ-परिपाटी-शास्त्रचर्चा-परिषद् आयोजकः —
डा० राजमोहन उपाध्यायः

६. उपाधि-प्रदानम्-काशीहिन्दू-विश्वविद्यालयेनाष्टाभ्यो प्रचेतनविद्व-द्भ्यो डी. लिट्. (मानद) उपाधिः वितीर्णः कुलाधिपतिना महाराज-विभूतिनारायणसिंहेन

७. संग्रहालय—हस्तलिखितग्रन्थ-प्रदर्शनम्, भारतकला-भवने

८. अभिनय—प्रेक्षणम् संगीतं च—नागरी-नाटक-मण्डली-प्रेक्षागारे

९. सारनाथ-दर्शनम्

१०. गङ्गादर्शनम्—तुलसीघट्टादयः, मनोरञ्जनकार्यक्रमाश्च

११. आयुर्वेदिक-प्रदर्शनी-आयोजकः पं० शिवकुमारः शास्त्री

१२. काशीराजन्यासस्य रजतजयन्ती—शिवालयघट्टे

१३. ग्रन्थ-प्रदर्शनी-आयोजकः राष्ट्रियग्रन्थन्यासः

१४. ब्रह्मोद्यस्य भागग्राहिणः—भारतीयविदुषां सप्तशती वैदेशिकविदुषां च द्विशती ।

## पूर्ववृत्तम्

संस्कृतं विश्वेषां मानवलोकानां भाषासु आदिमं स्थानमर्हति, यतो हि नामेदं विहाय नान्या कापि भाषा पुराणीतमत्वादनादिविशेषं लभते। न केवलं पुराणीतमा भाषापि तु मानवलोकस्य पुराणीतमा संस्कृतिरपि साहित्यद्वारेण संस्कृतमेव वेदादिषु समक्षयति। अत एव विश्वस्य सर्वे पुराविदः पूर्वजानां पुराणतमं वृत्तं जिज्ञासमानाः संस्कृतमेव सादरं समाश्रयन्ते। इदंमुद्दिश्य फ्रान्सदेशस्य पेरिस-नगरे संस्कृतानु-शीलनस्यान्ताराष्ट्रिय-संस्कृताध्ययन-परिषद् १९७२ खीष्टाब्दे दिल्लीनगरे समायोजितस्य विश्वसंस्कृत-सम्मेलनस्य प्रथमाधिवेशनस्य प्रस्तावानु-नुसारेण स्थापिता। अस्याः समाश्रये पुनः द्वितीयं विश्वसंस्कृतसम्मेलनम् इटलीदेशस्य ट्यूरिन-विश्वविद्यालये १९७३ ई० वर्षे, बर्लिनगरे १९७५ ई० वर्षे तृतीयं विश्वसंस्कृत-सम्मेलनं, पूर्वजर्मनीदेशे वाइमरनगरे १९७९ ई० वर्षे चतुर्थं विश्वसंस्कृत-सम्मेलनं च समायोजितम्।

भारते पञ्चम-विश्वसंस्कृतसम्मेलनं अस्य देशस्य सांस्कृतिकराज-धान्यां काश्यां समायोजितमिति सम्मेलनस्य सञ्चालकानामौचित्य-विमर्शो-त्कर्षं प्रकटयति यतो हि नामात्रैव संस्कृतस्य महामनीषिणां चरण-विन्यासैः पूतपांसुभिः प्राच्यविद्यावतामभिनवविद्यानुसन्धानक्षेत्रेषु प्रगम-नाय नीराजनाभिषेकः शश्वत् सम्भवति।

विगते अक्टूबरमासे २१–२६ तिथिषु ज्ञानार्णवनिष्णातानां विश्व-विदुषां सम्मेलनं सोत्साहं महोत्सवरूपेण निष्पन्नम्।

# अनुसन्धान-संहिता

पञ्चम-विश्वसंस्कृत-सम्मेलने पञ्चसु वर्गेषु शोधपत्राणि वाचितानि। तद्यथा—

१. साहित्यम्, काव्यशास्त्रम्, भाषाविज्ञानं च।
२. धर्मशास्त्रं दर्शनं च।
३. समाजशास्त्रम्।
४ शिल्पकला:।
५ विज्ञानं यान्त्रिकी विद्या च।

अत्रास्माभिः शोधमहार्णवस्य संक्षिप्तिका प्रस्तूयते—

**अभिनयप्रकरणे नाट्यरसस्य साधनता**

**Natyarasa as an instrument of stageability of Plays : Suryakant Bali.**

नाट्यरसोऽभिनयौपयिकः सन् काव्य-रसाद् भिन्न एवेति प्रतिपादितम्।

**वेदाङ्गं तु संक्रान्तिसाहित्यम्।**

**Vedangas as a literature of transition : Sukumar Bhattacharji.**

वेदाङ्गेषु आर्येतरतत्त्वानि धर्मविषयकाणि भाषाविषयकाणि च प्रथितानि। तानि प्रायशः पुराणानुबन्धानि सन्ति।

**लोकानन्दनाटस्य पुष्पिकायाः समीक्षा।**

On the five Actwise Colophons to Candragomin's Lokanandanataka : Biswnath Bhattacharya.

ख्रीष्टस्य पञ्चमशताब्दे प्रणीतं पञ्चाङ्कं लोकानन्दनाटकं कुमारमणिचूडजातकस्य कथामाश्रयते। अद्यावधीदं नाटकं तिब्बतीभाषानुवादेनैव लब्धम्। पञ्चानामङ्कानामन्ते पुष्पिकारूपेण यल्लिखितं तस्य तिब्बतीपाठस्य संस्कृतानुवादद्वारेणादर्शः प्रस्तूयते।

'इति श्रीमद्विरागः परमसुकृताभिधानो।
धरां कृत्स्नां प्रसिद्धया विशति जयत्येक एव ॥
इदं स्वातन्त्र्यरायारुचिरमिह चन्द्रगोमि।
प्रणीतं नाटकं स्यात् सहृदय-हृदाददानम् ॥'

अयमंशः संस्कृतनाटकेषु नवीनां प्रथां प्रकटयति।

### संस्कृत-महाकाव्य-परम्परा

Sanskrit Epic Tradition III : Fashions in formulae : J. L. Brockington.

महाभारतरामायणयोः लोकोक्तीनां, सूक्तीनामुपमादीनां च साम्य-वैशिष्ट्ये प्रदर्शिते अत्र। तदनुसृत्य रामायणमहाभारतयोः पौर्वापर्यं विश्लेषितम्।

### रिचर्डवागनेर-कृतौ भारतीयमैत्रीभावस्याधारशिला

The Indian Foundation of the conception of love in the Tristan and Isolde of Richard wagner : Giulio Cogni.

रिचर्ड वागनेरः १९५९ खीष्टाब्दे स्वात्मानं बौद्धजीवनदर्शने दीक्षितो बौद्धधर्मस्य मैत्रीभावं स्वनाटके लक्षीकरोति। तदनुसारेण मैत्री न केवलं द्वयोः प्राणधारिणोरेव सम्भवति, अपितु विश्वात्मकचराचरैर्मैत्री सम्पद्यते।

### समुद्रमन्थनचम्पू-समीक्षा

A note on the Samud ramanthana Campu : K. S R. Datta.

'समुद्रमन्थनचम्पू' काव्यस्य प्रणेता रामरायः (१८७५–१९१४ ई०) आन्ध्रप्रदेशस्य गुन्तूर-जनपदं समलञ्चकार। अयं महालेखकः काव्य-नाटक व्याकरण-स्तोत्र-दर्शनादीनि समाश्रित्य १४३ ग्रन्थान् निबध्नाति स्म। चम्पूकाव्येऽस्मिन् रमापरिणयम्, गरुडसन्देशश्च स्वतन्त्रचम्पू इति शोभते अयं महाग्रन्थः १६०० पृष्ठेषु हस्तलिपौ प्रपन्नः।

### क्रमपाठस्य महत्त्वम्

Importance of the Kramapatha : G. V. Devasthali.

मूलतो वैदिकपाठस्त्रिविधो वर्तते—संहितापाठः, पदपाठः, क्रमपाठश्च। एते समाहारतः प्रकृतिपाठ इति सञ्ज्ञिताः। प्रकृतिपाठो वैदिकसंहिताया व्याख्याया प्रथमतया माहात्म्यं भजते। एतेषु पाठेषु अधुना क्रमपाठ उपेक्षित एव विस्मृतः।

क्रमपाठः सार्थकपदानामेकत्र संहृतिः प्रतिभाति। क्रमपाठांशः स्वतोऽर्थदृष्ट्या पूर्णः। क्रमपाठे एतादृशे सति तस्य महत्त्वं वैदिकव्याख्यायां स्पष्टमेव—

उपसर्गाणामाख्यातमूलता आचार्यधर्मेन्द्रनाथ

लैटिनपारसीकादिभाषाणामुदाहरण-सम्भृता धर्मेन्द्रनाथस्य 'उपसर्गाणामाख्यातमूलता' पद्यबद्धनिबन्धनेन चारुतामावहति।

वनीवाहनम्

Vanıvahana : I. C. Heestermann.

शतपथब्राह्मणे 'वनीवाहयते' इति पदस्य प्रायः प्रयोगो दृश्यते। तत्र वनीवाहयते पदेन यज्ञविधाने उख्याग्ने रथेन वहनं विनिवेद्यते। इदं वहनं युद्धविजयानन्तरं लब्धधनस्य रथेन विजेतृभिर्हरणमनुकृतं भवेत्।

पूर्वोक्तमूलार्थे विस्मृते वनी प्रकर्ष इत्यर्थं द्योतयति।[1]

अप्रकाशित-काव्यकृतेः 'महाकविदत्तसूरेः काव्यकृतीनामध्ययनम्—K. R. Joshi.

विदर्भस्य महाकविर्दत्तसूरिः स्वकाव्यकृतिभिः खीष्टस्य विंशशताब्दं समलङ्करोति स्म। तस्य कृतित्रयं प्रसिद्धम्—

(१) आत्मनिवेदनम्—महाकाव्यं सर्गाः ३३ श्लोकाः ३९०० विषय आत्मचरितम्।

(२) दत्तचित्रस्तुतिः ४१ श्लोकमयी

(३) संशयरत्नमाला—मोरोपन्तस्य संशयरत्नमालायाः संस्कृतेनानुवादः

आत्मनिवेदने कविर्न केवलं स्वचरितमेव वर्णयति, अपितु तत्रादर्शभूतानां युगपुरुषाणां—शिवराजलोकमान्यबालगङ्गाधरादीनां चरितं

१. वनीपदस्याधुनापि पारिश्रमिकद्रव्यार्थे प्रयोगो दृश्यते।

शिवायनतिलकायननाम्ना वर्णितम्। शिवायनं सर्गद्वयेन तिलकायनञ्च सर्गाणामेकविंशत्या निबद्धम्।

शङ्करकवेः श्रीकृष्णविजयम्

Srıkrisn Vijaya of Sankarakavi : Rajkumari kubba.

पञ्चदशख्रीष्टशताब्दस्य केरलीयः शङ्करकविः श्रीकृष्णास्य विजय-वर्णनया सह समकालिकस्य नृपतेः राजनीतिधर्मं विद्यावदानं चित्रयति। पञ्चदशशताब्दे केरलस्य सांस्कृतिकोपलब्धयः स्थाने स्थाने निर्दशिताः। तत्रत्या समृद्धिः, शान्तिः विभूतिश्च कविमुखेन चित्रिताः सहृदय मनासि प्रीणयन्ति।

पुर्तगालदेशीये नाटके पञ्चतन्त्रप्रभावः

**From Visnusarman to GilVicente or the Influence of the Pancatantra in a Portuguese play of the XVIth century : Margarida C. de lacerda.**

गिलविसेण्टः पुर्तगालस्य षोडशशताब्दीयो लेखकः पञ्चतन्त्रस्यान्यतमां कथामाश्रित्य नाटकं रचितवान्।

पश्चिमोत्तरामेरिकामहाद्वीपस्य कतिपय-स्थलनामानि भारतीय-मूलानि

**Some aboriginal place-names of Western North-America with suggested Sanskrit Origins ; Donald Lawrence and Makarand S. Jawedekar.**

अलास्का—ब्रिटिशकोलम्बिया-वाशिङ्गटन-केलीफोर्नियादि शब्दानां भारतीयशब्दैः सह नैरुक्तिकं सामञ्जस्यं समायोज्य लेखको भारतैः सह अमेरिकायाः पुरासम्बन्धं विकल्पयति।

तमिल-व्याकरणस्य संस्कृतव्याकरणाधारः

**Sanskrit Grammar as Model for Writing Tamil Grammar : K. Meenakshi.**

तमिलभाषायाः प्रथमं व्याकरणं तोल्काप्पियम् संस्कृतवैयाकरणिक-पारिभाषिकपदावलीमनुहरतीति लेखकेन विशदीकृतम्।

अष्टाध्याय्यामार्येतराः शब्दाः

**Non-aryan words in the Astadhyayi : Hari Mohan Mishra.**

अष्टाध्याय्यां पञ्चागतप्राया शब्दाः आर्येतरमूलकाः विनिवेशिता दृश्यन्ते । तद्यथा—

पादपेषु—आम्र-कुमुद-कुलत्थ-कुस्तुम्बुरु-जम्बू-ताल-पीलु-बिल्व-मस्कर मुञ्जवंश-वेणु-शरादयः ।

प्राणिषु—गोधा-चातक-नकुल-नक्र-बिडाल-मयूर-पिच्छ-शुण्डादयः ।

मानुषेषु—पोटा, तुण्डादयः ।

लोकावासेषु—कन्था-कुटी-कुटीर-खेट-नगरादयः

नित्यप्रयोजनीयेषु—कवच-कार्मुक-कुण्ड-खट्वा-गुड-गोणी-चोर-चीवर-चेल-माला-शूर्प-हैलहिलादयः ।

संज्ञासु—आढक-कटुक-काल-कौपीनादयः ।

विशेषणेषु—कठिन-चिपटि-चिकिनादयः । एतेषु कतिपय शब्दाः कार्मुक-कुटीरादयः संस्कृतधातोर्निरुच्यन्त इति विसंवादोऽपि पाणिनेः प्रतिष्ठास्पदम् ।

भान्तिदृशास्तृशर्मणश्चातकसन्देशः—

**P. C. Murli madhawan.**

केरलेषु गुरुवायुपुरे भन्तिट्टनामके विद्वत्कुले शास्तृशर्मा (१) रत्नमालिका (२) गङ्गातरंगिणी (३) चातकसन्देशश्चोनविंशशतके विरचितवान् । गंगातरंगिणी गंगाया विश्वनाथस्य स्तुतिं प्रस्तौति । चातकसन्देशः पुनर्मेघदूतपथेन पूर्वभागे मन्दाक्रान्ताछन्दोभिः शङ्करनारायणक्षेमशिवपुर-गुणकापुर-कोटिलिङ्गपुरजयन्तमङ्गल - ग्रोघ्रोनगरी - पूर्णवेदपुरी-व्याघ्रालय-हरिसङ्गीतदेशादीनां सरसवर्णनां विधत्ते । उत्तरभागे हरिसङ्गीतदेश-प्रियतमामन्दिरादिक चित्रयित्वा कवि. समकालिकपण्डित-कवीन् वर्णयति ।

## संस्कृतकाव्यशास्त्रे उत्कलस्य योगदानम्

**Orissa's contributions to the theory of Sanskrit Poetics : Ketakinayak.**

उत्कलदेशस्य साहित्यशास्त्रकाराः रसालङ्कारगुणरीतिदोषध्वनि-निरूपणे किञ्चिदन्यमेव चमत्कारपदमवलम्बन्त इति लेखकेऽन्यदेशीयैः साहित्यशास्त्रोपोद्घातान् तुलनात्मकदृष्ट्या समीक्षते। संस्कृतके मुस्लिम साधक इति शोभानाथ पाठकनिबन्धे कतिपयमुस्लिमशासकाना संस्कृत-सवर्धनाय प्रयासो वर्णितः तेषा राजसभा संस्कृत-पण्डितैः कवि-भिश्च समलङ्कृता बभूव।

## वैदिकोऽध्वरो यज्ञस्य

**Vedic term Adhvara and Yajna : Ramgopal.**

अध्वरो यज्ञस्य पर्याय इति प्राचां मतमधुना स्वीक्रियते। अध्वरयज्ञ इति पदे अध्वरो यज्ञो नास्त्येव। अत्राध्वरस्य कोऽपि अन्योऽर्थोऽन्वेषणीयः अध्वरशब्दोऽध्वन् शब्देन समञ्जसति। अध्वनोऽर्थो गमनं पन्थाश्च भवति। एतदनुसृत्य अध्वरो लेखक दृशा विधिविधानसंयुक्त इति विशेषं सङ्केत-यति। मूलतो विशेषणमिदं परवर्तिकाले स्वतो सुसम्पन्नं यज्ञं द्योतयति स्म। सोमयज्ञ एव सुसम्पादितोऽध्वर इति परत उद्भावना। यज्ञस्य व्यञ्जनया बहवोऽर्थाः सञ्जाताः, यथा—पूजा, प्रार्थना, पाठः, स्तुतिः। एतेषु हव्यस्यापेक्षा नास्ति। लेखकस्य विचारणा डा० गोण्डा महोदयस्य मतं विपरिणमयति। सोऽध्वरो गतिशीलः, यान्त्रिको वा मन्यते।

## विवेकानन्द-रवीन्द्रनाथयोराङ्गलकवितायां भारतीयशाश्वतविचारणा

**Classical and Indian thoughts in the English poems by Vivekananda and Rabindranatha : Subroto ray.**

उपनिषदां जीवनदर्शनमाश्रित्य रवीन्द्रनाथो बहुलिखितवान्। तेन पाश्चात्यकवयो विचारकाश्च वासिता आसन्। विवेकान्दोऽपि आंग्लभाषया गद्यपद्यरचनाभिरुपनिषद्दर्शनं विदेशेषु प्रचारितवान्। तस्य कवितालेखकेनोदाहृताः।

## उत्तररामचरिते कालस्य संरचना

**The structure of time in the Uttararamacarita : Ranjit Sankar.**

भवभूतिनाटकेऽस्मिन् भूतं वर्तमानेन संयोज्य कारुण्यं सम्यक् तनुते। तत्र प्रथमाङ्के चित्रदर्शने भूतकालिकघटनाः समीक्षिताः। तृतीयाङ्के यौवनदर्शनम् सप्तमाङ्के च गर्भनाटकद्दय्ये भूतदर्शनमेवाभिप्रेतम्। अस्मिन्नेवाङ्के भूतं वर्त्तमाने समायाति विलीयते च।

## 'काव्येषु नाटकं रम्यम्' अभिप्राय-विमर्शः

**On the Implications of the statement 'काव्येषु नाटकं रम्यम्' : Mukunda Madhava Sharma.**

अत्र प्रो० शर्मा 'सर्वविधेषु काव्यबन्धेषु नाट्यतत्त्वमेव सर्वोत्कृष्टां रुचिरतामावर्जयतीति साधुप्रतिपादयति। इदमेव लोकोक्तेरभिप्रेतम्।

**संस्कृतमहाकविश्चण्डीदासस्तस्य साहित्यञ्च Gangadatta Shastri.**

चण्डीदासो हरियाणाप्रदेशस्य पुण्डरीकग्रामे १९०५ ई० वर्षे जातः। तेन २२ ग्रन्था विरचिताः। तेषु ' १ ग्रन्थाः प्रकाशिताः सन्ति चण्डीदास-ग्रन्थावल्याम्। तत्र महाकाव्यद्वयं, लघुकाव्यानि, स्तोत्राणि च विलसन्ति।

## भाषा-विकास-पद्धतिः

Dilect Geography in Ancient India Rekha Sinha

विकासक्रमेण भाषानामानि सन्ति—

वैदिकयुगे—दैवी आसुरी च।
यास्कयुगे—भाषा ( लोकभाषार्थे )
पाणिनियुगे—छन्दस्, लौकिकः ( प्राच्य-प्रतीच्योदीच्यमध्यदेशीयाः )
पतञ्जलियुगे—म्लेच्छभाषा अथवा अपशाब्दः ( लौकिकभाषा )
वररुचियुगे—महाराष्ट्री, शौरसेनी, मागधी, अर्धमागधी, पैशाची च।

## मणिपुर—जानपदेषु संस्कृतजीवनदर्शनं प्रभवति

The Influence of Sanskrit on the life and Thoudht of the Meitei People : M. Kirti Singh.

मणिपुरे मीतीजना वसन्ति । तत्रोत्तरप्रदेश—बङ्गासमप्रदेशेभ्यो गताः साधु-ब्राह्मण-वैष्णव-वणिजोभारतीयसंस्कृतिं प्रसारितवन्तः । मणिपुरे १८ खीष्टशताब्दतोगौडीय-वैष्णवधर्मो राजधर्म इति प्रतिष्ठापितः । लोकास्तत्र संस्कृतं संस्कृतसाहित्यञ्च पठितवन्तः । मणिपुरीभाषयासंस्कृत-ग्रन्थाअनूदिताः । स्थानीयशिल्पकलां समाश्रित्य संस्कृतेन ग्रन्था राजाश्रितकविभिः प्रणीताः । अस्यां स्थितौ तत्र मणिपुरे उत्कीर्णलेखाः, मुद्राः, मूर्तयः, ध्वजाश्च सर्वे भारतीयभाषां संस्कृतिञ्चोद्वहन्ति ।

### वेङ्कामात्यस्य रूपकाणि

Rupakas of Verikamatya : M Shivakumar-swamy.

कर्णाटप्रदेशे रामपुरे वेङ्कामात्योऽष्टादशशताब्दे महीशूरराजानां हैदरालीं यावत् मन्त्री बभूव । तेन बहूनि नाटकानि, चम्पूः, शास्त्राणि च विरचितानि ।

### मधुरा—विजयम् : मनोरमा तिवारी

मधुराविजयं वीरकम्पराजचरितं वा चतुर्दश-शताब्दस्योत्तरार्धेगङ्गा-देव्या विरचितम् । एतेन स्त्रीकवीनामुत्कर्षः प्रगुणी क्रियते । काव्यालङ्कार-सौष्ठवेन महाकाव्यतत्त्वेन च कृतिरियं सहृदयानामाह्लादस्थानमेव ।

### ब्राह्मणेषु वैदिकधर्मस्य विवरणम्

The Exposition of Vedic Religion in the Brahmans with special reference to the Satapatha Brahmana : Goyadeva Arya

लेखकोऽत्र वैदिकयज्ञप्रक्रियासु पिण्डब्रह्माण्डयोर्व्यञ्जनां दर्शयति ।

### भारतीय-सांस्कृतिकादर्शेतन्त्रस्यप्रभावः

Influence Tantra on the cultrual life of India : Suresh Chandra Banerji.

लेखकस्तन्त्रे आयुर्वेदं, सङ्गीतं, नृत्यं, कलाः, अर्थशास्त्रं च समाश्रययति । सर्वाणि दर्शनानि, धर्मपथाश्च तन्त्रानुयायिनो विराजन्ते ।

### हिन्दुधर्मं, शक्तिसम्प्रदायस्तस्य संस्कृतोद्गमश्च

Sakti Cult in Hinduism and its Sanskrit Sources : B. Chakravarti.

शक्तिसम्प्रदायस्य मूलमृग्वेदस्य देवीसूक्तं नास्ति। अयं सम्प्रदायो वस्तुतः पुराणेषु तन्त्रेषु च चण्डी-काली-दुर्गारूपेण देव्या असुरैर्युद्ध समाश्रित्य प्रवर्तते। कालिकापुराणयोगिनीतन्त्रयोर्वर्णनानुसारेण शक्तिपूजाया उद्भवो हिमालयेषु भारतीयमङ्गोल,जनेषु प्रावर्तत। हिमालये महाचीनं गत्वा वसिष्ठः शक्ते रहस्यं तस्याः प्रसादन-विधिश्चाधीतवान्। भारते समागत्य नीलाचलतः (कामाख्यादेशे) तां विद्यामध्यापयामास। पार्वतीदुर्गादिनामानि पार्वतोद्भवमस्म सम्प्रदायस्य सङ्केतयन्ति। शक्तिपूजायां वामाचारोऽवैदिक एव।

### कालिकोटलिकू

Kali-Coatlicue : Marja Ludorika Garocka.

मैक्सिकोदेशस्यादिवासिनां कोटलिक्यूदेवी भारतीयकालीदेव्या संवदति। देवीद्वयं भयङ्करं, कपालभूषितं, लोकरक्षकं च वर्तते।

### सत्यनारायणव्रतकथा तत्रोद्बृंहणञ्च

Satyanarayana Vratakatha and upabrimhana S. G. Kantawala.

उपबृंहणस्य निदर्शनं सत्यनारायणव्रतकथामाश्रित्य निष्पादितं लेखकेन। इय कथा भविष्यपुराणे स्कन्दपुराणस्य रेवाखण्डे च वर्तते।

### तन्त्रधर्मः

Tantrism : Juan Miguel de Mora.

तन्त्रधर्मोऽन्यभारतीयधर्मा इव नास्ति अवैदिकः।
जीनफिलि ओजानुसारेण—

The vestiges of the effective development of all Hindu thought to date are to be found in the Veda and therefore Tantrism in its deffe-

rent branches-either has its roots in the Veda or rests on it or adopts its formulas, but in no instance does it deny it.

तन्त्रं मोक्षाय प्रवर्तते । मोक्ष एव तस्य चरममुद्देश्यम्, किन्तु तत्र मोक्षेण सह त्रिवर्गस्यापि सामञ्जस्यं प्रसाधितम् । घोरतपसा शरीरस्येन्द्रियाणां वा शोषणं तन्त्रस्याविदितमेव ।[१] इन्द्रियादीनामात्मना सोपान-सम्बन्धो नोपेक्षणीयः । तन्त्रं व्यावहारिकाभ्यासपथेन मानवं वैज्ञानिक-विधिनोन्नयति ।

लेखकानुसारेण विश्वस्य विविधभागेषु पुरातनकालतः तन्त्रसदृशा धर्मपथा प्रचलन्ति । तन्त्रस्य वैचारिकस्तरउच्च एवाभाति । स एव प्रत्यक्षतः मैथुनादि-सवृतः स्पेन-न्यूस्पेन ( मैक्सिको )-देशेषु प्रचरति ।

### शाकम्भरी शताक्षी च

Sakambhari and Sataksı : Amita Mukhergee.

शाकम्भरी, शताक्षा, भगवती शिवा, अनन्तकोटि-ब्रह्माण्डनायिका, जगदम्बिका, अन्नपूर्णा, अन्नदा, नीलदेवी-इत्येतानि नामानि पर्याया एव विलसन्ति । शाकम्भरी अन्नदात्री रूपेण शोभते । लोकस्य रक्षायै इयं देवी शरशरासनादिभिः समलङ्कृता, तस्य पोषणाय च सरसफलैर्भृता मातृरूपेण तिष्ठति ।

### वैदिकसाहित्ये कर्मकाण्डे च गर्दभः

The ass in the Vedic Mythology and Ritual : Hukam chand Patyal.

गर्दभोऽश्व-वृषभ-गो-छाग-श्वान-सूकर-कच्छप-कपि-मण्डूकाहिगरुडादिभिः सह दिव्यं पदं भजते, अलौकिकशक्ति-सम्पन्नश्च राजते । गर्दभोऽश्विद्वयस्य वाहनोऽस्ति । तत्र गर्दभेष्टिः प्रचलितासीत् । अनेन यज्ञेन पापं प्रक्षाल्यते स्म ।

### महाभारते नारायणीयम्

The Narayaniya in the Mahabharata : V. G. Rahurkar.

१. कालिदासेनापि प्रोक्तम्—'शरीरमाद्यं खलु धर्मसाधनम्' ।

क्षीरोदधेरुत्तरदिशिश्वेतद्वीपेलब्धजनिर्नारायणसम्प्रदायो यथानाम-सात्त्विकतां सम्यग्विभर्ति। आत्मगुणानां विकासः, लोकरक्षा, विश्वात्मिकाहिंसा, प्रेमव्यवहार इत्येतादृशा लोकाभ्युदयपन्थानो नारायणेननारदाय ब्रह्मसंसदि व्याख्याताः। त एव परिवर्तियुगे वैष्णवधर्मं प्रपूरयन्ति।

### बौद्धसंस्कृतसन्दर्भाणामाधुनिकोपलब्धिः

### Recent Discoveries of Buddhist Sanskrit Mss fram Tibet. : Gustav Roth

इंगलैण्ड-फ्रान्स-जर्मनी-जापान रूसदेशीया गवेषकाः १९०२ खीष्टाब्दतः १९१४ ई० पर्यन्तं बौद्धसंस्कृतस्य हस्तलिखितग्रन्थान् लब्धवन्तः। अस्यां दिशि राहुलसांकृत्यायनस्योपक्रमा (११३५-१९३८ ई०) सविशेषं साफल्यमभजन्। तेन भारतेऽलभ्यानि बहूनि बहुमूल्यपुस्तकानि त्रिविष्टपदेशात् समानीतानि। तेषां संक्षिप्त-परिचयो लेखकेन प्रास्तावि।

### परिवर्तिलघूपनिषत्सु सरस्वती

### Saras vati in the later Minor upanisads : Raghunath Airi.

परवर्त्युपनिषदस्तान्त्रिकप्रवृत्तिं विशेषयन्ति। तेषु सरस्वती नदीरूपेण न समाम्नातापि तु शक्तिदेव्या स्वरूपं धारयति। सा सृष्टिरूपा वर्तते, महालक्ष्मी पुनर्लक्ष्मीरूपा, रुद्राणी च संहाररूपा भवतः। कृष्णस्य सहचरीरूपेण सरस्वती कलहंसी भवति, स्वरासलीलयाचान्याः सख्योऽतिशेते। वाग्देवीरूपेण सा नारायणमाराधयति, तस्यानुज्ञया च महालीलां प्रयोजयति। देवीत्रये गायत्री, सावित्री, सरस्वती च प्रतितिष्ठन्ति। परवर्त्युपनिषत्सु सा ज्ञान-विज्ञानादीनामधिष्ठात्री देवीति प्रथिता वर्तते। सा अक्षरम्, परमनादः, शब्दब्रह्म, वैखरीति रूप्यते।

### गुप्तकालीनोत्कीर्णलेखेषु शिक्षापद्धतिः

### Education Systems as are known from the Gupta Inscenptions : Manbendu Banerji.

उत्कीर्णलेखानुसारेण ज्ञान-विज्ञानयोश्चतुर्दश, अष्टादश वा शाखाः, शालातुरीयं व्याकरणं, अथर्ववेदः, शतसाहस्री (महाभारतश्च)

अध्ययन-विषया आसन्। आचार्य उपाध्यायश्चाध्यापकानां द्वैविध्यमासीत्। भट्ट इति विदुषामुपाधिरासीत्। चतुर्वेदिनो ब्राह्मणा चतुर्णां वेदानां पण्डिता आसन्। नैगमाश्च वेदव्याख्यातारो बभूवुः। अग्रहारेषु विहारेषु चाध्ययनं प्रचारत्। घटिकाप्रवचनसंस्थासीत्। शिष्या ब्रह्मचारिण इति संज्ञिताः। चतुर्विद्या, ज्योतिष-विद्या, लोकविद्या चाधीताः। कलाविदः शिल्पिनश्च साहित्यविषये प्रविष्टा आसन्।

### महाराजप्रसेनजित् तथा प्रथमबुद्धमूर्तिः

**King Prasenajit and first Buddha Image : K. Chaudhary.**

फाह्यानानुसारेण कोसलाधिपतिः प्रसेनजित् श्रावस्त्यां बुद्धमूर्ति निर्मापयामास। ह्वेनसांगानुसारेण कौशाम्ब्यां महाराजोदयनो बुद्धस्यमूर्ति रचयामास। मूर्तिनिर्माणं गौतमस्यजीवनकाले बभूव। ब्रह्मप्रदेशस्य वट्टङ्गुलिराजजातके तस्य मूर्तिनिर्माणस्य वर्णना रोचते।

### विधवा-पुनर्विवाहः

**Widow Remarriage : V. L. Sethuraman.**

लेखकः सोदाहरणं विधवाविवाहस्य प्रथां शास्त्रसम्मतत्वं च प्रमाणयति।

### भारतीय-पशुशिल्पे जिर्राफः

**The Giraffe in Indian Animal Art : Arion Rosu.**

कोणार्के, श्रीशैले, मुद्विद्री च जुर्राफस्य प्रतिमानं वर्तते। होशङ्गाबादस्य गुहासु तेषां चित्रणमस्ति। पश्चिमभारते मुगलकलाकृतिषु च जुर्राफस्य दर्शनं भवति। खीष्टस्य द्वादशशताब्दतः ऊनविंशशताब्दं यावत् भारतीय कलाकृतिषु जुर्राफस्यावस्थितिः साधुप्रमाणयति यद् भारतस्य पूर्वाफ्रीकादेशेन पश्चिमभारतेन च व्यापारिकसम्बन्धः सम्यक् प्राचरत्। अरबदेशीयैर्नाविकैः योरप-पारस-भारत-चीनादिषु देशेषु जुर्राफो नीतः।

### किं भारतं कर्गदस्याविष्कारकः?

Did India Invent Paper? P. G Gosawi

साधारणतश्चीनदेशः कर्गदस्य कर्त्तेतिमन्यते । तत्र १०५ ई० संवत्सरे कर्गदं निर्मितं पश्चात् ख्रीष्टस्य दशम-संवत्सरे भारते कर्गदस्य प्रचारोऽजायत । नैतत् सत्यमिति लेखकेनाभिनवानुसन्धानमाश्रित्य साधु प्रमाणितम् ।

### वत्सनाभः, आसुर्वेदस्य रसप्रयोगो विषाधिकरणे

Contribution of Ayurvedic Rasa Therapy to the Medical Sciences in putting the poisonous Roots to Therapy with particular Reference to Aconites Vatsanabha : R S Singh and L. B. Singh.

बहवस्तत्रविषवृक्षा भारते विदेशेष्वपि सन्ति येषा मूलं, पत्रं, वल्कलं, शाखा, पत्रं, पुष्पं, फलमित्यादीनि प्राकृतरूपेण रसद्रव्यरूपेण वा मारणाय प्रयुज्यन्ते । सुदूरभूतकालेऽपि तेषां विषं प्रायुज्यत । धातूनां परिवर्तनेऽपि तानि प्रयुक्तानि। एतेषां प्रयोगो रोगाणां निदाने, विष-प्रभावस्य हरणेऽपि दृश्यते । विषस्य विषमौषधमिति निगदेन व्याख्यातम् । अत एव विषममृतस्य पर्यायोऽभवत् । एतत्सर्वं भारतस्य वैशिष्ट्यं विलसति । वत्सनाभ इति ख्यातो विषवृक्षः सविशेष वर्णनमस्यां दिशि सम्यगर्हति ।

### महाभारते यूरेनस-नेप्च्यून-प्लुरटो-विज्ञानम्

Uranus, Neptune and Pluto were knower to the Mahabharata : P. V. Vantak.

लेखको महाभारतीयग्रहाणां स्थितिमवधाय महाभारतस्य रचनाकालः ५५६२ ख्रीष्टपूर्व संवत्सर इति प्रमाणयति, यतो हि नाम तस्मिन्वर्षे ग्रहाणां महाभारते चितास्थितिरभवत्, या पुनरपि कोटिशो वर्षाणामनन्तरमेव भविष्यति । तस्मिन् पुरातने काले व्यासेन 'यूरेनस-नेप्च्यून-प्लुटो' इति ग्रहानवर्णयत् । एतत्सर्वं योरोपीयैराधुनिकयुगे ज्ञातमिति-भारतस्यवैज्ञानिकं प्रगमनं महिमानमर्हति ।

### पुंसवनाधिकारे आधुनिकवैज्ञानिकानुसन्धानप्रक्रियायां संस्कृतस्योपयोगः

Avenues for Harnessing Sanskritology to Modern

Experimental Research with special Reference to Pumsavana : V, VenkataChalam

पुंसवनमितिमहत्त्वपूर्णशैशवसंस्कारो गर्भस्य पौत्रिकस्वरूपं विधातुं प्रायुज्यत। तस्मिन् विधौ अस्ति काचिद्वैज्ञानिकतेति विज्ञानयुजां संस्कृतज्ञानां च संगवेषणा प्रवर्तते।

### पार्वती-दुर्गा-ललिता-देवीनां साम्य-वैषम्य-निदर्शनम्

The asbeats of Golden Parvati, Durga and Labita : C. L. Prabhakar.

पार्वती एव दुर्गा-ललिता-रूपेण विलसति। तासु यत् किञ्चिदन्तरं विद्यते, तदपि लेखकेन विश्लेषितम्।

### वैदिकपञ्चाग्नयः, आगमिकपञ्चमूर्तयश्च

Five Vedic Fires and five Agamic Images : D. Sridhara Babu.

समूर्तपूजा, अमूर्तपूजा च वैखानसानां यज्ञविधानमनुसरति। अग्न्याधानं तु देवस्य प्रतिष्ठेव। वैदिकाग्नेः पञ्चरूपाणि दक्षिणः, गार्हपत्यः, आवाहनीयः, सभ्यः, आवसध्यश्च वैखानसागमस्य ध्रुवः, कुतुकः, उत्सवः, स्नपनः, बलिश्चेत्येतानि पंचविधमूर्तिरूपाणि व्यञ्जयन्ति। व्यङ्ग्यसादृश्येनामूर्तपूजा समूर्तपूजेति परवर्तिपूजाद्वयं मूर्तीनां मन्दिराणां च विधान-विकल्पनं समर्थयन्ति।

### शैवसिद्धान्तस्य सस्कृत उद्गमः

Sanskrit Sources of Saiwa Siddhanta : P Thirugnanasambandhan.

शैवसिद्धान्तस्य वैदिकता नियता वर्तते। शैवानुसारेण वस्तुतः शिव एव वेदानामागमानां कर्तास्ति। ऋग्वेदे रुद्रसूक्त, यजुर्वेदे शतरुद्रीयं, श्वेततरोपनिषद्, श्रीरुद्रोपनिषद्, मृगेन्द्रकामिकपुष्करादय आगमाश्चवैदिकपरम्परामवगाहन्ते शैवसिद्धान्तस्य। ब्रह्मसूत्रे गीतायाश्च शैवसिद्धान्तोऽन्तभूत एव। वेद-शैवागमयोः सामञ्जस्यमभिप्रेतंलेखकस्य। तमिलनाडुप्रदेशे तमिलसाहित्ये शैवसिद्धान्तस्यनिर्वर्णनं स्पष्टीकृतमत्र।

# विदेशेषु संस्कृताध्ययनम्

## आस्ट्रिया

डा० ओबरहैमर पराशरभट्ट-विरचित-तत्त्वरत्नाकरस्य प्रथमभागं प्राकाशयत्। तस्यैव नाथमुनेर्न्यायतत्त्वं प्रकाशपथेवर्तते। स न्यायदर्शनस्य तर्कशास्त्रस्य च कोश-प्रणयने व्यावृतः।

वियनानगरे बौद्धन्यायस्य गवेषणा प्रवर्तते। एतद्विषयमधिकृत्य शोधप्रबन्धद्वयं प्रणीतम्। ग्राजविश्वविद्यालये ग्रीस-रोम-भारतदेशानां सम्बन्धस्याकलनं मौर्ययुगाद् हर्षयुगपर्यन्तं प्रवर्तते।

तत्र भारतीयविद्यापरायणाः संस्था-स्तत्रत्यानुसन्धानप्रकाशने व्यापृताः सन्ति—

(१) इंस्टिटयूट आव इण्डालोजी, वियना।

(२) इंस्टिस्टयूट आव तिबेतन एण्ड बुद्धिस्ट स्टडीज।

## बेलजियम

१८४१ ख्रीष्टाब्दे लोवेननगरस्य कैथोलिक-विश्वविद्यालये संस्कृत-शिक्षणस्य समारम्भोऽभवत्। तत्र नगरत्रये संस्कृतमध्याप्यते। प्रो० ए० शारपेकालिदास-लेक्सिकन इति ग्रन्थ समाप्तिं नयति। प्रागेवद्वौभागौ प्रकाशितौ। अन्यत्र वेद-रामायण-महाभारत-पुराणादिषु वर्णितानां स्थलीनां स्थिति-परिचयग्रन्थो निर्मीयते प्राचीनभारते वैज्ञानिकपरम्परेति-हासस्यविलासोऽनुसन्धीयते।

## कनाडा

टोरण्टो-विश्वविद्यालये दक्षिणैशियानुशीलनकेन्द्रे संस्कृताध्ययनस्य संविधा विद्यते। ब्रिटिशकोलम्बिया विश्वविद्यालये संस्कृतेन पी. एच्. डी. उपाधयेऽध्ययनस्य सुविधा १९७९ ख्रीष्टाब्दत उपकल्पिता। अस्मिन्देशेऽपरेषु कतिपयविश्वविद्यालयेषु संस्कृताध्ययनं शनैः-शनैः वर्धत एव।

कैनेडियन एसोशियेशन आव सस्कृत एण्ड रिलेटेड स्टडीज स्वकीये वृत्तपत्रे यथाकालं संस्कृत-जगति नूतनविकासक्रमं सदस्यानां कृते प्रकाश-यति। तत्र सस्कृत-साहित्ये भक्तिपथः, संस्कृत-व्याख्यापद्धतिः, कनाडा-

विश्वविद्यालयेषु संस्कृतभाषाध्यापनम्, संस्कृतनाटकमित्यादयोविषयाः तस्य कार्यक्रमे विन्यस्ताः। बहवो विद्वांसो भारतीयविषयानवलम्ब्यानुसन्धाने तत्र व्यापृताः।

संस्कृतविषयस्य ७०,००० पुस्तकानि टोरण्टो-विश्वविद्यालयस्य पुस्तकालये सविशन्ति। अपदेषु विश्वविद्यालयेष्वपि संस्कृत-पुस्तकानां प्राचुर्यं वर्तते।

ब्रिटिशकोलम्बिया–ब्राक–कैलगैरी–मैकगिल–मैकमास्टर–न्यूफाउण्डलैण्ड-विण्डसर विश्वविद्यालयेषु संस्कृतायनस्य संविधासातत्यं प्रवर्तते। कतिपय-विश्वविद्यालयेषु अनियतकालिक-व्यवस्था सम्भवति।

**चीन**

बीजिङ्ग—विश्वविद्यालये तथा चाइनीज-एकेडेमी आव सोशल-साइंसेज इति संस्थयोरनुसन्धानपथेन संस्कृतविषयकाः पुराविद्याः संवर्धन्ते। बहवो भारतीयभाषाग्रन्थाः चीनीभाषयानूदिताः। भारतीयदर्शनं विशेषतो बौद्धदर्शनं, कालिदासः, मनुस्मृतिः इत्येतानि तेषां प्रियविषयाः।

**डेनमार्क**

अस्मिन्देशे संस्कृत-पालिभाषया निबद्धा ग्रन्थाः तेषां दार्शनिक-भाषावैज्ञानिकसांस्कृतिकपक्षाश्च सादरमधीयन्ते। विदुषां तत्र कोशनिर्माण-प्रवृत्तिः साधुवादमर्हति। पालिकोशः, संस्कृत-तिब्बती-इंगलिश-कोशश्च तेषां महत् कर्म।

**फेडरल-रिपब्लिक आव जर्मनी**

ऊनविंशख्रीष्टाब्दस्यारम्भकाल एव संस्कृताध्ययनस्यारम्भोऽभवत्। इदानी विंशतिः विश्वविद्यालयाः संस्कृतशिक्षाप्रवणाः सन्ति। प्रधानविषयः, सहायकविषय इति द्विविधं संस्कृताध्ययनं प्रवर्तते। एम० ए० पर्यन्तं चतुर्वर्षीया शिक्षा भवति। पश्चाद् द्विवर्षीयः पाठ्यक्रमः पीएच्० डी० उपाधये प्रचरति। पश्चात् डी० लिट्० उपाधयेऽध्ययनक्रमः षड्वर्षीयो भवति। रीडरपदाय, प्रोफेसरपदाय वा डी० लिट्० उपाधिरेवार्हतां व्यनक्ति।

तत्राधोलिखिता अनुसन्धानविशेषाः प्रवर्त्तन्ते—

१. वेदानुशीलनम् ( उपनिषदो यावत् )
२. महाभारत-रामायण-पुराणानुशीलनम्
३. काव्याध्ययनम्
४. शिल्प-कला-विज्ञानादीनि
५. हिन्दुधर्मः
६. दर्शनम् ( भाषादर्शन-युतम् )
७. जैनधर्मः
८ बौद्धधर्मः ( गिलगिट् हस्तलेखानुशीलनयुतः )
९. सांस्कृतिक इतिहासः
१०. कलाया इतिहासः
११. सहकारिविज्ञानम् ( पाठसमीक्षा, शिलालेखः )
११. भाषाविज्ञानम् ( भारोपीयम् विशेषतः )

आधुनिकयोजनाः

१. जर्मनदेशस्थानां संस्कृतहस्तलिखितग्रन्थानां सूची
२. तुर्फानदेशे प्राप्तानां बौद्धग्रन्थानां संस्कृतकोशः
३. बौद्धसंस्कृतसाहित्यस्य सर्वेक्षणम्
४. नेपाल-जर्मन हस्तलिखितग्रन्थ-सुरक्षा
५ जैनसाहित्यस्य पद्यात्मकसूची
६. जर्मनदेशीयानां भारतीयपुराविदां शोधपत्रसूची

तत्र पञ्चसु पत्रिकासु संस्कृत-विद्या-विषयका लेखाः प्रकाश्यन्ते। देशेऽस्मिन् जर्मनओरिण्टल-सम्मेलनं मार्च २४-२९-१९८० वर्षेऽभवत्। संस्कृत-पालि-प्राकृत-ग्रन्थानां प्रकाशनं क्रियते। जे० लेपिङ्गमहोदयस्यानुसन्धानं भारतीयकृषि-सेचन विज्ञानमधिकृत्य प्रवर्तितम्।

बहुविधा जर्मनदेशीयानां भारतीयविद्या-विषयकानुसन्धानप्रवृत्तयो भारतीयविदुषामपि आदर्शपथं प्रदर्शयन्ति।

### फिनलैण्ड

हेलसिङ्की-विश्वविद्यालये संस्कृताध्यापनस्य व्यवस्था वर्तते १९८० वर्षे दक्षिणेशिया-सम्मेलने वेदश्च समाजश्चेति विषयमधिकृत्योद्घाटन-

भाषणम भवत् । बौद्धावशेषाणां प्रदर्शनी १९८० वर्षे समायोजिता । तत्र ४०० वस्तूनि प्रदर्शितानि । १९८० वर्षे दक्षिण-भारतीयसंस्कृतिः समाजश्चेति विषयमधिकृत्य गोष्ठी अभवत् ।

तत्रत्यानां भारतीयविद्यानुरागः स्पृहणीय एव ।

### फ्रान्स

फ्रान्सदेशे संस्कृतविद्यानुसन्धानमनुत्तममेवप्रचरति । इदानीं तत्र संस्कृतकाव्यं काव्यशास्त्रञ्च, धर्मं ( वैदिक-पौराणिक-काश्मीरशैव-जैन-बौद्धादिकम् ) इतिहासं; प्राचीनोत्कीर्णलेखं, व्याकरणं, तन्त्रं दर्शनं-भाषाविज्ञानं, कोश-रचनमायुर्वेदं चाधिकृत्य लेखराशिर्निबद्धः प्रकाशितश्चभारतीयं गौरवं संवर्धयति । तत्रत्याः प्रमुख-विद्वासः जीन फिलियोजा-लुञ्झिकस्टर्न वाख-डैनियलडानेट-हेलीनस्टार्क-लिलियनसिलवर्न-जेक्समेस्टाइन-एरियलरोसु-इत्यादयो नित्यं भारतपुराविद्याप्रकर्षण-व्युत्पत्तौ निरताविलसन्ति ।

### जर्मन-डेमाक्रैटिक-रिपब्लिक

वर्लिननगरे हम्बोल्ट-विश्वविद्यालये सस्कृतमध्याप्यते । तत्र एम० ए०, पीएच० डी० उपाधये प्रशिक्षणं भवति । संस्कृत-प्राकृत-साहित्येषु, प्राचीनेतिहाससंस्कृतिषु चानुसन्धानं प्रवर्तते । तत्र सस्कृत-नाटकविषयस्य व्याख्याता वर्तते । उख्वाल्टर-रुबेन तत्र भारतीयपुराविद्यायाः प्राचार्योऽस्ति । अत्रैव १९७९ ख्रीष्टाब्दे संस्कृतं विश्वसंस्कृतिं चाधिकृत्य विश्व-संस्कृतसम्मेलनमायोजितम् ।

लाइपजिगनगरस्य कालमार्क्स-विश्वविद्यालये वेदकाव्यादिविषयाणा-मनुसन्धान-निर्देशको व्याख्यातानियुक्तः ।

मार्टिनलूथर-विश्वविद्यालये संस्कृतस्य भारतीयपुराविद्यानां चानुसन्धानव्यवस्था प्रचरति ।

वर्लिननगरं वाल्टररुबेन महोदयस्यानुसन्धानस्थली वर्तते । स भारत-ग्रीसदेशयोरैतिहासिकविचारणायाविकासमधिकृत्य ग्रन्थं प्रणीतं-वान् । तत्र भारतीयदर्शनं च तुलनात्मकदृष्ट्यानुशीलितम् ।

लाइपजिगनगरे क्लासमाइलियस प्राचीनभारतस्य साहित्यिकेतिहासं प्रणीतवान् ।

## हंगरी

हंगरीदेशे संस्कृताध्ययनस्य वर्षशतादधिकं व्यतीतम्। तत्र संस्कृत-भाषाविज्ञानम्, भारोपीय-भाषावैशिष्ट्यस्य तुलनात्मकविवेचनम्, प्राकृत-भाषा इत्यादीनि सविशेषमधीतानि। अनुसन्धान-परम्परा तत्र नित्य-नूतनोन्मुखी जागर्ति। कुशाण-युगस्य वैशिष्ट्यानि, शुकसप्ततिः कथा-साहित्यम्, पुरातन-सांस्कृतिकसम्बन्धाः इत्यादीनि विद्वद्भिरधीतानि। संस्कृतनाटक ग्योर्गी कर्स महोदयस्यानुसन्धानक्षेत्रं वर्तते। पञ्चतन्त्र-नीतिशास्त्रादिकमधिकृत्य नवनवोन्मेषो निबध्यते। 'हंगरीदेशस्य विद्यार्णवे साहित्ये च भारतम्' इति तत्रत्यप्रकाशने भाषयानूदितानि संस्कृतपुस्तकानि सूचितानि। विज्ञानसंस्थाने तत्र संस्कृतहस्त-लिखितग्रन्थराशिः वर्तते। बहुषु शोधपत्रिकासु संस्कृत-विषयकाणि शोध-वृत्तानि प्रकाश्यन्ते। काश्यपीयकृषि-सूक्तिरिति ग्रन्थे भारतीयकृषेः पुरातन्त्रं वर्णितम्। होरकादोना ज्ञान-विज्ञानात्मकशोधपत्र प्रकाशितमेव।

## इटली

इटलीदेशे सस्कृताध्ययन सस्पृह संवर्धते। तत्र संस्कृत-विजयक-सर्वोत्तम-शोधपत्राय पुरस्कारो घोषितः। तत् पत्रं क्वाडर्नी डि इण्डोलाजिका टोरिनेसिया पत्रे प्रकाशिष्यते। टोरिनो-मिलनो-जेनोवा-पिसा-बोलोग्ना-रोमा-नेपीलो-बारी-विश्वविद्यालयेषु साहित्य-दर्शनविभागेषु सस्कृताध्ययनं सविशेषं वर्तते। तत्र संस्कृतनाटकस्येतिहासः प्रकाशितः। कौटिल्यार्थशास्त्रमिटलीभाषयानूदितम्, संस्कृत-इटेलियनकोशो निर्मीयते च।

मिलन-विश्वविद्यालयस्य संस्कृत-प्राचार्येण सी० डेला महोदयेन इटलीभाषया संस्कृतव्याकरणं विरचितम्। भाणविषयमधिकृत्य तत्रानुसन्धानमुन्नीतम्। बुद्धचरितस्यानुवादस्ततः प्रकाशितः। बिल्हणस्य चौर-पञ्चाशिकानूदिता। जिनोवा-विश्वविद्यालये प्रो० एस० पियनो पुराणपाठ-विषयमाश्रित्यानुसन्धानं वितनोति।

पिसा-विश्वविद्यालये संस्कृत-वैदिकभाषाविज्ञानमधिकृत्यानुसन्धानं विधीयते। वैदिकसस्कृतिस्तत्रत्याना पाटवक्षेत्रं सुप्रकाशितमेव।

बोलोग्ना–विश्वविद्यालये भारतीयधर्माध्यात्मविषयकः शोधः प्रवर्तते। रोमविश्वविद्यालये गिलगिट-हस्तलिखित-ग्रन्थान् समाश्रिय बहुकृतम्। पातञ्जलयोगस्तत्रत्येभ्यो ज्ञानविज्ञानदृशा प्ररोचक एव।

वारी—विश्वविद्यालये भारतीयसंस्कृतेरप्रथितपथा उन्नीयन्ते डा० साल्पीमहोदयेन।

अन्यत्र विदुषां मणिचूडावदानम्, भगवद्गीतां, गरुडम्, संगीतम् चाधिकृत्यानुसन्धाने प्रवर्तते।

## जापान

टोकियो–विश्वविद्यालये संस्कृतस्य पीठं विराजते। तत्र तकाकुसु इत्यादयो विद्वांसः संस्कृतोपासका बहुविधं संस्कृतकार्यं समपादयन्। तत्र भारतीय-बौद्धाध्ययनयोः परिषद् वर्तते। अथर्ववेदसंहितायाः सूक्तशतकस्यानुवादोऽभिचारपरम्परेत्यापकेन साहित्यविवरणेन सह प्रकाशितः। भगवद्गीताया अनुवादः, तस्याः पाठः,दर्शनं, धर्म इत्यादीन् विषयान् समाश्रित्य विवरणेन प्रकाशितः। जापानीयसांस्कृतिकपरम्पराणां परिचयोऽत्रोविधो वर्तते—

जापानीभाषयानूदितं ब्रह्मसूत्रशाङ्करभाष्यं प्रकाश्यमानं वर्तते। अपरं च व्यासकृतं योगसूत्रभाष्यं जापानीभाषयानूदितं प्रागेव प्रकाशितम्। वैशेषिकदर्शनस्य मूलसूत्राणि जापानीभाषया सानुवादेनाकलितानि।

पञ्चतन्त्रस्य पुनरनुवादो विहितः ओ० तनकः शुकसप्ततेः दशकुमारचरितस्य चानुवादकः प्रथितः। वाइ० इवमोटो जापानी-भाषया वाल्मीकिरामायणस्यानुवादे व्यापृतः। तत्र भूमिकायां रामकथाया विश्वविस्तारो निर्दशितः। अनेनावदान-साहित्य-विशेषज्ञेन संस्कृतस्य बहव महत्त्वपूर्णाः कृतयः—कामसूत्रम्, मृच्छकटिकम्, सद्धर्मपुण्डरीकसूत्रम्, कतिपयोपनिषदः इत्यादयः प्रकाशिताः।

युवत्रयेण आर्यभटीयं, लीलावती, आपस्तम्बशुल्बसूत्रमिति विज्ञातसन्दर्भा अनूदिताः १९८० खीष्टाब्दे प्रकाशिताश्च। जापानीयैर्विद्वद्भिः 'सिन्धु–सभ्यता', अशोकः, धम्मपदम् इत्येतादृशा भारत-

माहात्म्य-द्योतका ग्रन्थाः प्रकाशिताः। जैन-प्राकृत-विषयका ग्रन्थाश्च तेषां रोचनप्रवृत्ति संवर्धयन्ति।

### लैटिन अमेरिका

ब्राजिलनगरस्य साओ पोलो विश्वविद्यालये संस्कृतभाषायाः साहित्यस्य चाद्यन्तशिक्षा प्रदीयते। तस्मिन् भूभागे संस्कृतविदुषां लैटिन-अमेरिकन-परिषद् १९८० खीष्टाब्दे स्थापिता। तत्र संस्कृतविशेषज्ञानां सम्मेलने हिन्दुधर्मः, भवभूतिः, अमरुः, पञ्चतन्त्रम्, अनादित्वम्—इत्येदृशा विषया विवेचिताः। १०८१ वर्षे पुनःसाओ पालो-विश्वविद्यालये संस्कृत-विदुषां प्रथमं लैटिन-अमेरिकन-सम्मेलनं सम्बभूव। तत्र विदुषां महत्तरः समवायः आसीत् शोधपत्राणां बाहुल्यञ्च प्रावर्तत।

पूर्वोक्तसम्मेलनयोर्विवरणं संस्कृत-संस्कृतिरिति नामके ग्रन्थे प्रकाशितम्। तत्र ऋग्वेदस्य स्पेनोभाषयानुवादः प्रणीतः, उत्तररामचरितस्यानुवादश्च प्रकाशितः। शङ्कराचार्यस्य मोहमुद्गरम्, भर्तृहरेर्नीतिशतकं च सानुवादं प्रकाशिते। ब्राजिलनगरे संस्कृत-व्याकरणं स्पेनीभाषया प्रणीतः।

मैक्सिको-नगरस्य १९८२ खीष्टाब्दीयां संस्कृत-महाविद्वत्सम्मेलनं संस्कृतस्य भावि-प्रगतिदिशां सङ्केतयति।

### नेपाल

नातिदीर्घोपेक्षाभाक् संस्कृतं पुनरपि उन्नयनाभिमुखं प्रवर्तते। इदानी त्रिभुवन-विश्वविद्यालये सस्कृतसंस्थानं संवर्धितम्, अन्येषु च पञ्चषनगरेषु याज्ञवल्क्य-वाल्मीकीत्यादीनां महर्षीणां नाम्ना प्रख्याताः संस्कृत-संस्थाः प्रादुर्भूताः। पाठ्यक्रमे वेदः, साहित्यम्, वेदान्तः, मीमांसा, व्याकरणं, ज्योतिषं, धर्मशास्त्रमित्यादीनि संगृहीतानि।

नेपाले राजकीय-सङ्ग्रहालये हस्तलिखितसंस्कृतग्रन्थराशि वैशिष्ट्यं भजते। न केवलं तद्देशीया वैदेशिका अपि विद्वांसस्तत्र समागत्य ज्ञान-विज्ञान-प्रकाशं लभन्ते।

### नीदरलैण्ड

नीदरलैण्डस्-प्रदेशे संस्कृताध्ययनस्य भास्वती परम्परा जागर्ति। १९७९ खीष्टाब्दतस्तत्राचोविवमनुसन्धानं प्रावर्तत—

डा० जे० ब्राङ्ख्स्टं पाणिनिमधिकृत्य १९८० ई० वर्षे शोधनिबन्धं पी०एच्०डी० उपाधये प्रणीतवान्। स इदानीमाद्यतनबौद्धसाहित्याध्ययनेन बुद्धस्य मूलवचनानि समुद्धर्त्तुं यतमान आस्ते।

डा० एच्० एल्० डेनीलसन शङ्करस्याद्वैतवेदान्तमधिकृत्य १९८० वर्षे पी० एच्० डी० उपाधिमवाप्तवान्।

श्रीमती एम० निहोम योगरत्नमालायाः सटिप्पणमनुवादकर्मणि व्यापृता वर्तते। श्रीमती एम०स्परबूम यज्ञेषु रथायोजमधिकृत्य पी०एच्० डी० निबन्धमुपस्कुरुते। श्रीमती एच्० जे० एच्० टीकेन दाक्षिणात्यहालसप्तशत्याः पाठशोधं निर्मीति।

प्रो० डा० टी० ई० वेट्टर: शङ्करदर्शनस्य विकासमवोते।

यूट्रेक्ट नगरस्य प्राच्यभाषा-संस्थाने डा० बोडविज: वेदेषु आत्मविमर्श:, अरण्यानी-सूक्तम्, द्यावापृथिव्योर्विवाह: इत्यादीन् विषयानधिकृत्यानुसन्धानपरायण:। डा० ए० ए० ब्रूनिस संस्कृते षष्ठीविभक्ते: कार्यमधीते। श्रीमती बर्गमहोदया अत्रे: समूर्तार्चनाधिकरणमधिकृत्यशोधेन पी०एच्० डी० उपाधये कार्यपरायणा।

१९८० खीष्टाब्दे डा० दालेन-महोदय: वाल्मीके: संस्कृतमधिकृत्य पी०एच्०डी० शोधनिबन्धं प्रकाशितवान्।

यूट्रेक्ट-नगरे बहवो विद्वांसो हिन्दु-तन्त्रधर्मे, साहित्ये चानुरागिण: सन्ति। तत्र कालिकापुराणस्यानुवाद: सम्पादित:। डा० ए० नगटेरेन ईश्वरप्रणिधानं गवेषते। तत्र सङ्गीतशिरोमणिराङ्गलभाषयानूद्यते, मुत्तूस्वामी-दीक्षितस्य कमलाम्बिका-नवावरणकीर्तनं च सटिप्पणं धार्मिकमाहात्म्यानुयोजितञ्च व्याख्यायते।

बालिद्वीपीय-संस्कृतमधिकृत्य विवेचनात्मकमनुशीलनं प्रवर्तते, पुराण-तन्त्रयोरनुबन्धमाश्रित्य गवेषणा प्रचरति च।

ग्रानिञ्जानस्य 'भारतीयभाषा-सस्कृति-संस्थाने 'अयोध्याया: पुरावृत्तमनुशील्यते। भारतीयतीर्थयात्रामधिकृत्य ततो डच-प्रवन्ध: प्रकाशित:। डा० एल्० पी० वानडेन त्वष्टारमधिकृत्यानुसन्दधाति। हिन्दु-जैनबाद्धाना तीर्थानां यात्रामधिकृत्य डा० जे० एन्सिङ्कमहोदयो निबन्धं

निर्माति। ततो बोधिचर्यावतारस्य डचभाषयानुवादः प्रकाशितः। भारतीय-साहित्यस्येतिहास-प्रणयने डा० जी० जे० स्यूलेनबेल्ड-महोदयो वैज्ञानिकं यान्त्रिकं चाधिकरणं निर्माति।

ऐम्सटर्डम–विश्वविद्यालये डा० जे० ए० एफ० रूडवर्गन महोदयः पतञ्जलेर्महाभाष्यं किरातर्जुनीयस्य कुवलयानन्दस्य टीकाञ्चानुशीलति।

यूट्रेक्ट–विश्वविद्यालयतो लब्धावकाशः डा० जे० गोण्डा-महोदयः ऋग्वेदं, वैदिककर्मकाण्डं, शतरुद्रीयं चाधिकृत्य गवेषणा-रतः।

## पोलैण्ड

पोलैण्डदेशे वार्सा-नगरे 'रामायणं तस्य प्राचीन-भारतीय-साहित्ये स्थितिः' इति विषयमधिकृत्य कार्यं प्रवर्तितम्। देशेऽस्मिन् 'मुद्राराक्षसस्य विवेचनम्, संस्कृत-नाटकस्य व्याख्या-पद्धतिः, भारतीय-संस्कृतौ नाटकस्य स्थानं, संस्कृतनाटक और बम्बइया-सिनेमा' इत्यादि विषयानधिकृत्य कार्यं प्रवर्तते। स्वप्नवासवदत्त तत्र पोलिशभाषयानूदितः। 'प्राच्य-साहित्यस्य सैद्धान्तिकप्रश्नाः' इति समाधानं प्रस्तूयते च।

बरबारा ग्रैबवस्का जयदेवः 'वैष्णवगीतकाव्यञ्चेति पुस्तकं प्रकाशितवान्।

क्राकाउनगरे बौद्धदर्शनमधिकृत्यकार्यं प्रवर्तते। पोलैण्डदेशे 'पोलिश-साहित्ये भारतीयः प्रभावः' इति विषयमवलम्ब्य निबन्धाः प्रकाशिताः। जैनदर्शनानुशीलनं च तत्र प्रवर्तते।

संस्कृतस्याध्यापनं लूबिननगरस्य कैथालिन-विश्वविद्यालये, वार्सा-नगरस्य एकेडेमी आव कैथालिकथियोलोजीति संस्थायां विलसति।

## रूमानिया

बुखारेस्ट-विश्वविद्यालये प्राच्य-भाषाविभागे संस्कृतं हिन्दी चाध्याप्येते। तत्र भारतीय-संस्कृतिपरायणाध्ययनमण्डलं विलसति च।

देशेऽस्मिन् प्राच्यविद्या- प्रवणा रूमानियायो-परिषद् प्रचरति।

सेरगिउ जार्जमहोदयो रुमानियायी-संस्कृतौ भारतमधिकृत्य प्रबन्धं प्रकाशयति।

रवीन्द्रनाथ-कालिदासादीनां कृतीनां तत्रत्यानां लोकप्रियरचनाभिस्तुलनात्मकं विवेचनं प्रस्तूयते प्रकाशनद्वारेण ।

### स्पेन

स्पेनदेशस्य मैड्रिड-विश्वविद्यालये, सलमनका-विश्वविद्यालये च संस्कृतं पाठ्यते । तत्र मेघदूतस्य बृहदारण्यकोपनिषदो भगवद्गीतायाश्चानुवादः प्रकाशितः । विवेकचूडामणि-माण्डूक्योपनिषत्-पञ्चतन्त्रादिषु गवेषकाणामध्ययनं सम्यक् प्रचरति ।

### श्रीलङ्का

लङ्कायां विश्वविद्यालयत्रयं स्नातककक्षायां स्नातकोत्तरकक्षायां च संस्कृताध्ययनं प्रस्तौति—

१. केलनिय विश्वविद्यालयः
२. जफना-विश्वविद्यालयः
३. पेरडेनिया-विश्वविद्यालयः

### स्वीडन

स्वीडनदेशेऽधोलिखित-विश्वविद्यालयत्रये संस्कृतमध्याप्यते—

१. गोटवर्ग        २. स्टाकहोल्म        ३. उप्पसल

स्टाकहोल्म-नगरे १९८० ख्रीष्टाब्दे 'रायलस्वीडिश-एकेडेमी आव लेटर्स' इति संस्थया भारतीय-विद्या-सम्मेलमायोजितम् । तत्र प्रकाशिता इण्डोलाजिका टौरिनेन्सिया पत्रिका भारतीपुराविद्यामधिकरोति । उप्पसलत ओरियण्टालिया सूचना, स्टाकहोल्मतः ओरियण्टलिस्का स्टूडियर इति पत्रिकाद्वयं भारतीयविद्यात्मकलेखान् प्रकाशयति ।

उप्पसल-विश्वविद्यालये सामोपनिषद्, भगवद्गीता, तमिलभाषा चेति विषयानधिकृत्यानुसन्धानं प्रवर्तते, शोधलेखाश्च ततः प्रकाशिताः ।

गोटवर्ग-विश्वविद्यालयतः विष्णुपुराणम्, व्याकरणञ्चाश्रित्याध्ययनं प्रवर्तितम् ।

स्टाकहोल्म विश्वविद्यालये आयुर्वेदस्यमूलपारिभाषिकशब्दावली, काव्यशास्त्रं, धर्मशास्त्रं, पुराशिल्पं, देवरहस्यं, बङ्गसाहित्यमिति विषयानधिकृत्य विद्वद्भिर्लेखाः पुस्तकानि च प्रकाशितानि ।

## रूस ( U. S. S. R. )

अतोऽधोलिखितानि भारत-विषयकाणि प्रकाशनानि विलसन्ति पुस्तकरूपेण—

१. भारतीयेतिहासः
२. भर्तृहरेः शतकत्रयम्
३. प्राचीन-भारतीय-संस्कृतिः
४. भासः
५. वैदिकसाहित्यानुशीलम्
६. बौद्धधर्मदर्शनम्
७. मध्ययुगस्य साहित्यं संस्कृतिश्च
८. मध्ययुगस्य काव्यस्य चयनिका सानुवादा
९. आदिमकाव्य-विषयका शास्त्रीयप्रश्नाः
१०. ऐतिहासिकधार्मिकस्थलीनां पुरावृत्तम्
११. ब्राह्मणीयगद्यव्याख्या-विमर्शः
१२. भारते साहित्यिक-विकासः
१३. विद्यापतिः

तत्र विदुषां शोधनिबन्धा अधोविषयान् स्पृशन्ति-हरिवंश-पुराणम्, राजशेखरः, सिन्धुसभ्यता-लिपिः, अर्थशास्त्रीया समाज-व्यवस्था, भारोपीयभाषा-विमर्शः, लोकायत-दर्शनम्, शङ्करस्यवेदान्तदृष्टिः, महाभारते स्त्रीणां प्रतिष्ठा, भारतीयविज्ञान-शिल्प-यन्त्रादीनां विमर्शः, हीनयान-महायान-शब्द-समीक्षणम् शैवसम्प्रदायः, भारतीयाचारसंहिता-विमर्शः, भारतीय दर्शनस्य मूलप्रवृत्तयः, भारतीयधर्म-समीक्षा, मोक्षशास्त्रं महाभारते तीर्थवर्णना, वैदिकलौकिकसंस्कृतयोः विकासानुबन्धश्च ।

इंगलैण्डदेशे अतिप्राचीनकालतः संस्कृताध्ययनपरम्परा भृशंप्रवर्तते । विगतवर्षद्वये यच्छोधकार्यं संवृत्तं तेन तत्रत्यानां सांस्कृतिकप्रवृत्तयः प्रकाश्यन्ते—

रामायणस्य वाक्यरचनाविमर्शः, यज्ञोपवीतम्, उदासरामः, साक्यनिरुक्तयः, धातोरर्थाः, विज्ञानभिक्षोः कृतयः, संस्कृत-व्याकरणेऽव्ययम्, विरहभक्तिः, जातकमालानुवादः, एकायन-विमर्शः, धर्मस्योपयोगो

दुष्प्रयोगश्च, लङ्कावतारसूत्रे वादकौशलं, रामानुजस्य प्रवचनानि, नागार्जुनस्य तार्किकप्रक्रिया चैतानि शोध प्रकाशनानि।

तत्र भारतीय-विद्याध्ययनं सर्वाङ्गीणं सम्यग् विकसति-शोधद्वारेण।

**अमेरिका ( युनाइटेड स्टेट्स आव अमेरिका )**

अमेरिका देशे संस्कृतानुसन्धानं साङ्गोपाङ्गं विलसति। तथा हि—

ब्राउन-विश्वविद्यालये प्रो० डेविडपिङ्गरी 'संस्कृते विज्ञानम्' इति विषयमाश्रित्यानुसन्धत्ते।

कैलिफोर्निया-विश्वविद्यालये रामायणस्याङ्गलानुवादस्य प्रथमो भागः प्रकाशितः।

शिकागो-विश्वविद्यालये महाभारतमनूद्यते। अनुवादकार्यं शीघ्रमेव पूर्णतामियात्। नगरेऽस्मिन् अमेरिकनइंस्टीटयूट आव इण्डियन-स्टडीज प्रचरति। इयं संस्था भारतीय-संस्कृतिमधिकृत्य कृतकृत्या वर्तते।

हार्वर्डविश्वविद्यालये कम्प्यूटर-यन्त्रद्वारेण साहित्य-समीक्षा-तत्त्वान्यूह्यन्ते।

वाशिङ्गटन-विश्वविद्यालये भारतीय-दर्शन-विश्वकोशो निर्मीयते।

पेनिसिल्वानिया-नगरे—फिलालेल्फिया विश्वविद्यालये भारतीय-विद्यानाम् अत्रत्य शिल्पकलादीनां च भृशं गौरवं डा० स्टेला क्रमऋषेः प्रयत्नानुसन्धानानुशीलनादिभिर्माहात्म्यं भजते। तत्र शिवतत्त्वस्य-कलात्मकविवेचनं सङ्ग्रहालय-साह्येन मूर्तिचित्रादिसाधनैरनुत्तमविधिना सम्पाद्यमानं दृश्यते।

**युगोस्लाविया**

जाग्रेब-विश्वविद्यालये संस्कृताध्यापनमुच्चस्तरीयं प्रवर्तते। यथा-कालं सर्वे भारतविद्यानुरागिणो विद्वांसो नवानुसन्धानोन्मुखा संगच्छन्ते, भारतीयसाहित्यं संस्कृतिञ्चानुप्रश्नं विमृशन्ति। तत्र पञ्चतन्त्रस्याभिनवोऽनुवादः १९८० खीष्टाब्दे प्रकाशितः। उपनिषद्दर्शनमधिकृत्य निबन्धो बेलग्रेड-नगरतः प्रकाशितः। अन्याश्च बहुविधाः संस्कृतप्रवृत्तयः तस्मिन् देशे सोत्साहं प्रवर्त्यन्ते।

काशी-हिन्दूविश्वविद्यालये

# संस्कृतव्रताधिकृतानां सम्मानोपाधि-सम्भावनम्

कुलपतिः काशीनरेशः डॉ० विभूतिनारायणसिंहः

## प्रो० जान फिलिओजा

षडशीतिवर्षीयः फ्रांसदेशीयश्च अत्रभवान् फिलुओजामहोदयो बाल्यादेव विद्यार्जने सानुरागः। नवीने भैषज्यशास्त्रे प्राप्तोत्कृष्टोपाधिः डॉक्टर ऑफ लेटर्स'-पदवीमपि प्राप्य पेरिसस्य पाण्डुग्रन्थविभागीये प्रोफेसरपदे, भारतीयदर्शनविभागीये निदेशकपदे बहुषु चान्येषु महत्त्वपूर्णेषु शिक्षापदेषु प्रतिष्ठितः संस्कृतस्य महती सेवां कृतवान् करोति च। बहूनां शिक्षासंस्थानां सदस्यत्वेन संमानितोऽयं भारतीयं भैषज्यंशास्त्रमधिकृत्य पाण्डुग्रन्थांश्चाश्रित्य महत्त्वपूर्णान् ग्रन्थान् विरच्य प्राचीकटत्। भारतीयं दर्शनमप्यधिकृत्य रचितग्रन्थरत्न एष आगमशास्त्रेष्वपि प्राप्ताधिकारः काञ्चीशैवसंप्रदायेऽपि ग्रन्थविशेषं प्राकाशयत्। भारतरोमसम्बन्धेष्वपि विद्वानेष महत्त्वपूर्णौ ग्रन्थौ प्राचीकटत्।

## प्रो० जान गोण्डा

लब्ध-प्रतिष्ठो गोण्डामहोदयो नैकासु संस्थासु संस्कृतस्य सेवां कृतवान् महत्त्वपूर्णान् ग्रन्थांश्च प्रकाशितवान् पुराणानि, महाभारतम्, संस्कृतरूपकम्, धर्मः, दर्शनम् भारतीयं भाषाशास्त्रं चैतेषु विषयेषु।

# प्रो० रामचन्द्रनारायणदाण्डेकरः

डाक्टर रामचन्द्रनारायणदाण्डेकरः सर्वविधस्य संस्कृतवैदुष्यस्य सुदुर्लभः संगमः। १९०९ ख्रीष्टाब्दस्य मार्चमासस्य सप्तदशे दिने प्राप्तजन्मा श्रीदाण्डेकरो मुम्बईविश्वविद्यालयस्य एम० ए० परीक्षां संस्कृतविषये प्राचीनभारतीयेतिहाससंस्कृत-विषये च प्रथमया श्रेण्या तत्रापि प्राथम्येन चोत्तीर्णः। १९३८ ख्रीस्टाब्दे विद्वानेष होल्डनवर्ग विश्वविद्यालयस्य पी एच० डी० शोधोपाधिं प्राप्तवान् ततः परं पुण्यपत्तनस्य फर्गूसनमहाविद्यालयं, पुणे विद्यापीठं, पुणे संस्कृतोच्चानुशीलनकेन्द्रं भण्डारकरप्राच्यविद्या-शोधप्रतिष्ठानं च सेवितवान्। पुणे-विद्यापीठस्य संस्कृतप्रोफेसरपदमसौ विंशति वर्षाणि भूषयित्वा तत्रैव कुलपतिपदमपि व्यभूषयत्। भारतीयवैदेशिकानां चानेकेषां शिक्षासंस्थानानां सदस्य एष साम्प्रतम् अन्ताराष्ट्रमहामण्डलस्य अध्यक्षपदं विभूषयति।

विश्वव्यापियशसो दाण्डेकर-महाभागस्य वैदुष्योत्कर्षः, विवेचनवैशद्यं, संशोधन-प्रामाण्यं, वेदेषु, धर्मेतिहासे च विशिष्य ग्रन्थसम्पादनं, सुदीर्घं सम्मेलनायोजनं, पौरस्त्य-परम्पराभिज्ञत्वं, पाश्चात्त्य विज्ञाननिकषग्राहित्वं, प्रभविष्णुमहानुभावश्च सर्वातिशायिकर्तृत्वेन न केवलं भारतीयानां वैदेशिकानामपि समादरभूमिः।

सामरैक

प्ररचनार्थ.

## प्रो० पाल थीमे

थीमे-महोदयः ट्यूबिंगन-विश्वविद्यालयस्य प्रसिद्धो भाषाशास्त्री, संस्कृतव्याकरणस्य परम्परागते क्रमे वेदविद्यासु च लब्धाधिकारः। तुलनात्मके ऐतिहासिके च भाषाविज्ञाने नवीनान् सिद्धान्तान् प्रावर्त्तयत।

वैदिकस्य लौकिकस्य च व्याकरणसंप्रदायस्य पारम्परिके कालक्रमे महदेवावदानं महोदयस्यास्य।

थीमे-महोदयस्य संमानो महत्तमस्य भारतीयविद्याविदः पाणिनि-व्याकरणे भृशं निविष्टस्य विदुषः सम्मानः।

## पं० रघुनाथशर्मा

प्राध्यापकः श्रीरघुनाथशर्मा छात्रावस्थात एव पाणिनीये व्याकरणे वेदान्तेषु चाधिगतपाटवातिशयः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य वेदान्तविषयस्य प्रोफेसरपदं वेदान्तविभागस्याध्यक्षपदं चालङ्कृत्य प्राप्तवयाः सेवातो व्यरमत्। अहर्निशमनवरतया चाध्यापने प्रवृत्तो महर्षिकल्प एष वेदान्तशास्त्रे व्याकरणशास्त्रे च प्रमाणभूत आचार्यः। असावस्य महामतेरुल्लेखनीयो विशेषो यदसौ व्याकरणस्य नवीनं प्राचीनं चेति उभयविधेऽपि प्रस्थाने वेदान्तेषु च प्राचीनां शास्त्रीयामध्ययनपरम्परामनुरुध्य सुयोग्यान् शिष्यान् सम्यग् व्यनयत्। महत्त्वपूर्णान् ग्रन्थानप्यसौ व्यरचयत् यथा चित्रनिबन्धावली, वाक्यपदीयस्य नूतना विशाला च अम्बाकर्त्रीति व्याख्या च। सहस्राणि सहस्रशः पद्यान्यप्यसौ निरमान्निर्मीति च।

एतस्य शास्त्रवैदुष्यमाकलय्य सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः वाचस्पतिरि'ति संमानोपाधिना भारतस्य राष्ट्रपतिश्च संमानपत्रेण विद्वांसममुं सममानयत्। पञ्चाशीतिवर्षदेशीय एष इदानीमपि यथापूर्वमेव प्रवृत्तः शास्त्राणि अनुशीलयितुमध्यापयितुं च।

अस्य सुमेधसः सम्मानः संस्कृताध्ययनस्य शास्त्रीयायाः परम्परायाः कठोरस्य तद्रक्षणव्रतस्य सुदीर्घस्य स्वाध्यायतपोयोगस्य च सम्मानः।

# पं० चारुदेव शास्त्री

प्राध्यापकश्चारुदेवशास्त्री संस्कृतवैयाकरणेषु अन्यतमः श्रेष्ठो विद्वान् आरम्भादेव संस्कृतभाषाया भाषात्वेन अध्ययनं कुर्वाणः, तस्यैव व्याकरणे च भृशम् अवदधानः प्राचीनान् संस्कृतप्रयोगान् अवचित्यानुशील्य च संस्कृतवाक्यरचनां सविशेषमधीतवान् । एष संस्कृतभाषाया वाक्यरचनायां विद्यमानान् सूक्ष्मसूक्ष्मानपि विशेषान् प्रत्यभ्यजानात्, व्यरचयच्च 'व्याकरणचन्द्रोदय'-नामकं शोधपूर्णं नवीनं विशालकायं च व्याकरणग्रन्थम् । प्रायेण पञ्चाशद् वर्षाणि गवेषितसंस्कृतवाक्यरचनाविशेषस्यास्य ग्रन्थ एष उपसर्गार्थचन्द्रिकानाम्नापरेण विशालेन ग्रन्थरत्नेनान्वयायि । द्वावपीमौ विदुषोऽस्य महान्तौ समुल्लेखनीयौ च ग्रन्थौ ।

वाक्यपदीयस्य ब्रह्मकाण्डस्य अनेन संपादितं १९३४ तमे ख्रीष्टाब्दे लाहौरतः प्रकाशितं च संस्करणं ग्रन्थस्यास्य प्रामाणिकतमं प्रथमं संस्करणम्, संस्कृतव्याकरणदर्शनस्य स्वाध्याये एतेन भृशमुपाकारि संस्करणेन ।

पञ्चाशीतिवर्षीयोऽप्यसौ सांप्रतमपि यथापूर्वमेव निरतः संस्कृतस्य भाषाया वाक्यरचनायां विद्यमानान् विशेषानवचेतुम् । सोऽयमस्य अमन्दोऽभियोगः संस्कृतस्य भाषात्वेन क्रियमाणे इदं युगे चात्यन्तमेवावश्यकेऽनुशीलने ।

श्रीमतश्चारुदेवशास्त्रिण एवं विधान् संस्कृत-सेवा-विशेषानादृत्य भारतस्य राष्ट्रपतिः १९७१-तमे ख्रीष्टाब्दे शास्त्रिवर्यममुं सम्मानपत्रेण समभावयत् ।

एवं खलु संस्कृतस्य भाषात्वेनाध्ययने समुपार्जित-वितीर्ण-समुल्लेखनीय-नूतन-ज्ञान-राशेः प्राध्यापकस्य श्रीचारुदेवशास्त्रिणः संमानः जीवनव्यापिनः संस्कृतभाषास्वाध्याययोगस्य संस्कृतसेवाव्रतस्य च संमानः ।

## पं० राजानक लक्ष्मणजू

राजानको लक्ष्मणजू कश्मीरप्रतिष्ठिते महामाहेश्वराचार्यस्य श्रीमदभिनवगुप्तस्य तान्त्रिके शैवपीठे प्राप्तप्रमुखाचार्याभिषेकः, ततश्च महामाहेश्वरत्वेन सभाव्यमानः साम्प्रतमपि समाधि शैवशास्त्राणि च सम्यगुपसेवते। श्रीनगरे प्रतिष्ठापित-शैवपीठ एष स्थित्वा भारतीया वैदेशिकाश्चेति सर्वानपि अध्येतॄन् प्रत्यभिज्ञादिषु शैवशास्त्रेषु संस्कृतमाध्यमेनेव आङ्ग्लभाषामाध्ययेनापि विनयति।

तस्यास्य विरक्तस्य महापुरुषस्य संमानः संस्कृतविद्यया संपृक्तस्य त्यागयोगस्य विशिष्टस्य जीवनदर्शनस्य च सम्मानः।

## प्रो० रामजि उपा[illegible] [ सम्मानि[illegible]

प्रयागविश्वविद्यालयतः प्राप्त-स्नातक-स्नाकोत्तर-डा[illegible] रचनाभिः, सफी-पदवीक एषः सागरविश्वविद्यालयं सेवित्वा प्राप्त-डी० लि[illegible] स्तस्य संस्कृतविभागस्य वरिष्ठप्रोफेसरपदात् अध्यक्षपदाच्च प्राप्तसेवा-विरामः साम्प्रतमपि नाट्यशास्त्रस्यानुशीलने आधुनिकस्य संस्कृतसाहि-त्यस्य इतिहासनिर्माणे च यथापूर्वमेव व्यापृतः। 'द्वासुपर्णा' इत्युपन्यासः, 'भारतस्य सांस्कृतिकनिधिः' इति शोधग्रन्थः अन्ये च महत्त्वपूर्णा विशा-लाश्च ग्रन्था अनेन विरचिताः। 'आधुनिकं संस्कृत-वाङ्मयम्' अस्य प्रमुख कार्यक्षेत्रम्। अत्र विदुषाऽनेन भूयांसः शोधप्रबन्धा निर्मापिताः, विनिर्मि-तश्च त्रिभिः खण्डैः पूर्णः संस्कृतनाट्येतिहासः सुभृशं परिश्रम्य। इति-हासेऽस्मिन् भासमारभ्य इदानी यावत् प्रायेण सर्वेषामेव प्राचीनानां नवीनतमानां च संस्कृतनाटककाराणां परिचयः अज्ञातचराणां लुप्तप्रायाणां च नाट्यकृतीनां तथ्यात्मकः परिचयः सुलभः। एतेन साधितं यद् संस्कृतस्य स्रोतः इदानीमपि प्रवहति विरच्यन्ते चात्र भूयांसो ग्रन्थाः।

संस्कृतपत्रकारता-क्षेत्रेऽपि महदवदानम् उपाध्यायस्यास्य। एतेन प्रवर्त्तिता 'सागरिका'-नाम्नी त्रैमासिकी संस्कृतशोधपत्रिका विंशतिवर्षाणि पूरयित्वाधुनैकविंशति तमं वर्षं प्रवेक्ष्यति। पत्रिकयानया भूय उपकृतं संस्कृतलेखकानामध्येतॄणां च विदुषाऽनेन।

नाट्यशास्त्रविषये भूयासो भ्रमा एतेन विदुषा इदंप्रथमतयापाकृताः। 'छायानाटकं किंस्वरूपमि'ति एतेनैव उपाध्यायमहाशयेन साधितम्।

महत्त्वपूर्णं शोधप्रबन्धं समर्प्य सागरविश्वविद्यालयतः प्राप्त-डी० लिट्-उपाधिरेष संस्कृताङ्ग्लहिन्दीभाषाभिः संस्कृतसाहित्यं भारतीयां संस्कृतिं च भृशमुपाकरोत्। अधुना पुण्यपत्तनेऽखिल-भारतीयप्राच्यपरिषदः साहित्यखण्डस्याध्यक्षभरं निरवहत्।

तस्यास्य रामज्युपाध्यायमहाशयस्य सम्मानः संस्कृतसाहित्य-संजोवन-व्रतस्य सम्मानः।

# विश्वसंस्कृत-सम्मेलनस्य का भाषा भवितुमर्हन्ति

काश्या विश्वसंस्कृत-सम्मेलनस्य समारम्भात् पूर्वमेव बहूनां संस्कृत-सुधियां सुव्यक्तं मतमासीद् यदीदृशेषु सम्मेलनेषु संस्कृत-निष्ठज्ञान-विज्ञानानां विचारणा यथापूर्वमाङ्गलभाषया प्रवर्तनीयेति न सर्वजन-हिताय कल्पः। अथ च न केवलं भारते संस्कृत-सम्मेलनेषु, अपि तु विदेशेष्वपि तत्र विदुषां शोधविचारणा संस्कृतेन विशेषतः सम्भावनीया। अनेन विधिना ये पण्डिता आङ्गलभाषावगाहिनो न सन्ति तेऽपि तत्र-सम्मानं समानरूपेणास्मिन् ज्ञानयज्ञे भागग्राहिणो भवेयुः। भारते तु संस्कृतविदोऽधिकांशत आङ्गलभाषा-विशारदा न सन्ति। तेषां महापण्डितानामपि तत्र विश्वसंस्कृत-सम्मेलनेषु, अखिलभारतीयप्राच्यपरिषत्सु वा योगो यथाकामो न भवति। नेयं स्थितिः श्रेयसीति सनातनसंस्कृतानुरागिणां सुहितसम्मतं संस्कृतस्य, संस्कृतज्ञानां, विश्वसंस्कृतसम्मेलनस्यायोजकानां च संवर्धनाय स्वीकरणीयम्।

तत्रापेक्षितमासीद्यद् विश्वसंस्कृत-सम्मेलनप्रसङ्गे यानि कानिचित् पत्रकाणि, विज्ञापनानि, भाषणानि, शोधपत्राणि च पुरस्कृतानि तानि भाषणानि, शोधपत्राणि च पुरस्कृतानि तानि सर्वाणि साररूपेण सम्यग्रूपेण वा यथायोगं संस्कृतेनाङ्गलभाषया चोभयविधिना प्रकाशितानि स्युः।

विश्वसंस्कृत-सम्मेलनस्याधिकारिणोऽद्यावधी मा सुविचारितां भव्यां भारतभारती-भावनीयां संस्कृतानुरागिणां प्रार्थनां नानुमोदन्ते इति न तेषां पन्थाः सर्वथा साधु प्रतिभाति।

विश्वस्य सर्वा भाषाः समानमानाः सन्त्येव। वैदेशिकभाषासु विशेषत आङ्गलभाषायां संस्कृतविषयको भारतीयपुरातत्त्वविषयकश्च यो ज्ञान-

निधिर्भारतीयैर्वैदेशिकैस्तपस्विभिर्मनीषिभिः सञ्चितः, [illegible] प्रचनार्थ, लाभो पण्डितानां कृतेऽपि यथा भवेत्तथातैराचरितव्यमेव । [illegible] भिज्ञता संस्कृतज्ञानां सर्वत्र लाभायैव समुकल्प्यते । यथा मूलार्षभाषायां विकसितं रूपं भारते संस्कृतप्राकृतादिषु विलसति, तथैव विदेशेषु ग्रीकलैटिनाङ्गलजर्मनादिभाषादिष्वपि विलसतीति भाषाविज्ञानविदां नाविदितम् । तथापि भारतीयवैदिकमहर्षीणां ब्रह्मरक्षणस्योदात्तेनानुपमेन स्वाध्यायविधिना संस्कृतं विश्वस्य मूर्धन्या भाषा राजते इति सम्प्रधारणं संस्कृतसम्मेलनायोजकानां कार्यविधौ संस्कृतस्य योग्यं स्थानं विधास्यतीति निवेदमविकलं कलनीयम् ।

पूर्वोक्तान् विचारान् परिलक्ष्य सागरिकया अयं विश्वसंस्कृतसम्मेलनविशेषाङ्कः पर्यवसितः ।

## काश्या गौरवमण्डनम्

प्राच्यविद्यानां राजधानीयं काशी विश्वसंस्कृतसम्मेलनस्य महिमानं समवर्धयत्। पुरीयं विश्वसंस्कृत-सम्मेलनस्य ज्ञानमहायज्ञे मनीषिणां ज्ञानविज्ञानयोः समृद्धाहुतिभिः पुनः पुनः परिपूता। सर्वतः सफलः कार्यक्रमः सम्मेलनस्येति महात्मनो दाण्डेकरस्यसम्मेलनाध्यक्षस्याव-भृथाभिषेकवाणो प्रभोदयदस्माहशानां काशीगौरवधियां जनानां मनांसि।

अदूरदर्शिनां दोषज्ञानां समालोचकानां काशीगौरवाननुकूलं व्यव-स्थादिविषयकं संस्कृतस्य संस्कृतपण्डितानां च हानोपादानादिकं च त्रुटिनिदर्शनं मलीमसभक्तानामुदरदरीपूरणाय प्रचुरमात्रमासीत्।

किं न तैर्विचारितं यन्महारम्भेषु महतां दृष्टिः श्रेष्ठकार्येषु निबद्धा-भवति, न सा दोषदर्शनायाधोऽधः पश्यति। दोषदर्शनप्रकरणैः काशी-गौरवं क्षीयेतेत्यपि तैर्मनसि न कृतम्।

कतिपयतथाकथितपण्डितानां पारस्परिकमनोमालिन्यस्फोटस्य विगर्हितं दृश्यं सभासदां चेतांसि दुनोति स्म। न ते जनाः काश्या आभिजात्येनाभिनन्दनीयाः, यतो हि नाम ते काश्याः शिवपरम्परां क्षपयन्ति।

## शास्त्रचर्चा-परिषद्

विश्वसंस्कृत-सम्मेलने शास्त्रचर्चा-परिषदः कार्यजातं भारतीयार्ष-परम्परानुरूपं सुश्रियं व्यधात्। तत्र नियतोपस्थितिकः प्रातिपदिकार्थः व्याकरणे, सिद्धान्तलक्षणेऽनवच्छेदकत्वानुसरण-विमर्शः, मीमांसायाम् अरुणाधिकरण-विमर्शः, ज्योतिषे ग्रहण-विमर्शः इत्यादयः प्रधानाः शास्त्रार्थविषया निर्धारिताः। शास्त्रचर्चायां प्रमुखा भागग्राहिणः पं० सीतारामशास्त्री, पं० रामयत्नशुक्लः, पं० रामकिशोरशुक्लः, पं० सुब्रह्मण्यशास्त्री, पं० राजारामशास्त्री, पं० गणपतिशास्त्री, पं० सुधांशुशेखरशास्त्री, पं० चन्द्रशेखरशुक्लः, पं० वासुदेवकृष्णशास्त्री, पं० केदारनाथशास्त्री, पं० उदयचन्द्रजैनः, पं० सन्निधानशास्त्री, पं० सुकर्णशास्त्री, पं० श्रीचन्द्रशास्त्री इत्यादयोऽखिलभारतीयसांस्कृतिक-प्रतिभां विषयप्रतिपादनस्य सनातनपद्धत्या साक्षात्कृतवन्तः। तत्र महा-पण्डिता बदरीनाथशुक्लाः, पट्टाभिरामशास्त्रीणश्चकाश्या वैदुष्यार्ण-वरत्नानि प्राकाशन्त।

शास्त्रचर्चा-परिषदि गीर्वाण-वाणीविलासाय भारतस्य विविधदेशेभ्यः शतद्वयं पण्डितानां शास्त्राचार्याणामुपस्थितम्।

## [illegible]षणां प्रबोधनम् दाण्डेकरः रामचन्द्रो नारायणः

संस्कृतभाषा साहित्यञ्च जगति सर्वेषामैक्यविधानं पुरस्कुरुतः। विश्वसंस्कृत-सम्मेलनं विश्वेषां हितवर्धकान् विचारविमर्शान् प्रकाशयितुं भारतीयानां वैदेशिकानां च भारतपुरातत्त्वविद्भ्योऽवसरं प्रयच्छति। तत्र सम्मेलनेन भारतीय-वैदेशिकवैदुष्यजुषा विचार-सङ्गमः चरेत्।

वैदेशिकानां संस्कृताभिनेवशः सुप्रथितः। ज्ञानार्णवे साधु मन्थनपरैस्तैरपि सांस्कृतिकगूढरत्नानानि सम्यगन्विष्टानि। वैदेशिकानामपि संस्कृताभ्यासे महती तपस्या प्रशस्ता। प्रगाढ तेषां ज्ञानं संस्कृतस्य। अनुसन्धानपद्धतिस्तेषां भारतीयविद्यानामुत्कर्षं समुत्तेजयति। सा पद्धतिर्भारतीयैरप्यनुकरणीया।

## काशिनरेशो विभूतिनारायणसिंहः

यथा वाराणस्यां तथा विदेशेष्वपि विश्वसंस्कृत-सम्मेलनाधिवेशने संस्कृतं सहभाषारूपेण विचार-विनिमयस्योदारं साधनं भवेदिति अन्ताराष्ट्रय-संस्कृतविद्यामहामण्डलेन सम्भावनीयम्।

अस्मिन् सम्मेलने काश्यां सर्वप्रथमं भाषाद्वयसमाश्रयेण संस्कृतस्य व्यवहार-भाषात्वमङ्गीकृतं सर्वैः। संस्कृताध्यापनाय नूतना प्रणाली समाहृता भवतु।

## पाल थीमे [ पश्चिमजर्मनी ]

अयं काशीहिन्दूविद्यालयो युगान्तं यावत् जीव्यात् ।

## रामजी उपाध्यायः

हिन्दूविश्वविद्यालयोऽयं भारतीय-संस्कृतेः समुन्नयनाय पं० मदनमोहनमालवीयेन स्थापितः । तस्यादर्शवाक्यमासीत्—

"सत्येन ब्रह्मचर्येण व्यायामेनाथ विद्यया ।
देशभक्त्यात्मत्यागेन सम्मानार्हो सदा भव ॥"

अनेक समष्टिकल्याणभावना तस्य महात्मनो व्यज्यते । सा अस्माभिरात्मोत्थानायोरीकर्तव्या !

प्राचीनयुगे, मध्ययुगे आधुनिकयुगे च यत्किञ्चित् संस्कृतेन लिखितं तत्सर्वं रक्षणीयं भजनीयं च यतो हि नाम तत्र भारतस्यात्मा विशुद्धभावेन भूयसा विलसति लोकान् कल्याणपथे प्रवर्तयितुमुत्सहते च ।

## डा० रेवाप्रसादद्विवेदी

शान्तिनिर्माणार्थं जगतीतले संस्कृतवाङ्मयमेव समर्थम् । मानवजातेरितिहासः भूयसांशेन संस्कृते निबद्धम् । तस्यज्ञानाय संस्कृतमध्येयम् ।

# ग्रन्थसमीक्षणम्

सौप्रभम् ( गद्यकाव्यम् )—लेखकः प्रकाशकश्च—श्रीवेदव्यासशुक्लः, गर्ग प्रकाशनम्, खोड़ा, बारा दीक्षित, देवरिया ( उ० प्र० ) पृ० ६५। मू० २५० रु०

सौप्रभे नाम्नि गद्यकाव्ये श्रीमता वेदव्यासशुक्लेन गद्यगुम्फने किमपि पाटवमाविष्कृतम् । बाणभट्टस्य सरणिमात्मसात्कर्तुमयमतितरां संरभते, तत्र सफलश्रमश्च दृश्यते। बाणभट्टतदेवायं वर्णनेषु प्रगल्भते, परिसंख्याद्यलङ्कारप्रयोगे च मुखरः प्रतीयते। काव्येऽस्मिन् प्रस्तावनावर्णनानन्तरं विलसन्ति ग्राम-गृह-सुप्रभ-कामिनी-स्थाणु-मार्जारी-सरयू-देवलगृह-वनाश्रम - चण्डिका-संवसथ- पिष्टातक-प्रभृति-समावर्त्तनान्तास्त्रयोविंशतिवर्णनाः। वर्णनेषु कविः क्वचित् संस्कृतवाङ्मयवैदुषीं विदग्धतां च लासयति नवीनकल्पनामनोहराभिरुक्तिभिः। तद्यथा-राजवल्लीनगरीवर्णने—"सा च भारविरचना इवार्थगम्भीरा दण्डिपदसंघटनेव प्रतिपदलालित्यमनोहर कालिदासोपमेव निरुपमा बाणकादम्बरीव साच्छोदरसा नैषधपुस्तिका इव सनला नृपभीमबालिकेव लोकत्रयं दमयन्ती विज्जिकेव श्यामा।

कादम्बरीवदत्रापि कथान्तर्गर्भिताः कथा दृश्यन्ते। शूद्रकराजसभायामिव शुकवृत्तान्तवत् उद्योतनृपतेः सभायामत्र विस्मयावह-मार्जारवृत्तान्तो विनिवेद्यते। अनेकजन्मपरम्पराश्चात्रान्तर्भाविताः।

किरातार्जुनीय-शिवपुराणयोस्तुलनात्यकमध्ययम्, लेखकः प्रकाशकश्च—स एव। १९७९-८०। पृ० १७४। मू०-११-रूप्यकाणि।

अस्मिन् शोधप्रबन्धे पुराणवाङ्मयं परिशील्य काशीप्रसादजायसवालाल्टेकट-स्टीनकोनो-पार्जिटर-प्रभृत्याधुनिकगवेषकाणां च मतानि भूतार्थतया समीक्ष्य शिवपुराणस्य काल २०० खिस्ताब्दप्रायो निर्धारितः। तदनु पञ्चसु अध्यायेषु आद्यद्वयोः किरात-शिवपुराणयोः सुविस्तृतः परिचयः, तृतीयचतुर्थयोश्च शब्दार्थभावसाम्य-रसालङ्कारच्छन्दो दृष्ट्या

समीक्ष्यप्रबन्धयोस्तुलनात्मकमनुशीलनं विहितम्। भौ... प्रचनाश्च पुराणं चानुहरतीति लेखकोऽत्र सिसाधयिषतीति दिक्।

ऊर्मिलीयमहाकाव्यम्—पं० नारायणशुक्लः,
प्र०—पूर्ववत्। पृ० २००। मू० ४.७० रु०।

अस्मिन् महाकाव्ये सप्तदशसर्गेषु कविना लक्ष्मण-भार्याया उर्मिलायाश्चरितं विषयीकृतं जन्मप्रभृति सौमित्रराज्याभिषेकं यावच्च तत् सम्यङ् निर्व्यूढम्। सरणिरस्य मनोहारिणी, उक्तगौरवजुषी वैदुषी प्रसादरम्या च भाषा। नगर-वन-गिरिसरिदाश्रम-प्रभृति-वर्णनान्यस्य काव्यस्य सौष्ठवं समेधयन्ति।

वैनायकम्—नाटकम्—ले० प्र०—पूर्ववत्। पृ० ६५।१९७९।

सप्ताङ्केऽस्मिन् रूपके श्रीगणेशस्य चरितं रञ्जकतया रूपितम्। प्रथमाङ्के पुत्रजन्म प्रपञ्चितम्। तत्र पितुः शिवस्येदं वचः—

सर्वं सांसारिकं तापं हरते सुतदर्शनम्।
ब्रह्मानन्दसमानं हि कुरुते हर्षमव्ययम्॥

वात्सल्यं वर्धयति। अप्सरोभिः प्रस्तूयमाने नृत्ते शिवोऽपि हर्षगर्भनिर्भरं नरीनृत्यति। अङ्कान्ते असुराचार्य-शनैश्चरयोर्वार्ता अमङ्गलशङ्कामुपजनयति। द्वितीयाङ्के शनैश्चरदृशा भग्नग्रीवो गणेशोऽसुरेशानुचरेण चोरिते तन्मुण्डे गजशावकशिरसमारोपणेन पुनर्जीव्यते। अनन्तरं गणेशकार्तिकेययोर्मिथः कलहो वर्णितः। तृतीयाङ्के उर्वशी-मेनके पुरन्दरसन्देशं त्रिपुरारिपुरः पुरस्कुरुतः। शिवश्च पुत्रौ परीक्षयति, यत्र गणेशो मेधावी प्रमाणी क्रियते। चतुर्थाङ्के देवराजानुमत्या गणेशकार्तिकेययोरसुरविध्वंसासमुद्यमो निर्दिष्टः। पञ्चमाङ्के गणेश-विवाह-निर्णयः पश्चिमयोश्चाङ्कयोस्तदन्वय, प्रदर्शितः। एवमस्मिन् नाटके वैनायकी पुराणवार्ता यथाक्रमं विनिवेशिता। तथापि घटनाविन्यासशैथिल्यात् नूतनपरिकल्पनासमुन्मेषाभावाच्च नेयं कृतिः सर्वथा हृद्या, नापि प्रयोगाय योग्या। सर्वत्र हिन्दीभाषावाक्यरचनाभिमृष्टा असंस्कृता शैली मानसं दुनोति। तद्यथा—

यावान् समयो मिलति तावानत्रैव लगयामि। पृ० ४५ तेषां करद्वये मोदकः।·······यादृशी कल्पना आसीत् तादृग् एव व्यवस्थापको मया

४१ सुष्ठु अस्ति।.......एक प्रतिस्पर्धात्मिका परीक्षा पठन पृ० ३१। समयेन पठतं वा खेलतम्। खेलनसमयो ऽधिकमिति चिन्त्यम्। पृ० २६

शम्भुशतकम्। विठलदेवुनि सुन्दरशर्मा। प्र०—श्रीमती वि० नागरत्नम्मा, १-९-१११२।जी।२, दयानन्दनगरम्, हैदराबाद। आवृत्तिः प्रथमा, १९८२।पृ० ४२, मू० ४ रु०।

श्री वि० सुन्दरशर्मा ओस्मानियाविश्वविद्यालयस्य संस्कृताकादम्यां शोधसहायको वर्तते। प्रागप्यनेनमुकुटशतक-श्रीनिवास-वीराञ्जनेयशतकानि विरच्य प्रकाश्य च कापि ख्यातिरर्जिता। अस्मिन् काव्ये १०८ पद्यपुष्पाणां माला आराध्याय कविनार्पिता। कवेर्भक्तिभावनाभिव्यक्तिर्निश्छला सारल्यहृद्या च।

सुरवाग्विलापम्। ले० प्र०—दीपकघोषः। आनन्दमोहनमहाविद्यालयकलिकातायां प्राध्यापकः। द्वितीया आवृत्तिः, १९८०। पृ० २२। मू०—रुप्यकद्वयम्।

काव्यस्यास्य कर्ता विलापकाव्यगुम्फने निपुणः प्रतिभाति। प्रागप्यनेन मेघदूत सोत्प्रासमनुसृत्य मेत्रविलापं नाम काव्यं विरच्य प्रकाशितम्। अनन्तरं १९७३ खिस्ताब्देऽस्य सुरवाग्विलापं प्रकाशितचरमभवत्, यत्र चतुर्दशपद्यान्यभवन्। तस्यैव ३१ पद्येषु विस्तारितेयं द्वितीया आवृत्तिः। अत्र कविः स्वप्ने स्वदुरवस्थया दूयमानां सुरसरस्वती दृष्ट्वा तद्विलापमाकर्णयति—

"मध्यक्षपायाः श्रुतवानहं ह्यः स्वप्नेऽबलारोदनशब्दमेकम्।
भङ्गेऽपि सुप्तेरभवत् स शब्दः पुनः पुनर्मे श्रुतिगोचरश्च॥
विहाय शय्यां परितः कुतूहलादन्वेषणेऽपि प्रचुरे ततो मम।
कुत्रापि गेहे न तु कापि लोकिता शब्दः श्रुतः केवलपुस्तकान्तरात्॥
का त्वं, विलापे वद कश्च हेतु रात्रौ गृहे मे किमिति प्रवेशः।
न दृश्यमानासि कथं पुनस्ते कण्ठस्वरः श्रोत्रपथं ममेति॥
अदृश्यमानाप्यददात् क्षणेन प्रत्युत्तरं सा परिपृच्छ्यमानः।
दिव्याङ्गनाहं सुरवाक्समाख्या ज्ञाताऽथवा संस्कृतवागितीह॥

ममोत्सवो भारतवर्षभूमौ सर्वत्र पूजा भविता [illegible] प्रचनार्हा,
तथापि तृप्तेः कणिकापि नास्ते प्रभूतखेदैरभिभूद [illegible]

**स्पन्दकारिका**—श्रीभट्टकल्लटवृत्तिसहिता, हिन्दीव्याख्याकारः—प्रो० नीलकण्ठगुरुटू। प्रका०–मोतीलाल बनारसीदासः, जवाहरनगरम्, दिल्ली–७। प्रथमं स० १९८१। पृ० १६८+२५। मू० ३० रूप्यकाणि।

स्पन्दकारिका नाम शैवसम्प्रदाये स्पन्दशास्त्रस्य आकरो ग्रन्थः। कदायं रचितः केन वेति इदमित्यन्तया न ज्ञायते। स्पन्दकारिकामधिकृत्य सन्ति श्रीभट्टकल्लटक्षेमराज–रामकण्ठोत्पलप्रभृतीनामनूचानानां शैवाचार्याणां वृत्तयो विवृतयो वा। तासु श्रीभट्टकल्लटकृता वृत्तिरिदम्प्रथमतया आद्रियते। अस्मिन्। संस्करणे कारिका-वृत्त्योर्मूलमुपादाय भाषायां व्याख्यानं गुरुटूमहोदयेन व्यधायि। सामान्यपाठकेभ्यः स्पन्दशास्त्रपरिचयप्रदाने संस्करणमिदं सर्वथा अलम्।

शैवसिद्धान्तेषु व्याख्याकारस्य गुरुटूमहोदयस्याभिनिवेशः स्फुट एव। अनेन ईश्वरप्रत्यभिज्ञाविमर्शिनीश्वरसिद्धि-तन्त्रालोक-तद्विवेक-तन्त्रसार-त्रिंशिका - परमार्थसार-प्रत्यभिज्ञाहृदय - विज्ञानभैरव-शिवसूत्र-प्रभृतिशैववाङ्मयमधीत्य स्पन्दशास्त्रग्रन्थांश्च सविशेषं परिशील्य स्पन्दकारिकावृत्त्योराधिकारिकी शास्त्रकर्तुः वृत्तिकारस्य च परिचयोऽप्युपबृंहितः। स्पन्दसूत्राणां कर्ता क इत्यत्र उपस्थितासु विविधविप्रतिप्रत्तिषु सिद्धवसुगुप्त एव मूलसूत्रकार इति संशय-पूर्वपक्षे व्याकृत्यात्र सिद्धान्तितम्। स्पन्दस्वरूपम्, स्पन्दशास्त्रे प्रमातृभेदाः, तद्ग्राह्यविषयाः, पाशः, मुक्तिश्चेत्यादयो विषया अपि भूमिकायाम् अनुवादकेन परामृष्टाः।

हिन्दीव्याख्यायां मीमांसा-वेदान्त-प्रभृतीतर-दर्शनप्रस्थानानां मतानि उदाहृत्य प्रकृतशास्त्र-शद्धान्तैस्तेषां साम्य-वैषम्यादिकमपि टीकाकारेण शीलितम्। अन्ते सूत्राणां पारिभाषिकशब्दानां चानुक्रमणिके संयोज्य संस्करणस्यास्योपदेयता वृद्धिं प्रापितेति दिक्।

**जातकपारिजातः**—श्रीदैवज्ञवैद्यनाथविरचितः, सौरभभाष्यसहितः। द्वौ भागौ। भाष्यकारः–पं० गोपेशकुमार ओझा। प्रथम सं० १९७९, १९८१। पृष्ठाः ११२५। मूल्यम्। ४५+६५ रूप्यकाणि।

ज्योतिषग्रन्थः सुप्रथितकीर्तेः सर्वार्थचिन्तामणि-टाद्रेः पुत्रेण श्रीमता वैद्यनाथेन १४८२ वैक्रमाब्दे विर-तिषशास्त्रे संहिता, होरा, सिद्धान्तश्चेति त्रयो विषयाः प्राधान्येन गण्यन्ते। जातकपारिजातः 'होरा'-ग्रन्थः। अत्र वैद्यनाथेन श्रीपतिपद्धति सारावली - बृहज्जातक - सर्वार्थचिन्तामणि-प्रभृतिपुरातन-शास्त्रेभ्यः सारं संहृत्य विशदं व्यवस्थापितम्। दैवज्ञानां मौहूर्तिकानां च कृतेऽयं विशिष्य उपादेयः। हिन्दीव्याख्याकारश्चात्र प्रख्यातो ज्योतिर्विद् विविधविरुदोपेतः एतच्छास्त्रविषयकहिन्द्याङ्ग्लभाषोपज्ञनैकग्रन्थानां प्रणेता पं० गोपेशकुमारः स्वभाष्ये सर्वथा सुगममिमं ग्रन्थं व्यधात्।

१. उत्तरप्रदेशे संस्कृतेनोत्तमग्रन्थरचनामुद्दिश्य [illegible] प्ररचनार्थ, दास्यत इति विज्ञापयन् मुख्यमन्त्रो अभिनन्दनीयः।

२. काशिराज-न्यासेन वराहपुराणं प्रकाशितमिति [illegible] स्येष्यते। काशिनरेशः पुराणविषयकश्रेष्ठग्रन्थाय दशसहस्रारूप्यकाणांपुरकारं दासस्यमिति अभिनन्दनीय उपक्रमः।

३. अधोलिखित-प्रकाशनानि साधु अभिनन्दति, तेषां क्षिप्रपूर्त्यर्थं उत्कामयते च—

(क) संस्कृत-विश्वकोशस्य द्वितीयभागः।
(ख) पालिमहाकोशस्य द्वितीयभागः।
(ग) महासुभाषित-संग्रहस्य पञ्चमभागः।

४. संस्कृतादिप्राचीनभाषासु विरचितानां ग्रन्थानां सर्वेक्षणं यथाशीघ्रं सम्यङ्निष्पादनीयम्, यतो हि नाम ते क्षेपिष्ठगत्या विनाशोन्मुखाः प्रवर्तन्ते।

५. प्राच्यपद्धतिपरायणाः पण्डिताः संस्कृतानुशीलनविधौ भारतेषु-विदेशेषु च सहयोजनीयाः यतो हि नाम गम्भीरतरविषयेषु सम्यगवगाहनं नान्यथा कल्प्यते।

६. उत्कलप्रदेशस्य शासनाधिकारिणः श्रीजगन्नाथसंस्कृतविश्वविद्यालयस्यस्थापनेनाभिनन्दिताः।

विश्वसंस्कृत सम्मेलने पूर्वं पारितेषु प्रस्तावेषु निम्नलिखिता निष्पत्तये महत्त्वमर्हन्ति—

१. हस्तलिखितग्रन्थानां रक्षणाय, अध्ययनाय सौष्ठवपूर्णव्यवस्था।
२. केन्द्रीय-संस्कृत-ग्रन्थालयस्यस्थापना।
३. वेदानां कण्ठस्थीकरणायप्रबन्धः
४. संस्कृत-ग्रन्थानां स्वल्पमूल्यानि प्रकाशनानि
५. हस्तलिखित-ग्रन्थसंशोधनाय मातृकानाम्नीशोधपत्रिकायाः प्रवर्तनम्।
६. प्रचलितस्यानुसन्धानस्य विवरणपुस्तिका।
७. शिक्षण-क्रमे संस्कृतस्य यथावत् रक्षणम्
८. पण्डितानां सम्मानः

# स संस्कृतसम्मेलन-समीक्षा

अरनगरे सम्पन्ने विश्वसंस्कृतसम्मेलनस्य चतुर्थेऽ-
पे पदाधिकारिभिः सम्भूय निरणायि—'पञ्चमं विश्व-
' भारते वर्षे तत्रापि च वाराणस्यामायोज्येतेति। तदनु-
सृत्य राष्ट्रिय कृतसंस्थानस्य कर्मसाचिव्ये शिक्षामन्त्रालयोऽखिलभारतीयं-
समायोजनसां मिका काशिराज श्रीविभूतिनारायणसिंहदेवस्य संरक्ष-
कत्वेऽकल्पयत्, काश्याः काशीहिन्दूविश्वविद्यालयः, काशीविद्यापीठम्, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयश्चेति त्रयाणामपि वाराणसेयानां विश्वविद्यालयाना कुलपतयोऽपि यस्याः सदस्यत्वेनावृताः। काशिराजस्याध्यक्षतायां सम्पन्ने समायोजनसमित्यधिवेशने निरचायि—'दीपावली-पर्वकाले पञ्चमं विश्वसंस्कृतसम्मेलनमा' योज्येतेति। ततश्च १९८१ खीष्टाब्दस्य अक्टूबरमासे २१ दिनमादाय ६ दिनं यावत् षण्णां दिवसानामवधिः सम्मेलनस्य कृते निश्चितः २७ दिवसे दीपावलीपर्व आसीदिति। स्थानत्वेनास्य कृते समायोजनसमित्या काश्या परिभ्रम्य काशीहिन्दूविश्वविद्यालय-परिसरः संस्कृतविश्वविद्यालयपरिसरश्च कल्पितौ अन्ते च काशीहिन्दूविश्वविद्यालयमात्रस्य परिसरः सम्मेलनस्य कृते स्थानत्वेन स्वीकारितः। सम्पन्नञ्च तत्र निश्चितासु तिथिषु सम्मेलनम्।

सम्मेलनस्यसर्वास्वपि गोष्ठीपु तत्रभवान् काशिराजः स्वयमुपतिष्ठते स्म पर्यवेक्षतेस्म च सर्वमपि कार्यविधिमवधानेन निवास-भोजन-यातायात-व्यवस्थासु काशीहिन्दू-विश्वविद्यालयप्राध्यापक-च्छात्र-कर्मचारिभिर्नितान्त तत्परता दर्शिता, यतः अपवादान् कांश्चिद विहाय सर्वेऽपि अतिथयः संतोषमन्वभूवन्। सायंकाले नागरीनाटकमण्डलीनाट्यगृहे मालविकाग्निमित्रम्, कुडियाट्टम्, भाओना, सङ्गीतकम्, गीतिगोविन्दमधिकृत्य ओडिसीनृत्याभिनयश्चोत्तरोत्तरं सहृदयानावर्जयन्। अन्तिमे दिने त्रिभ्यो वैदेशिकेभ्यः, पञ्चभ्यश्च भारतीयेभ्यः विशिष्टे दीक्षान्तसमारोहे डी० लिट्० इति सम्मानोपाधि प्रदत्तः। असौ दीक्षान्तसमारोहः सशिष्यस्य गुरुकेलुचरणमहापात्रस्य ओडिसीनृत्येन गीतगोविन्दाभिनययश्चेति अनुष्ठानद्वयं तथा मिष्टं, मधुरं, प्रियम् उदात्तं चाभूत् यथोहं साम्प्रति स्मृतिपथं न त्यजति। सम्मानोपाधिना सागरिकाया मुख्यः सम्पादकः डॉ० प्रेमज्युपाध्यायमहोदयोऽपि संभावितः येन विश्वमात्रस्य संस्कृतज्ञैः सागरिकायामपि बहुमानः प्रकाशितः। अस्ति हि सागरिकायाः संस्कृतपत्रेषु विशिष्टं स्थानम्। अतः स्थान एवास्या एवं विधा संभावना।

काशीहिन्दूविश्वविद्यालयस्य संस्थापका ... तामुद्दिश्य ... प्रवचनार्थ, मालवीयाः भारतवर्षे अखिलभारतीयामेकां विक्रमपरि... तन्माध्यमेन स्वयमेव कालिदासग्रन्थावलीं पं० सीतारामचतु... सम्पादयन्, स्वल्पे मूल्येव व्यतरंश्च ताम्। तामेव सहृयरामनुसृत्य विश्वविद्यालयस्य डा० रेवाप्रसादद्विवेदि संपादितः ... आकारीय ६४४ पृष्ठ कलेवरां कालिदासग्रन्थावलीमस्मिन् महार्घ्येपि समये केवलैः पञ्चभिरेव रूप्यकै सुलभमकार्षीत्, येन ग्रन्थावली एषा संम्मेलने समागतैः प्रायेण सर्वैरपि छात्राध्यापकप्रकाशकैरधिगता। सोऽयमस्य विश्वविद्यालयस्य संमेलनस्य चाऽपूर्व आरम्भः।

अस्मिन् संमेलने केन्द्रशासनेन महदुपकृतं प्रायेण दशलक्षरूप्यकमितमनुदानं विधाय। स्थानीया जनता उत्प्रेक्षतेस्य संमेलनेऽस्मिन् संस्कृतभाष्यैव सर्वोऽपि व्यवहारः प्रवर्तिष्यत इति। व्यवस्थापयितारश्च कल्पयति स्म सर्वमत्र वैदिकेन धर्मण नियन्त्रित भविष्यति कार्यजातमिति। वस्तुतः संस्कृतसाहित्यं माध्यमान्तरेणापि अनुशास्यते, धर्मनैरपेक्ष्येणापि च। तस्यास्य द्वितयस्यापि स्पष्टमासीद् बिम्बनम्, यत्र वैदेशिका अपि संस्कृतवाङ्मये स्वकीय श्रम प्रकटितवन्तः, येषु नास्ति वैदिकस्य धर्मस्य प्रतिष्ठा। प्रसादितमेतेन संस्कृतं खलु विश्ववाङ्मयमिति।

चतुश्चत्वारिंशतो देशानां तैस्तैर्ध्वजैर्मण्डिते वाणिज्यसकायभवने प्रातःकालतः सायंकालं यावत् प्रवर्त्तमानेषु तत्तेषु ज्ञानगोष्ठी सत्रेषु प्रवहतिस्म सारस्वतं ज्ञानविज्ञानमयं स्रोतः आँग्लसंस्कृतोभयभाषा माध्यमेन। तथैव संस्कृतमहाविद्यालयस्य महति आस्थानमण्डपे प्रवर्त्तन्तेस्म संस्कृतमाश्रिताः शास्त्रवादाः पुराविदां संस्कृतविदुषाम्। उभयत्रापि प्रत्यक्षीकृतम् एकनीडत्वं विश्वस्य संस्कृतमाध्यमेन।

तस्यास्य सम्मेलनस्योद्घाटनं कुर्वता संस्कृतिनिष्ठेन उत्तरप्रदेशमुख्यमन्त्रिणा लक्षरूप्यात्मकोवार्षिकः विश्वपुरस्कारः संस्कृतरचनाभ्यो घोषितो घोषितश्च दशसहस्ररूप्यकात्मकः पुराणसाहित्यपुरस्कारः काशिनरेशेन।

अद्यापि स्मरन्ति विद्वांसस्तदेतत् सम्मेलनं प्रीतिपुरस्सरम्।

डा० रेवाप्रसादद्विवेदी

● डा० रामजी उपाध्यायेन रचितानि सम्पादित

१. संस्कृत साहित्य का आलोचनात्मक इतिहास (

२. संस्कृत साहित्य का आलोचनात्मक इतिहास प्राच

( द्वितीयो

३· मध्यकालीन संस्कृत नाटक, पृ० स० ५२०

४· आधुनिक संस्कृत नाटक—भागद्वयं, पृ० १३५० रु० ६० ००

५. Sanskrit & Prakrit Mahā āvyas (D· Phil Th sis) रु० ५०,००

६. महाकविः कालिदासः ( संस्कृतम् ) पृ० सं० १६० रु० २० ००

७. भारतस्य सांस्कृतिकनिधिः ( संस्कृतम् ) पृ० स० ४११ रु० २५ ००

८ दशरूपक-तत्त्वदर्शनम् पृ० २०० छात्र संस्करण १५.०० पुस्तकालयीन रु० २५ ००

९. दशरूपक—नान्दी-भाषाटीकासहित सावलोकम् रु० १४.००

१०. मध्यकालिकः संस्कृतनाटकालोकः रु० २५.००

११. नाट्यशास्त्रीय-पारिभाषिकशब्दानुक्रमणिका रु० १५·००

१२. नाट्यशास्त्रीय-प्रयोगविज्ञानम् रु० २५.००

१३· महाभारतीय-संस्कृतिकोश रु० ३०.००

● डा० वनमाला भुवालकर-रचितानि

१. महाभारत मे नारी—( हिन्दी ) शोधप्रबन्धः पृ० सं० ५२५ रु० ४० ००

२· पाददण्डम् रूपकम् ( संस्कृतम् ) रु० २·००

३. रामवनगमनम् संगीतिका ( संस्कृतम् ) रु० १ ००

४. पार्वतीपरमेश्वरीयम् ( संस्कृतम् ) संगीतिका रु० १ ५०

५ पचमहाकाव्येषु चन्द्रः ( निबन्धः ) ( संस्कृतम् ) रु० १ ००

● डा० राधावल्लभ त्रिपाठी-विरचितानि

१. संस्कृत कवियो के व्यक्तित्व का विकास पी० एच० डी० शोधग्रन्थः रु० २५ ००

२. वाल्मीकि-विमर्शः रु० १० ००

३. मुकुन्दविलासम् (सम्पादित) रु० १५·००

४ नाट्यमण्डपम् रु० १० ००

● प्रकीर्णानि

१ श्रीहर्ष के रूपक डा० गोकुल प्रसाद त्रिपाठी रु० [illegible].००

२ सुसंहृतभारतम्—( नाटकम् ) पुल्लेलरामचन्द्रः रु० [illegible] ००

३ साहित्यसन्दर्भा—डा० रेवाप्रसाद द्विवेदी रु० [illegible] ००

४ रसार्णवसुधाकरः—सिंहभूपाल , सम्पादक डा० रेवाप्रसाद द्विवेदी [illegible] ००

प्राप्तिस्थानम् : संस्कृत-परिषद् विश्वविद्यालय, सागर

# सागरिका

## विंश-वर्षे द्वितीयोऽङ्कः

२०३८ विक्रम-संवत्सरे

सम्पादकाः

डा० रामजी उपाध्यायः ( प्रधानः ) डा० रेवाप्रसाद द्विवेदी
डा० राधावल्लभः त्रिपाठी डा० रामगोपालः मिश्रः

प्रकाशिका

सागरिका-समितिः

५ नन्दनगर,

वाराणसी ५ ( बी. एच्. यू० )

प्रचारिका व्यवस्थापिका च
सागरिका-समितिः
गौरनगर, सागर

देयम्

| | | |
|---|---|---|
| प्रत्यङ्कम् | | ४.०० रूप्यकाणि |
| वार्षिकम् | | १५.०० रूप्यकाणि |
| आजीवनग्राहकस्य | | २००.०० रूप्यकाणि |
| प्राचीनाः सर्वेऽङ्काः सवस्त्रपुटबन्धाः | | |
| Cloth Bound Vols. | | ५००.०० रूप्यकाणि |
| वर्षे १-५ | प्रत्यङ्कम् | ७.०० रूप्यकाणि |
| वर्षे ६-१० | ,, | ६.०० रूप्यकाणि |
| वर्षे ११-१५ | ,, | ५.० रूप्यकाणि |
| वर्षे १६-१६ | ,, | ४.०० रूप्यकाणि |
| अङ्कप्रकाशः | | प्रतिवर्षम् आषाढाश्विन-पौष-चैत्र मासे |
| | | [ जून-सितम्बर-दिसम्बर-मार्च |

मुद्रकः
हनुमान मुद्रण यन्त्र
पियरीकलाँ वाराणसी

## विशेषाङ्क-विज्ञप्तिः

अन्ताराष्ट्रिय-संस्कृत-सम्मेलनावसरे सागरिकाया आगामि-प्रकाशनं त्रिशाब्दिको विशेषाङ्को भविष्यति। संस्कृतभाषया प्राच्यवित्तमानामनुसन्धानद्युतिर्विश्वप्राङ्गणे प्रसारणीयेति सागरिकायाः परमोद्देश्यम्। तदर्थं शोधनिबन्धं यथाशीघ्रं सम्प्रेष्यानुगृह्णन्तु भवन्तः।

रामजी उपाध्यायः
प्रधानसम्पादकः
५ नन्दनगर
वाराणसी ५ ( बी. एच्. यू० )



# विषयानुक्रमणिका


१—नायकविमर्शः – डा० रामजी उपाध्यायः १

२—सप्तदशशताब्दस्य संस्कृतमहाकाव्यानि – श्री रामलखन पाण्डेयः ९

३—दुष्यन्तो धीरोदात्तो धीरललितो वा – डा० रामजी उपाध्यायः २१

४—आचार्यमहावीरप्रसादद्विवेदिनः संस्कृतकवित्वम् २३

डॉ० राधावल्लभः त्रिपाठी

५—उत्तररामचरितस्य प्रस्तावना-वैशिष्ट्यम् श्री ओमप्रकाश राजपाली २९

६—राजकर्माभिचार-प्रकरणम् – डा० किशोर मिश्रः ३३

७—रूपकेषुप्रस्तावनायाः प्रयोजनम् – श्री ओमप्रकाश राजपाली ४९

८—संज्ञाव्यवहारस्य प्रयोजनानि – डा० जानकीप्रसाद द्विवेदी ५३

९—अङ्गनायकाः – डा० रामजी उपाध्यायः ५९

१०—स्वरविवेचनम् – डा० युगल किशोर मिश्रः ६७

११—संस्कृत-रूपकेषु सूत्रधारः – श्री ओमप्रकाश राजपाली ७१

१२—संस्कृत-वृत्तम्—श्री क्षेत्रवासी पण्डा ७६

१३—ग्रन्थसमीक्षणम् – डा० राधावल्लभः त्रिपाठी ८३

१४—भारतीय-ज्योतिषम् – डा० राजमोहनः उपाध्यायः ८५

१५—पण्डिराज-विभावनम्—डा० कैलासपतिः त्रिपाठी ९१

१६—नृत्यं नाट्यञ्च—डा० रामजी उपाध्यायः ९७

१७—कालिदासीयमवनद्धवाद्यवैदुष्यम्—डा० सुषमा कुलश्रेष्ठः १००

१८—भारतीयनाट्यशास्त्रे विडम्बनायाः स्वरूपम्—श्री क्षेत्रवासी पण्डा १०६

# नायक-विमर्शः

रामजी उपाध्यायः

संस्कृत-नाट्यशास्त्रेऽभिनवगुप्तानुसारेण नायकोऽभिप्रायत्रयं स्पृशति ; तद्यथा—

१. नायकस्तु फलभोक्ता अङ्गी नायकः प्रधाननायको वेति अति-विशेष वचनम् ।

२. नायकस्तु प्रधाननायकः, तस्य नायिका, प्रतिनायकः, उपनायकः, अनुनायक इति मध्यमसामान्यवचनम् । तत्र पताका-प्रकरी-नायका उपनायकाः, लक्ष्मणादयः सहकर्माणोऽनुनायकाः सन्ति ।

३. नायकस्तु कथाबीजफलं प्रति प्रापयितुं नियुक्ताः सर्वे जना इति महासामान्यवचनम् । अत्रामात्यादिभ्यः प्रारभ्य दूत-प्रतिहार-पर्यन्तं प्रधाननायकस्य प्रतिनायकस्य उपनायकस्य च सहाया भृत्याश्च समाविष्टाः ।

शीलदृष्ट्या उपर्युक्ताः सर्वे नायकाः कोटित्रयेऽन्तर्भूताः उत्तमाः, मध्यमाः, अधमाश्चेति[१] । एतेपूत्तममध्यमाश्चतुर्विधाः सन्ति—धीरोदात्तः, धीरललितः, धीरोद्धतः, धीरप्रशान्तश्च । धीरोदात्तादयश्चत्वारोऽधमश्च रूपकेषु प्रधान नायका भवितु-मर्हन्ति ।[२]

सर्वे इमे नायका योनिभेदेन दिव्याः, दिव्यादिव्याः, अदिव्याश्च सज्जिताः । ते प्राणिनोऽप्राणिनश्च क्वचिद् भवन्ति ।

शृङ्गारप्रधानेषु रूपकेषु नायिका-सव्यवहार-दृष्ट्या दक्षिणः, शठः, धृष्टः, एकनायिकश्चेमे महत्त्वपूर्णभेदा प्रधाननायकस्य भवन्ति । शृङ्गार-पथेऽपरश्च नायकभेदः चतुरः, उत्तमः, नीचोऽधमः, प्रवृत्तकश्च भवति ।

प्रकरणेऽस्मिन्नन्यत्र च नाट्यशास्त्रे नायकशब्दस्य प्रयोगोऽतिविशेष-वचने, मध्यमसामान्यवचने महासामान्यवचने वाभिप्रेत इति पाठकैरूह्यमेव ।

---

१. अर्थोपक्षेपक-प्रकरणे उत्तमादयो भेदाः महत्त्वपूर्णाः सन्ति ।

२. धीरोदात्तादयः प्रधाननायका उच्चकोटिकेषु रूपकेषु विलसन्ति । भाणप्रहसन-वीथ्यादिषु अधमा एव प्रधाननायकाः प्रयुज्यन्ते ।

## प्रधाननायकः

भरतः प्रधाननायकं परिभाषते—

व्यसनी प्राप्य दुःखं वा युज्यतेऽभ्युदयेन यः ।
तथा पुरुषमाहुस्तं प्रधान नायकं बुधाः ॥ २४. २१, २२

अभिनवगुप्तानुसारेण स कथां नयति स्वकर्तव्याङ्गभावमिति कथानायको निर्वहणे फलभागी[१] । फलभागित्वेन स फलनायकः । तस्य बहवः पर्याया अङ्गी नायकः, अग्र्यो नायकः, मुख्यो नायकश्च सन्ति ।

अभिनवगुप्तानुसारेण—

असौ नेता फलस्य चाक्रष्टा अमात्यसम्पादिताभिसन्धिप्रत्युपाय-परम्परार्जितस्यापि, यथा तापसवत्सराजे वत्सराजस्य राज्यप्रत्यापत्तिः कर्तव्यतायाममात्याभिसंहितायाम् इति[२] ।

कतिपयनाटकेषु फलनायकेन सह कार्यनायकोऽपि विलसति । तत्र कार्यनायकः प्रधाननायकाय फलं प्रापयितुं व्यवस्यति, फलनायकस्तु फलं भुङ्क्ते । कार्यनायकस्य प्रसिद्धमुदाहरणं मुद्राराक्षसे चाणक्यो वर्तते । तत्र चन्द्रगुप्तः फलनायको नाटकीयकार्यव्यापारप्रवर्तनाय न्यूनमेव विधत्ते, विपर्यये तु चाणक्यः फलमुद्दिश्य सविधानानि प्राक्कलयति, अपरांश्च कार्यार्थं नियोजयति, फलोन्मुखं च कार्यजातं प्रवर्तयति[३] । प्रतिज्ञायौगन्धरायणवेणीसंहारयोः कार्यनायकौ यौगन्धरायणः भीमश्च तत्रैव फलनायकौ उदयनः, युधिष्ठिरश्च प्रतीतौ । सागरनन्दी पुरातननाट्याचार्याणाममिभमत मुद्धरति—

साधकः साधनं साध्यं सिद्धिः सम्भोग एव च ।
इत्याह केऽपि नाट्यज्ञा सन्त, साध्यादिपञ्चकम् ॥

एतदनुसृत्य तेन भीमविजये भीमः साधकः इति वर्णितम् तथा च युधिष्ठिरस्य राज्यप्राप्तिः सिद्धिरिति ।

प्रायो रूपकेषु कार्यनायकः फलनायकश्च समानः पुरुषो भवति । यथाभिज्ञानशाकुन्तले, मृच्छकटिके, नागानन्दे वा ।

---

१. ध्वन्यालोकलोचने पृ० ३४७

२. ना० शा० १९.५ अधिकृत्य भारती ।

३. तत्र चन्द्रगुप्तो वदति—राज्ये चारोपिता वयम् । ७.८
चाणक्यस्य कार्यनायकत्वमेवाधोलिखितेन प्रमाण्यते—
नेतुर्यशस्विनि पदे नियता प्रतिष्ठा । मुद्रा० ७.१४

## धीरोदात्तादयः

उत्तम-मध्यमनायकानां धीरोदात्तादयश्चतुर्भेदाः सम्भवन्ति। अधम-नायकास्तु एतान् व्यतिरिच्य प्रहसनादिषु प्रयुज्यन्ते।

रसस्तु कथानायकाश्रयस्तद्विपक्षाश्रयो वा निष्पद्यते[१]। एतस्य विश्लेषणमभिनवगुप्तेनाधोविधिना स्पष्टीकृतम्

| नायककोटिः | रस–वैशिष्ट्यम् | वृत्तिवैशिष्ट्यम् |
|---|---|---|
| धीरोदात्तः | धर्मयुद्धवीरप्रधानः | सात्वती |
| धीरोद्धतः | वीररौद्रप्रधानः | आरभटी |
| धीरललितः | वीर–शृङ्गारप्रधान. | कौशिकी |
| धीरप्रशान्त. | दानधर्मवीरशान्तप्रधानः | भारती[२] |

धीरोदात्तादिषु चतुर्षु वीररस–योग्यता वर्तते इति तेषां सामान्यो धर्मः। अतएव वीरं विहायापररसा एव तेषां विभेदकाः सन्तिः। तथा हि धीरोदात्तस्य धर्मवीरः, धीरोद्धतस्य रौद्रः, धीरललितस्य शृंगारः, धीर-प्रशान्तस्य शान्तः। एतेषां विशेषास्तु वृत्तिभिः स्पष्टतः परिचीयन्ते। मम्मटानुसारेण धीरोदात्तो वीरप्रधान एव[३]।

धीरोदात्तादिषु धीरस्य कोऽभिप्रायः ? अत्र धीरस्तु वीरस्यैव पर्यायः।

उत्साह सम्पन्न एव धीरः।[४] भोजानुसारेणैते भेदा धैर्यमाश्रित्य निर्मिताः[५]। धीरोदात्तादीनामुदाहरणं भरतानुसारेणाधोलिखितकारिकया-स्पष्टमेव—

देवा धीरोद्धता ज्ञेयाः स्युर्धीरललिता नृपाः।
सेनापतिरमात्याश्च धीरोदात्तौ प्रकीर्तितौ॥

---

१. ध्वन्यालोके ३.६

२. धर्मयुद्धवीरप्रधानो धीरोदात्तः, वीररौद्रप्रधाना धीरोद्धत., वीरशृगार-प्रधानो धीरललित', दानधर्मवीरशान्तप्रधानो धीरप्रशान्त इति चत्वारो नायकाः क्रमेण, सात्वत्यारभटीकैशिकीभारती वृत्तिप्रधाना.। ध्वन्या-लोकलोचने ३.६ अधिकृत्यवृत्तिः।

३. काव्यप्रकाशे ७.६२ कारिकावृत्तिश्च

४. मानियर-विलियम्स–कोशे धीरस्तु Brave, Courageous, Energetic भवति।

५. उद्धतो ललितः शान्त उदात्तो धैर्यवृत्तित.। सरस्वतीकण्ठाभरणे ५.१०६ धैर्यं यत्र गुणसन्निवेश–चारुत्वादुदात्तं स धीरोदात्तः इत्यादि भरतकोशे पृष्ठं २९७

वीर–प्रशान्ता विज्ञेया ब्राह्मणो वणिजस्तथा ॥ २४.१८

नाट्यदर्पणे ५.७ राजानस्तु चतुर्विधा इति पाठो लभ्यते ।

अत्र डिमादिषु नायका वस्तुतो धीरोद्धता देवाः सन्ति ।[1] नाटकेषु देवा नायका न भवन्ति । नृपाणा द्विविधं रूपं नाटकादिषु दृश्यते– अन्तःपुरीयं, बाह्यञ्च । अन्तःपुरे तेषां नायिकाविषयकः शृङ्गारो धीरललितत्वमेवोप निबध्नाति । यथा स्वप्नवासवदत्ते, अभिज्ञानशाकुन्तले, विक्रमोर्वशीये, मालविकाग्निमित्रे वा । यद् राज्ञा बाह्यं जीवनं, तत्रामात्यादीना शौर्यं प्रायः प्रदृश्यते । ते धीरोदात्ताः प्रोक्ता । धीरप्रशान्तोचिते दानधर्मवीर-शान्ते ब्राह्मणानां विप्राणाञ्चाधिकारो विशेषतरो लक्ष्यते । अतएव नात्र विसंवादो लक्षणीयः । तथापि यथालोके तथा नाटकादिषु चेतरेतरनायका-नामितरेतरचारित्र्य-विशेषो दृश्येत । यथा देवीचन्द्रगुप्ते नायकस्य चन्द्रगुप्तस्यौदात्त्यमेव विलसति ।

देवादीना धीरोद्धतत्व सामान्यं लक्षणम् । तेषा विशेषलक्षणमभिनव-गुप्तेन विशदीकृतम् । तथोक्तम्—यद्यपि देवा पुरुषापेक्षयोद्धतास्तथापि स्वापेक्षया गाम्भीर्य–प्रधानतयोदात्ता उच्यन्ते भगवत्त्रिपुरारिप्रभृतयः, प्रशान्ता ब्रह्मादयः, उद्धता नृसिंहादयः ।

### अधमा अपि प्रधाननायकाः

भरतोऽधमं प्रधाननायक न प्रतिजानीते । तथोक्तम्—

अत्र चत्वार एव स्युर्नायकाः परिकीर्तिताः ।

मध्यमोत्तमप्रकृती नानालक्षणलक्षिताः ॥ २४.१६

किं तर्हि न भवन्ति प्रधाननायका अधमा अपि ? बहुषु रूपकेष्वधमा एव प्रधाननायकाः सन्तीति नादृष्टं विपश्चिताम् । तदनुसृत्याभिनवगुप्तेन सिद्धान्तितम्—

हास्यादिरसप्रधानत्वे ह्यधम एव नायकः ।[2]

नाटचदर्पणानुसारेण

---

१—आ पिशाचाद् ब्रह्म यावत् देवाः सन्ति । ना० शा० १३.१८ भारती ।

२. तस्याः ( वीथ्याः ) सर्वरसत्वस्याभिधानात् पर्यायेण रसाना प्राधान्या-दुत्तमो मध्यमोऽधमो वा नायको भवत्येव । तथा च कोहल :—

उत्तमाधममध्या भर्युक्ताप्रकृतिस्तथा एकहार्या द्विहार्या वा सा वीथीत्यभिसंज्ञिता॥

अधमप्रकृतेस्तु न नायकत्वमिति ध्रुवं प्रहसनभाणकादौ किं ब्रूयात् ? हास्यादिरसप्रधानत्वे ह्यधम एव नायकः । कथाशरीरफलेन प्रधानतया सम्बध्यमानो नायक उच्यते ।

ना० शा० खण्डस्तृतीयः पृष्ठ ४५६ गा० ओ० सी०

भाण–प्रहसनयोः कस्यांचिद् वीथ्यां च नीचोऽपि नायकः तत्र स्पष्टीकृतम्–
नीचोऽपीशः कथावशात् । ना० द० ४.७

## योनिदृष्ट्या नायकाः

योनिदृष्ट्या त्रिविधा नायका भवन्ति—दिव्याः, दिव्यादिव्याः, अदिव्याः ( मानुषाः ) च । तत्र देवेषु ब्रह्मण आरभ्य पिशाचान् यावत् सर्वेऽन्तर्भूताः[१] दिव्यादिव्यास्तु राजान एव भवन्ति । भारतीयधारणानुसारेणेमे नृपा लोकपालांशेन समुद्भूता देवा एव किन्तु मानुषीयोनिषु जाता अदेवा अपि भवन्ति । अत एव ते दिव्यादिव्या इत्युच्यन्ते ।[२] । मानुषास्तु सुप्रतीता एव ।

अभिनय-दृष्ट्या प्रकृतीनामिमे भेदा महत्त्वं भजन्ते । तद्यथा—

दैत्य–दानव–यक्षाणां नृपपन्नग रक्षसाम् ।
चतुस्तालप्रमाणेन कर्तव्याथ गतिर्बुधैः ॥
दिवौकसां तु सर्वेषां मध्यमा गतिरिष्यते । ना. शा. १२.२३-२४

नाटके देवः प्रधाननायको भवितुं नार्हति ।

## अप्राणि–नायकाः

भरतानुसारेणाप्राणिनायका यथावकाशं नियुज्यन्ते । तथोक्तम्—

शैलप्रासादयन्त्राणि चर्मवर्मध्वजास्तथा
नाना प्रहरणाद्याश्च तेऽप्राणिन इति स्मृताः ॥
अथवा कारणोपेता भवन्त्येते शरीरिणः ।

ना. शा. २१. ९३, ९४

अभिनवगुप्तो विशदयति—

'शैलप्रासादादीनि निर्जीवत्वे प्रस्तुतत्वेन परिगणितान्यपि अवस्था-विशेषेषु नाट्यधर्मेण सजीवत्वेऽपि' इत्यादि ।

एते क्वचिदधिष्ठातृदेवरूपेण प्रकटन्ति । यथा उत्तररामचरिते नद्य । अन्यत्र च स्वरूपेणैव किंचिन्मनुष्यवदाचरन्ति । यथा दूतवाक्ये सुदर्शनादीनि ।

परवर्तियुगे छायानाटकमेतदाप्याश्रित्य प्रपञ्चितमासीत् ।

---

१–'दिव्यानां देवयोनीनां पिशाचादिब्रह्मान्तानाम्' ना. शा. १३.१८ अधिकृत्य-भारती ।

२–दिव्यादिव्या एव राजानो यतो हि नाम ते देवांशजा इति लोकपालांशनिर्माणा राजानः । ना. शा. १२.२५ अधिकृत्य भारती ।

देवांशजास्तु राजानो वेदाध्यात्मसुकीर्तिताः । तत्रैव १२.२८

## उपनायकानुनायकयोर्भेदः

नाटकीयेतिवृत्तेऽनुनायको मुख्यनायकेन सह कथारम्भादेव तस्य साह्यमाचरति। यथा प्रतिमानाटके, उत्तररामचरिते च लक्ष्मणो वर्तते। उपनायकौ—पताकानायकः, प्रकरी नायकश्च कथारम्भे न स्याताम्। तयोराविर्भावो विशेषकार्यार्थं परतो भवेत्।

प्रकरीनायकेन समानोऽनुनायकः स्वार्थं न समीहते। पताकानायकस्त्वनुबन्धानुसारतस्स्वार्थाय प्रवर्तते, स्वार्थसिद्धेरनन्तरमेव स प्रधाननायकस्य कार्यं साधयतीति साम्य–वैषम्यानुसारि विवेचनमेतेषाम्।

इमे सहायका एव कार्यपरायणं प्रधाननायकं फलं प्रापयितुमुद्योगिनो भवन्ति। यत्र प्रधाननायकः फलाय चेष्टमानो न दृश्यते, तत्र कार्यनायकश्चाणक्यवत् मुद्राराक्षसे तस्याभीष्टं साधयति। अनेन कार्यनायकादुपनायकस्य भेदः समुद्दिष्टः।

## नायिका-संव्यवहारतो नायकभेदाः

नायिका–विषये नायकस्य वर्तनं परीक्ष्य प्रणयिनो नेतुः पाञ्चविध्यं भरतेन प्रतिपादितम्—

चतुरः, उत्तमः, मध्यः, नीचः, प्रवृत्तकश्च।[1]

चतुरः

समदुःखक्लेशसहः प्रणयक्रोधप्रसादने कुशलः।
योऽर्थी नात्मच्छन्दो दक्षश्चतुरः स बोद्धव्यः॥ २३.५४

उत्तमः

मधुरस्त्यागी रागं न याति मदनस्य नापि वशमेति।
अवमानितश्च नार्या विरज्यते चोत्तमः स पुमान्॥ २३.५६

मध्यमः

सर्वार्थैर्मध्यस्थो भावग्रहणं करोति यो नार्याः।
किञ्चिद्दोषं दृष्ट्वा विरज्यते मध्यमः स भवेत्॥ २३.५७

नीचोऽधमः

अभिनवकृते व्यलीके प्रत्यक्षं रज्यते दृढतरं यः।
मित्रैर्निवार्यमाणो विज्ञेयः सोऽधमः पुरुषः॥ २३.६०

प्रवृत्तकः

अवगणितभयामर्षो मूर्खप्रकृतिः प्रसक्तहासश्च
एकान्तदृढग्राही निर्लज्जः कामतन्त्रेषु

१. स्त्रीसम्प्रयोगविषये ज्ञेयाः पुरुषास्त्वमी पंच। ना० शा० २३.५३

रतिकलहसम्प्रहारेष्वकर्कशः क्रीडनीयकः स्त्रीणाम् ।
एवंविधस्तु तज्ज्ञैर्विज्ञेयः सम्प्रवृत्तस्तु ॥ २३.६२

एतेभ्यो व्यतिरिक्तं ज्येष्ठ नायकमप्यस्मिन् प्रसङ्गे भरतो विवृणोति । तद्यथा,

यो विप्रियं न कुरुते नार्याः किंचिद्विराग-संज्ञातम् ।
अज्ञातेप्सितहृदयः स्मृतिमान् धृतिमान् स तु ज्येष्ठः ॥
ना० शा० २३.५५

इमे भारतीया नायकाः साधारणत एकनायिकाः सन्ति । न तेषां वैविध्यं प्रपंचयितुं धनञ्जयो मतिं कुरुते । स तु पूर्वं प्रत्यन्यया हृत नायकमेव युवजन-प्रीतये सविशेषं महत्त्वपूर्णं मन्यते, तेषां भेदं च दक्षिणः, शठः, धृष्ट इति प्रस्तावयति । एतेषु धृष्टो वा शठो वा तावद् भरतस्याधमेन समानः ।[1]

अन्यत्र भरतः शठं परिभाषते—

वाचैव मधुरो यस्तु कर्मणा नोपपादकः ।
योषितः किञ्चिदप्यर्थं स शठः परिभाष्यते ॥ २२. ३१५

धनञ्जयस्यानुकूलो दक्षिणश्च नायको भरतेन प्रियः, कान्तः, विनीतः, नाथः, स्वामी, जीवितम्, नन्दन इत्यादिभिः नामभिः संकेतितः ।[2] धनञ्जयस्य शठो धृष्टो वा भारतीयनाट्यानुसारेण नायिकया दुःशीलः, दुराचारः, शठः, वामः, विकत्थनः निर्लज्ज, निष्ठुरश्चाभिधीयते ।[3]

धनञ्जयस्तु दक्षिणः, शठ, धृष्टः इति प्रकारत्रयमेव संक्षेपेण वर्णयति । भरतस्तावत् प्रत्येकस्य भेदानपि सूक्ष्मेक्षिकया सरसं विवृणोति । भरतानुसारेण दक्षिणादयो नायका अधाविधाः सन्ति—

दक्षिणः

कुलीनो धृतिमान् दक्षो दक्षिणो वाग्विशारदः । २२. ३१०

शठः

वाचैव मधुरो यस्तु कर्मणा नोपपादकः ।
योषितः किञ्चिदप्यर्थं स शठः परिभाष्यते ॥ २२. ३१५

निर्लज्जः

भरतस्य निर्लज्ज एव धनञ्जयस्य धृष्टः । तद्यथा

---

१. व्यक्ताङ्गवैकृतो धृष्टः । गूढविप्रियकृच्छठः । दश० २.७
२. ना० शा० २२. ३०५–३११
३. ना० शा० २२. ३१२–३१९

वार्यमाणो दृढतरं यो नारीषूपसर्पति ।
सचिह्नः सापराधश्च स निर्लज्ज इति स्मृतः ॥ २२.३१८

प्रियः

भरतस्य प्रिय एव धनञ्जयस्यानुकूलनायकः । तद्यथा

यो विप्रियं न कुरुते न चायुक्तं प्रभाषते ।
तथार्जवसमाचारः स प्रियस्त्वभिधीयते ॥ २२.३०५

# सप्तदशशतस्य संस्कृतमहाकाव्यानि

रामलखन पाण्डेयः

## रामचन्द्रोदयम्

रामचन्द्रोदयस्य नाम महाकाव्यस्य प्रणेता वेङ्कटेशनामा दाक्षिणात्यः कविः। प्रतिसर्गान्तपद्यानुसारेण कविरेष आत्रेयगोत्रोद्भवस्य स्वसमानाभिधस्य वेङ्कटेशार्यस्य पौत्रः श्रीनिवासस्य च पुत्र आसीत्। एतस्य जन्म काञ्ची निकषा १५९६ ई० सवत्सरेऽभूत्। रामानुजीयवैष्णवसम्प्रदायानुगत एष भगवति रामचन्द्रे महती प्रीतिं चकार। रामचन्द्रोदयम्, रामयमकार्णवः,[1] श्लेषमाला[2] चेत्यप्रकाशिता अस्य तिस्रः कृतयः प्राप्यन्ते।

ग्रन्थाक्षरैस्तालपत्रेषु लिखितो रामचन्द्रोदयस्यादर्शः तञ्जापुरस्य सरस्वतीमहलग्रन्थालयये ( B/D/43/D37311 ) सुरक्षितोऽस्ति। तस्य देवनागरीप्रतिलिपिरपि तत्र ( ९४० तथा ९४१ ) लभ्यते। सम्पूर्णतयोपलब्धस्याप्यस्य ग्रन्थस्य वर्णपदपादादिगतः प्रतिपृष्ठं पाठक्रमस्त्रुटितोऽस्ति।

रामचन्द्रोदयं त्रिंशत्सर्गेषूपनिबद्धं बृहत्कायं महाकाव्यं वर्तते। तत्र विशेषो यत् सर्वेषु त्रिंशत्सर्गेषु पद्यसंख्यापि शताधिकैव। अस्य महाकाव्यस्य व्याख्यामपि कविः स्वयमेव लिखितवान्। महाकाव्यस्य तद्व्याख्यानस्य च विरचनं तेन वाराणस्यां स्थितेन विहितम्[3]। रामचन्द्रोदयं १६५६ खिस्ताब्दे प्रणीतमिति महाकाव्यस्यान्यप्रमाणानि च ग्रन्थान्ते कविर्लिखति—

> वेदपूर्णगुणपावकपद्यं व्योमवह्निसमसर्गमुदारम्।
> काव्यमङ्गुणर्तुलयुगाब्दे वेङ्कटोऽकृत कलौ कविवर्यः॥
> षट्त्रिंशदत्र वृत्तानि छन्दांसि च चतुर्दश।
> खार्कप्रागा इह श्लोका अनुष्टुप्संख्यया मता॥

---

१–तञ्जौरस्यसरस्वतीमहलग्रन्थालये कैट. १०३२३।

२–मैसूर O M L 260 ( द्र० कृष्णमाचार्यस्य संस्कृतसाहित्येतिहासः, पृ० ३७३ )

३–"काशी गतेन क्लृप्तं काव्यं मुनिबाणतिथिमिते हि शके" इति ग्रन्थान्तव्याख्याने।

रामचन्द्रोदयमहाकाव्ये रामस्य राज्याभिषेकं यावद् बृहती कथा विषयीकृता। प्रथमसर्गे सूर्यवंशस्य संक्षिप्तेतिहासेन सह दशरथस्याखेटगतापराधवशान्मुनिशापाधिगमनान्तं वस्तु विवेचितम्। अयोध्यां वर्णयन् कविर्लिखति—

दिक्षु दिक्षु महावीथ्यो वीथ्यां वीथ्यां मणीगृहाः।
गृहे गृहे महत्सौधं सौधे सौधे नवाः स्त्रियः॥२८

स्त्रीषु स्त्रीषु शुभा भावा भावे भावे सदा मुदः।
मोदे मोदे परं गानं गाने गाने मनोयुगः॥ २९

द्वितीयसर्गे प्रधानतया दशरथस्य पुत्रेष्टियज्ञसम्पादनं प्रतिपादितम्। तदनुषङ्गतया रावणोपद्रवनिराकरणप्रयुक्तदेवादिकृतं विष्णुस्तवनं विलिख्य रक्षसां विनाशाय विष्णोरवतारसूचनं च स्वविषयीकृतम्। तत्र प्रकृतविषयानुकूलं विष्णुवर्णनं यथा—

समस्तदिक्पालकसारलुण्ठनप्रचण्डदोर्दण्डनिशाचरार्जितम्।
यशः समादाय करेण केवलं छलेन यंशस्य हसन्निवाच्युतः॥७३

तृतीयसर्गे राज्ञीनां दोहदवर्णनादारभ्य रामादीनां यौवनसौन्दर्योल्लासितान्तं वस्तु विविच्य मिथिलायां जन्मतो रामेऽनुरक्तायाः सीतायाश्चरितं कीर्तितम्। यौवनागमनं कविर्वर्णयति—

कालवस्तु किल येन कल्पते यस्य कालकलिता न पक्वता।
तद्धि कालपरिपाकसंभवं यौवनं सरसभावमाययौ॥७१

चतुर्थपञ्चमसर्गयोः विश्वामित्रेण सह रामलक्ष्मणयोर्वनगमनम्, रक्षोविनाशमुखेन मुनियज्ञस्य निर्विघ्नसम्पादनम्, अहिल्योद्धारः, मिथिलाधिगमनं चेति वस्तु विलसति। चतुर्थसर्गस्योत्तरार्धे गङ्गावर्णनं विश्वामित्रमुखेन कारितम्। पञ्चमसर्गस्योत्तरार्धे मिथिलावर्णनं वर्तते—

स्फुटचित्रयुवावली लसन्मुखपूर्णेन्दुविलोकनाशया।
अपि कृत्रिमपुत्रिकाशतैरनिमेषत्वमधायि यत्पुरे॥५६

सितसौधसमूहभासिता घनमध्योपवनेन मेचका।
बहुवीचिपरस्पराहतिस्फुटफेनाब्धितुलां दधार या॥८२

षष्ठसर्गादारभ्यैकादशसर्गपर्यन्तं स्वयंवरविवाहादिप्रयुक्तमितिवृत्तं प्रचरति। अस्मिन् प्रकरणे कविता सर्वतोभावेन सर्वाधिकचारुतामुपगता। तदत्र विविधप्रसंगानुकूलतामवतार्य कविरनेकविधिना सीतारामयोः सौन्दर्यं वर्णयन् नहि श्रान्तिमधिगच्छति। विश्वामित्रमुखेन रामस्य परिचयं कारयन्नसौ लिखति—

असयाङ्गे कलयसि यत्र सौकुमार्यं
तत्रैव स्फुटति सहस्रशोऽपि वज्रम् ।
यद्दीक्षा रचयति शीतलानशेषान्
सा दह्याद् जगदिदमौर्वगर्वघोरा ॥७.७४

सीतारामयोरुपमानानि यथा—

मेघेन विद्युद्रविणा प्रभेव धात्रेव वाणी हरिणेव लक्ष्मीः ।
शिखेव दीपेन कलेन्दुनेव रामेण सीता रमतामभिन्ना ॥ ८.२४

अत्रैव विवाहप्रसङ्गे विलक्षण विनोदप्रभरु प्रकरणमवतार्य नायकयो वर्णनं कविः प्रस्तौति । जनको विश्वामित्रश्च सीतारामयोरनुरूपसयोग-प्रशंसनक्रमे ऽकस्मादेव तौ द्वावपि एकैकपक्षगतौ भूत्वा स्वस्वपक्षगतस्याधिक्यं दर्शयतः—

रामस्त्वयं नस्तव सापि रामा पयोधरोदारतनूगुणाढ्या ।
श्यामाम्बुभाविभ्यखिलं समानं रामो बलीयानबला हि सा ते ॥१४॥
नृपो बभाषेऽथ बलीति योगिन् यदात्थ रामं तदिदं यथार्थम् ।
किन्तूदरे गर्तगभीरनाभौ वलित्रयं नाम बिभर्ति बाला ॥१५॥
मुनिर्जगादामुष्ययोनिजायाः कुलव्यपायान्न कुलोचिता सा ।
लोकेऽडितेक्ष्वाकुकुलप्रसूनो रघुद्वहोऽयं रमणीयभूमा ॥१८॥
नृपोऽब्रवीन्मे तनयाप्रसूर्या कुलाचलास्ता शिरसा वहन्ति ।
येष्वेकमर्को रघुवंशपूज्यः प्रदक्षिणं मेरुमुपातनोति ॥१९॥

द्वादशसर्गतश्चतुर्दशसर्गं यावदयोध्यायां विविधमहोत्सवादिकं सीता-रामयोः समागमसुखं च वर्णितम् । चतुर्दशसर्गान्ते रामराज्याभिषेकस्योपक्रमो निरूपितः । पञ्चदशषोडशसर्गयोः कैकयीकोपवशाद् रामादीनां वनगमनं विवेचितम् । सम्पूर्णोऽपि चतुर्दशसर्गो विविधैश्चित्रालंकारैः खचितोऽस्ति—

विवरे विवरे वीरो विवेराव वयोवरः ।
वरायो रैरिरायायो ययौ रायो वरावरः ॥३३

अग्रिमसर्गेषु वनगतेतिवृत्तं रावणहननादिकं यथावदुपस्थापितम् । त्रिंशसर्गे रामराज्याभिषेकवर्णनाद् रामस्य चिरं राज्यशासनस्थिति-सूचनाच्च महाकाव्यमिदं समाप्तिं गच्छति ।

## नानकचन्द्रोदयम्

नानकचद्रोदयस्य नाम संस्कृतममहाकाव्यस्य कर्ता देवराजकविरस्ति। डा० वर्णेकरः स्वकृते संस्कृतसाहित्येतिहासे लिखति यदस्य काव्यस्य कर्तारो देवराजस्य गङ्गारामश्चेति द्वाविति[१]। परं प्रकृते मङ्गलाचरणस्य टीकानुसारेण गङ्गारामेण केवलं प्रेर्यमाणो भूत्वा देवराजकविरेकाकी एव ग्रन्थममुं व्यरचयत्[२]। कदाचिद् गङ्गारामो राजानं भागमल्लं नानकीयां कथां श्रावितवान्। नानकपरवर्तिसिक्खगुरुणां कथां गङ्गारामस्य गुरुभ्राता देवराजस्तं नृपं बोधयामास। पश्चादसौ देवराजः सम्पूर्णामिमां गुरुगणकथां संस्कृतमहाकाव्यत्वेनापि व्यलिखत्। एकोनविंश–प्रस्तावस्यान्ते प्राप्तपुष्पिकानुसारेण देवराजकविः शाण्डिल्यगोत्रीयस्त्रिपाठिरघुपतिशर्मणस्तनय आसीत्[३]। वाराणसीवास्तव्योऽयमित्यापि तत्र सूचितम्।

महाकाव्यस्य भूमिकानुसारेण गुरुगोविन्दसिंहाय केशकोशकंकतिकादिप्रदाता द्वारिकादासाख्यः कश्चिदुदासिवर्यो परम्परागतां सिक्खगुरुणां गाथां स्वशिष्यद्वय गङ्गारामं देवराजं च श्रावयामास[४]। तदनुसारेणैव गुरुगोविन्दसिंहः १६६६ तः १७०८ ई० वर्षपर्यन्तं सिक्खानां गुरुरासीत्। तदेवं प्रस्तुतकाव्यकर्ता देवराजकविस्तस्य गुरुगोविन्दसिंहस्य समकालिकत्वेन सप्तदशशताब्दिको निर्णीयते।

---

१—अर्वाचीनसंस्कृतसाहित्य, पृ० ४७।

२—"अथ श्रीगुर्वङ्गदं प्रति बालसिन्धुना भाषाप्रबन्धेन निरूपितामपि श्रीगुरुनानकस्याविर्भावादारभ्य तिरोभावावधिलीलां मम काशीवासिनः संस्कृतकिञ्चित्परिचयस्य मनोविनोदाय विद्वन्मनोविनोदाय च संस्कृत–प्रबन्धेन गुरोर्निरूपयेति भागमल्लप्रार्थ्यमानो गङ्गारामप्रेर्यमाणोऽध्यारोपापवादाभ्या निष्प्रपञ्चं प्रपञ्च्यत इति न्यायमाश्रित्य ब्रह्मण्याविद्यिकीं प्रपञ्चोत्पत्तिं तत्त्वज्ञानात्तदपवादञ्च निरुपयन् तटस्थस्वरूपलक्षणाभ्यां तदधिष्ठानं ब्रह्म लक्षयन् देवराजकविः प्रस्तुतग्रन्थनिर्विघ्नपरिसमाप्त्यै प्रचयगमनाय च कृतमाशीर्वादात्मकं मङ्गलं शिष्यशिक्षार्थं तावन्निबध्नाति"।

३—१९३९ वि० वत्सरे हरिप्रसादेन मुम्बापुर्यां जगदीश्वरमुद्रणालये मुद्राप्य प्रकाशितं नानकचन्द्रोदयम्।

४—१९७७ ई० वर्षे सम्पूर्णानन्दसंस्कृतविश्वविद्यालयतः प्रकाशितं नानकचन्द्रोदयम्।

मुम्बापुरीतः संजातेऽतिप्राचीने प्रकाशने ग्रन्थोऽयमेकोनविंशति-प्रस्तावेषु समाप्तिं गच्छति। १९७७ खिस्ताब्दे वाराणसीतः प्रकाशितं नानकचन्द्रोदयं चैकविंशतिप्रस्तावपरिमित वर्तते। प्रस्तावेषु विभक्त-त्वादस्य ग्रन्थस्य महाकाव्यत्वे दोषो न देयः। हेमचन्द्रादयो महाकाव्यस्य विभाजकत्वेन सर्गस्थानीयमन्यदभिधेयमपि निर्दिशन्ति[1]।

कथावस्तु

ज्वालादेवी द्रष्टुं गच्छन्नङ्गदो नाम क्षत्रियवरो मार्गे तपोमूर्ति नानकं साक्षात्कृत्य तस्य शिष्यत्वं जग्राह। कियद्दिनानन्तर नानक एकाकी एव कुत्रचिज्जगाम। अङ्गदस्तु तेन विना जलहीनमीन इव यत्र तत्र बभ्राम। संयोगादेकदा बालसिन्धुनामा ( बाला ) नानकस्य बालबन्धुः तममिलत्। अङ्गदेन प्रार्थ्यमान स गुरोरद्भुता कथां कथयितुमारेभे-

"वार" इति नाम्ना ख्याते जनपदे 'तलवण्डी' संज्ञिका नगरी वर्तते। तत्र वेदिक्षत्रियाणां कुले कालवर्मा जनि लेभे। बन्धुरिव तत्रत्यो राजा रायबोलारस्तस्मै कतिचिद् ग्रामाँल्लिलेख। कालवर्मणो भार्या "नृप्ता" नानकीति कन्या प्रासूत पश्चात्तयोर्गेहे नानकः समुत्पन्न। एकदा स गृहाद्धनं वस्त्राणि चानीय भिक्षुकेभ्यो व्यतरत्। तस्मात्क्रुद्धो पिता त वने गोचारणाय समादिशत्। तत्र नानकस्य गावो लोकाना कृषि चरन्ति स्म। वने शयानो फणीन्द्रवारितातपो नानकस्तेनैव पथा गच्छता कदाचिद् राजा रायबोलारेण दृष्टः। स त स्वसभायामानीय त सत्कृतवान्।

उपनयनानन्तरं नानको हेलयैव शास्त्राणि पठतिस्म। अस्य पिता कदाचिदमुं भाण्डं विक्रेतुमादिशत्। स च भाण्डानि विक्रीय प्राप्तधनेन बुभुक्षितान् साधून् पर्यभोजयत्। कुपित पिता तमताडयत्। अत्रान्तरे जयरामेण सह नानक्याः परिणयः सम्पन्न। बालसिन्धुना सह दानव्यसनी नानको भगिन्या गृहे सुरत्राणपुरे प्रेषितः। तत्र धनखाननृपो नानकाय भक्ताधिकारं दत्तवान्। नानकस्य विवाहः पक्षक-नगरस्थमूलचन्द्रचोणस्य पुत्र्या सुलक्षण्या साकं सम्पन्नः। विवाहानन्तरं रूपयौवनसम्पन्नापि सुलक्षणी बाल्यादेव विरक्तस्य नानकस्य मनो रमयितुं न शशाक। पश्चाज्जनानामुपालम्भैः गार्हस्थ्यशिक्षणैश्च नानको नायकतागुणेन कामक्रीडाभिः पत्नी पर्यतोषयत्। तयोः श्रीचन्द्राभिधस्तनयो बभूव। सार्धचतुर्वर्षानन्तरं पुनरपि तत्पत्नी गर्भं

[1] — काव्यानुशासन—८

दधार। तदैवैकदा वेत्रीनद्यां स्नानाय गतो नानको निमज्जनानन्तरं न बहिराजगाम। हा हेति रुरोद सर्वेऽपि स्वजना। परं तृतीये दिवसेऽकस्मादेव नदीजलान्निर्गत्य स शोकस्थं लोकं विस्मितं हर्षितं चाकरोत्। अपरस्मिन् दिने धनखाननृपस्य दायित्वप्रयुक्तं आयव्ययमेलनं विधाय विरक्तिमासाद्य नानको वनं जगाम।

वृत्तान्तज्ञानाय कालवर्मणा प्रेषितो मर्दनः (मर्दाना) नानकस्य सेवको भूत्वा तत्रैव तस्थौ। कदाचिद् मर्दनस्य फेरुसंज्ञकस्य वैणिकस्य वीणावादने "नानकोऽयं निराकारः" इत्येव ध्वनिः प्रादुरभूत्। फेरुः स्वीयां वीणां नानकाय समर्पितवान्। अथ नानकस्ताभ्यां सह यमनावादं गतवान्। तत्र लालसंज्ञस्य तक्षकस्य गृहे मासमेकं न्यवसत्। तत्रैव मलिकेन नाम यवनाधिकारिणा स्वगृहे भोजनविधौ समाहूतो नानकस्तत्र न गतः। किं कारणमिति तेन कुपितेन पृष्टः स वामहस्ते मलिकस्य शष्कुली दक्षिणे च लालस्य शुष्करोटिका निनाय। अकस्मादेव जनैः स्रुतरक्ता शष्कुली पयःप्लुता रोटिका च दृष्टे। एकदा तत्रत्यनृपस्य पुत्रो रुग्णतामभजत। अभिचारशंकया नृपाज्ञया साधुभिः सह नानकोऽपि बन्दीकृतः परं नानकप्रभावात् शीघ्रमेव सर्वे मुक्ता अभुवन्। इतो गुरुः स्वजन्मभूमिं तलवण्डीमपि गत्वा तत्र रुग्णं बोलारराय कोनाविष्ट स्वपरिवारं चोपदिदेश। अथासौ वङ्गदेशं गत्वा तत्र ब्रह्मपुत्रमतिक्रम्य कामरूपान् ययौ। तत्र प्राग्ज्योतिषपुरस्य स्त्रियो मर्दनं मेषं चक्रुः। नानकस्तु प्रतीकारेणता मेषीं विधाय मर्दनं मनुजं कृतवान्। तदनन्तरमुत्कलकलिङ्गगान्धारकेरलद्रविडानुल्लंघ्य स सिंहलद्वीपमगच्छत्। शिवनामराजस्य शुष्कमुद्यानं तत्र नानकः सपल्लवमकरोत्।

अत्रान्तरे यदा वालसिन्धुर्नानकस्य चरितं गायति स्म, अकस्मादेव गुरुरङ्गदो ध्यानस्थोऽभूत्। सप्तविंशतिदिनानि यावदङ्गदस्य समाधेरनन्तरं वालसिन्धुरग्रिमां कथामवोचत्—

असपर्शनाथस्य द्वीपतो गृहं निवर्तमानो मर्दनो राक्षसैः कटाहे पच्यते स्म। नानकस्तत्रोपगम्य "भो मर्दन, आयाहि, वीणां वादयस्व" इत्यकस्मात्कटाहान्मांसखण्डानुत्प्लुत्य वैणिकस्य मर्दनस्य रूपं दध्रुः। इतो नायको जनानुपदिशन् सैन्धवद्वीपम्, विषहरदेशम्, झिलमिला-द्वीपम्, ब्रह्मपुरनगरम्, वनमानुषप्रदेशमित्यादिस्थलेषु बभ्राम। एकदासौ सिन्धुसमीपे पञ्चत्रिंशत्क्रोशदीर्घं देहं दधान स्तत्रैव मत्स्यतापन्नं त्रेतायुगीनं स्वमित्र-

मप्युद्दधार। मक्कायां नानककृपया मर्दनो निर्निमेष एवाभ्यन्तरं गत्वा परैरदृष्टां शिवस्याश्ममूर्तिं दृष्टवान्। मदीनायां मस्जिदस्य द्वारसम्मुखं पादौ प्रसार्य शयानस्य नानकस्य पादद्वयं क्रुद्धौ यवनसाधुः यस्यामपि दिशि चकार, द्वारमपि तस्यां दिशि बभूव। अथावाभ्यामनुगतो नानकः सुमेरुयात्रायां गोरक्षप्रभृतिभिर्नवनाथैश्चतुरशीतिभिरन्यैः सिद्धैश्च परीक्षितो भूत्वा सुप्रसन्नः सुमेरौ व्यचरत्। ध्यारगिरौ दत्तात्रेयेण सहापि गुरोर्वार्ता बभूव अनलाचितपर्वते प्रह्लादेन सत्कृतो ध्रुवेण च संगतः नानको वैकुण्ठमगमत्। तत्र विष्णुं स्तुत्वा तदुपदेशमुदासीनमार्गप्रतिष्ठापनादेशं च हृदिकृत्य ध्रुवलोकमाजगाम। मर्दनेन पृष्टे सति नानको भूगोलस्य खगोलस्य च सर्वां स्थितिमवर्णयत्। ततः कैलासे भवानीपतिं साक्षात्कृत्य ते लङ्कायां भूलोकमवतरितवन्तः। तत्र विभीषणेन नानकः सत्कृतः। मार्गे गान्धारदेशे मर्दनो दिवङ्गतः।

एकदा सूर्यग्रहणावसरे कुरुक्षेत्रमासाद्य नानकाज्ञप्ते मयि मांसं पचति सति नैके गृहस्था सघृण निनिन्दुः। नानकस्तेषामाडम्बरं स्फोटयन् मासभक्षणस्यादोषत्व प्रत्यपादयत्। ततो दिल्लीपतेः बोराहंखानस्याज्ञया नैकैः साधुभिः सह नानकोऽपि बन्दीकृत्य कारागारे निक्षिप्तः। तत्र नृप एकैकं न्यासिन घरट्टे गोधूमं पेष्टुं ददौ। तदा स्वय प्रचलित नानकस्य घरट्ट दृष्ट्वा नृपः सर्वानपि मुक्तवान्। परं नानकस्तु मुक्त. सन्नपि तत्रैव तस्थौ। अत्रान्तरे विजिगीषुर्बाबरः बीराहंखान पराजित्य दिल्लीपतिरभूत। कदाचित्तस्य भोजन कृमिदर्दुरः-रूपेण पर्यवर्तत। विचारिते परमेश्वरस्य कोपकारण विज्ञाय कारागृहस्थं नानक प्रार्थयत। नानकस्तमुपदिदेश। ततश्च नानक. पक्षकनगरं गत्वा तत्प्रान्तभागे सपत्नीको न्यवसत्। तत्र कदाचिदम्बा सुलक्षणी मामवोचद् यद्भो वाल! कियत्काल यावत्स्वगुरुं विमुञ्च येन ममापि सान्निध्यमाश्रयतु गमनकाले "हे गुरो त्वयि प्रयाते तव पदे कःस्थितो भविते" ति मयि पृष्टे सति अङ्गदनामा शिष्यो मम पदे स्थास्यतीति गुरुरवोचत्। ततश्चाहं तलवण्डीमगच्छम्। भवन्त श्रुत्वा चात्र संप्राप्तोऽस्मि।

अथ बालसिन्धुरङ्गदेन सेव्यमानः द्वयोर्मासयोरनन्तरं दिवङ्गतः। श्रीचन्द्राभिधं पुत्रमुपदिश्य नानकोऽप्यन्तर्दधौ। अन्तिमसंस्काराय यवनाश्चार्याश्च नानकशरीरं विभक्तुकामा न किमपि तत्र दृष्ट्वा वस्त्रमेव विभज्य स्वस्वयोग्यां क्रियां चक्रुः। महनीयकीर्तेर्नानकस्य वंशो भुवि प्रथितोऽभूत्।

काव्यकला—

नानकचन्द्रोदयस्य कथावस्तु बालसिन्धुविरचितां नानकीयकथामनुगच्छतीति प्रोक्तं ग्रन्थादौ कविः—

बालाख्येन पुराङ्गदं प्रति कथा प्रोक्ता निजप्राकृत-
वाण्या नानकसंज्ञितात्मविशदज्ञानाम्बुधेः श्रीगुरोः ।
गङ्गाराममुदाह सैव भवता गीर्वाणवाण्याकृता
श्रव्या मे कृपयेत्युवाच नृपतिः श्रीभागमल्लाभिध. ।।

तदुक्तस्रोतोविनिर्गतं काव्यमिदं सामान्यजनाना तोषाय विद्वन्मनोविनोदाय चास्ति। अत्रत्यविषयवस्तूनि न केवलं चमत्कारातिशयेन सामान्यजनमनांसि रञ्जयन्ति, अपितु सत्त्वगुणोपेताना धार्मिकी मनःस्थितिमपि प्रमाणयन्ति। तद्वस्तुप्रतिपादनं च सरससरलं मित्रमिव मनसा संगच्छते अद्भुतरसपाकः काव्येऽस्मिन् बहुधा भवति। तेन सह क्रीडन्त इव विविधा भावाः शान्तरसेऽङ्गिनि स्वपरिणतिं विलासयन्ति। नानकस्य वनचर्यामुपलक्ष्य तदनुकूलपदच्छन्दप्रयोक्ता कविर्लिखति—

क्वचिद् वृक्षस्याध. क्वचिदपि लताकुञ्जनिवहे
क्वचिद्दूर्यां सिंहैर्द्रुतपरिहृताया स विनयैः ।
क्वचित्तुङ्गे शृङ्गे तपति तपने द्वन्द्वरहित
स तस्थौ स्वस्थात्मा विगतभयरागव्यतिकरः ।।७.३।।

कथाप्रवाहे समायात प्रकृतिवर्णनं कविर्नाधिकं विस्तारयति। अलङ्कारयोजना च रसानुगता काव्यप्रवाहे पटुतामाविष्करोति—

नवं देशमुपादाय राजेव सुदुरासद ।
क्रमेण कर्कशकरः प्रतताप प्रभाकरः ।। ५.८ ।।
...मुण्डमातृक ! पाषण्ड ! वितण्डावाद ! पण्डित !
आयासि चण्ड ! कुत्रात्र ध्वनयन् ज्ञानडिण्डिमम् ।।११.२६।।
...स ददर्श ततो वेद्यां देवदारुतरोरधः ।
यमिनं यमिनं मेने तपस्तीव्रेण तेजसा ।।१.२१ ।।
प्राप्य जन्म खलु मानुषं जना नो भवन्ति हरिनामरञ्जना।
तान् हसन्ति फलपाकदम्भतो दाडिमद्रुततयः क्वचित्क्वचित् ।।१.१३।।

नानकचन्द्रोदये सामाजिकस्थितिचित्राणि नैकत्र वास्तविकस्वरूपेण प्रतिबिम्बितानि। तात्कालिकी राजनीतिरपि महाकाव्ये समन्विता तत्रैतिहासिकतामुत्पादयति। विभिन्नाडम्बराणां विखण्डने विविधधर्माणां च समन्वयने कविर्नावसरं विजहाति।

## अमरकाव्यम्

अमरकाव्यस्य रचयिता रणछोडभट्टः कठौडीकुलोत्पन्नस्तैलङ्गब्राह्मण आसीत्। अस्य पितरौ वेणी-मधुसूदनाख्यौ आस्ताम्। वंश-परंपरया मेवाडराजसभया नुवन्धितोऽसौ उदयपुरदुर्गे राज्ञो राजसिंहस्य राजकविर-भूत्। अमरकाव्यातिरिक्तं राजप्रशस्तिनामकं चतुर्विंशतिसर्गप्रमाणमपरं महाकाव्यमपि कविनामुना विरचितम्[१]। राजप्रशस्तेः प्रारम्भिकरचना-कालः वि० सं०१७१८ तदनुसारं च १६५१ ख्रिस्ताब्दोऽस्ति[२]। तस्मादस्या-मरकाव्यस्यापि रचना सप्तदशशताब्दावेव समभूदिति निश्चीयते। डा० ओझा काव्यनामानुशीलनक्रमाद् अमरसिंहस्य शासनकाले ( सं० १७५५–१७६७ ) यदस्य ग्रन्थस्य निर्माणं प्रतिपादयति तदनुचितम्।[३] वस्तुतो राजसिंहस्य ( सं० १७०९–३७ ) मृत्योरनन्तरं तत्पुत्रस्य जयसिंहस्य शासने काव्यमिदं निर्मितम्। तद्वशाच्च दिवङ्गतानां मेवाडशासकानां चरित-चित्रणपरत्वादेव अमरकाव्यमित्यस्य नाम कृत न पुनरमरसिंहशासन-परत्वात्।

अमरकाव्यमेतदद्यावधि न कुतश्चिदपि प्रकाशितम्। अस्य चत्वारो हस्तलिखितादर्शा उदयपुरस्य सरस्वतीभण्डारे लभ्यन्ते। केन्द्रीयशिक्षा-समाजकल्याणमन्त्रालयस्य सहायतया उदयपुरसाहित्यसंस्थानेन काव्यमिदं प्रकाशनार्थं सम्प्रति सम्पद्यमानं विद्यते। ग्रन्थस्यादर्शप्रतिषु वस्तुविभाजक-त्वेन सर्गाणां श्लोकसंख्यानां चोल्लेखस्याविद्यमानादपि तत्र शोधसंस्थानं श्लोकसंख्याङ्कितसर्गेष्वस्य विभाजनेन महाकाव्यत्वमस्य प्रमाणयति। महाकाव्यमिदं मेवाडेतिहासस्यादिकालतो राजसिंहस्य राज्याभिषेकं यावद् विषयवस्तु निर्वहति। ग्रन्थान्ते चाग्रिमं मेवाडशासनेतिवृत्त ज्ञातुं कविः स्वकीयमपरं महाकाव्यं राजप्रशस्तिनामकं पठितुं विनिवेदयति।

कथावस्तु

मङ्गलमनु मेवाडशासकस्य वाप्पारावलस्य पूर्ववर्तिनां मेवाडशासकानां संक्षिप्तपरिचयो दीयते। वाप्पारावलस्य पश्चात् मेवाडसिंहासने तत्पुत्रः

---

१—राजप्रशस्तिमहाकाव्यं १९७३ ई० वर्षे उदयपुरस्य शोधसंस्थानेन प्रका-शितम्। सागरिकायाः सप्तदशवर्षीयतृतीयाङ्के च "राजस्थानस्यैतिहासिक-महाकाव्यानि" इति शीर्षकान्तर्गतपरिचायितम्।

२—राजप्रशस्तिः १-१०।

३—उदयपुर राज्य का इतिहास, भाग–१, पृ० ४२०।

खुमानो व्यराजत। स युद्धे मालवराज सिन्धुलं पराजितवान्, खमनौर-नामकं ग्रामं न्यवासयत्, नैकेषां मन्दिराणा जलाशयानां च निर्माणं कारयित्वा विविधं दानादिकमकरोत्। खुमानस्य पश्चात् गोविन्दः, आलटः, राहपश्चेति मेवाडस्य राजानः क्रमेणाभूवन्। एषु प्राथमिकयोर्द्वयोर्वर्णनं संक्षिप्य राहपस्य चरितचित्रणं विस्तरेण कृतमस्ति स, नैकदेशानां विजय-श्रियं लब्धवान्। यादव-सैन्धव-दाहिम-मौरिक-चौहान-कुमाउ-हूण-तोमर-परमार-प्रभृतिभिरनेकराजभिरयं सेव्यमान आसीत्। राहपस्य मृत्योरनन्तरं जसकर्णः, नागपालः, पुण्यपालः, भुवनसिंहः, भीमसिंहः, लक्ष्मसिंहश्चैते राजानो मेवाडशासनं चक्रुः। लक्ष्मसिंहस्य पुत्रो रत्नसिंहः पद्मिनीं परिणीतवान्। तत्प्रयुक्तं च अलावद्दीनेन सहास्य युद्धमभवत् लक्ष्मसिंहे दिवङ्गते "अरसी" मेवाडस्य राजा बभूव। तत्पश्चात् हम्मीरः सिंहासनमध्यतिष्ठत्। हम्मीरः महापराक्रमी योद्धा आसीत्। स नैकयुद्धं चकार, अमीशाह पराजितवान, स्वर्णतुलानामनेकग्रामाणां च दानमकरोत्। तदनन्तरं क्षेत्रसिंहस्तत्रत्यशासकोऽभूत्। तत्पुत्रो लाखा प्रतापी राजा भूत्वा नैकस्वर्णतुला ग्रामांश्च व्यतरत्। चुण्डायाः प्रतिज्ञावशादसौ वृद्धत्वेऽपि पुनर्विवाहमकरोत्। तत्पुत्रो मोकलः भाटियाकुलं विनाश्य पाटनस्य माण्डवस्य च राजानं युद्धेऽजयत्। मुहम्मदः फिरोजशाहश्च रणक्षेत्रे तेन पराजितौ बभूवतुः। नित्य दानकर्मणि रतः स द्वारिकातीर्थस्य यात्रायां शत्रुद्वयेन हतः।

तत्पश्चात् कुम्भा मेवाडस्य राजा बभूव। स पराक्रमी, विद्वान्, संगीतज्ञश्चासीत् स एव चित्तौडदुर्गे कीर्तिस्तम्भं निर्मापितवान्। तेनैव कुम्भलगढदुर्गस्य निर्माणमपि कारितम्। कुम्भाराजं विनिहत्य तत्पुत्र उदा मेवाडस्य शासनमधिचकार। पितृहन्तारमेनं क्षत्रिया निनिन्दुः कुम्भाराजस्यैवापरस्तनयो रायमल्ल उदाख्यं भ्रातरं पराजित्य राज्यं स्वायत्तीचकार। रायमल्लः प्रतापवान् योद्धा दानी चासीत्। तस्य पुत्रः सङ्ग्रामसिंहः स्वशासनेन मेवाडस्य राज्यसीमानं बहु विस्तारितवान्। दिल्ली मालवा-रणथम्भोर-सांभरी-अजमेर-नागौर-गुजरात-जोधपुर-डूंगरपुर, प्रभृतिराज्यानि स स्वराज्ये योजितवान्। बाबरेण सहापि तस्य भीषणं युद्धमभूत। संग्रामसिंहस्य पुत्रो रत्नसिंहः "रतनसी" इत्याख्येन हाडानरेशेन युद्धे विनिपातितः। रत्नसिंहस्य पुत्रो विक्रमादित्यः वनवीरेण मारितः। वनवीरः पृथ्वीराजस्य अपरिणीतायाः प्रियायाः पुत्र आसीत्। असंतुष्टाः क्षत्रिययोद्धारः वनवीरं परित्यज्य दिल्लीश्वरं सेवयामासुः वनवीरः कदाचित् सुल्तानमपि बन्दीकर्तुं प्रायतत। तस्मात्कुपितः सुल्तानः संग्रामसिंहानुजस्य पुत्रेण उदय-

सिंहेन सहामिलत् । माहौलीग्रामे वनवीरं विजित्य उदयसिंहः मेवाडशासको बभूव । असौ महापराक्रमी महादानी चासीत् । उदयपुरनगरी अनेनैव स्थापिता । उदयसागरं नाम जलाशयमप्ययं निर्मापितवान् । अकबरो यदा मेवाडमाक्रम्य तस्थौ, तदायं तत्रत्यरक्षाभारं जयमलस्य स्कन्धे निधाय स्वयमुदयपुरे वसतिस्म । युद्धे राणा पराजितः । तस्मादुदासीनः स १६२८ विक्रमाब्दे दिवङ्गतः ।

उदयसिंहस्योत्तराधिकारी प्रतापो बभूव । स स्वदेशभक्तः, स्वाभिमानी, विक्रान्तयोद्धा चासीत् । मानसिंहेन सहायं भोजनं न कृतवानिति रुष्टः स अकबरस्य सेनापतित्वेन हल्दीघाटीस्थले प्रतापेन सह भीषणं युद्धमकरोत् । प्रतापो रणक्षेत्राद्विनिर्गतः । पश्चादनेकवारममुना मुगलसेनया सह युद्धमकारि । मरणपर्यन्तमप्यसौ अकबरस्याधीनतां नैव स्वीचकार । १६५३ विक्रमवत्सरे प्रतापस्य मृत्योरनन्तरं तदीयपुत्रोऽमरसिंहः शासनमकरोत् । जहांगीरस्य पुत्रः खुर्रमः यदा तद्राज्ये युद्धं कर्तुमाजगाम तदासौ तेन सह सन्धिमकृत । १६७७ विक्रमाब्दे स मृतः । तत्पुत्रस्य कर्णसिंहस्य युद्धादिचर्चा नास्ति रचनात्मककार्यकलापस्य दानादिकस्य च वर्णनमस्ति । कर्णसिंहस्य पुत्रो जगत्सिंहः १६८५ वि० वर्षे राजा बभूव । स नैकानि निर्माणकार्याणि कारितवान् । प्रसिद्धं जगदीशमन्दिरं तेनैव निर्मापितम् । १७०९ विक्रमाब्दे स मृत्युमुपगतः । तदा तत्पुत्रो राजसिंहो राज्येऽभिषिक्तः ।

काव्यकला

आकारे लघुतां वहदपि काव्यत्वदृष्ट्या अमरकाव्यं स्वकवेरपरां कृतिं राजप्रशस्तिमतिशेते । अस्य वस्तुविवेचनविधिर्व्यवस्थितः प्रौढतामुपगतश्चास्ति । तदीयं वर्णनशैली आद्यन्तं काव्यत्वापेक्षया ऐतिहासिकतामेवाधिकं भजति । जन्ममृत्योः राज्याभिषेकादीनां च प्रामाणिकतिथीनामुल्लेखस्तत्र गरिमाणं सम्पादयति । अनुष्टुबुपजातिछन्दसी सर्वाधिकसंख्यामुपयोज्य मालिनी–शार्दूलविक्रीडित–द्रुतविलम्बितादिछन्दसामप्यत्र प्रयोगः कृतः । अलङ्कारविनियोजने न क्वचिदपि स्वमनो दीयते । तथाप्युपमारूपकोत्प्रेक्षादयोऽलङ्कारा विलसन्ति । वस्तुतो वंशावलीमुखेन लिखितमैतिहासिकं काव्यमिदम् । कानिचित्पद्योदाहरणानि यथा—

ततो दिल्लीश्वरः सन्धिं विधातुं तत्परोऽभवत् ।
पीलियाखालपर्यन्तं सीमास्तु भवतः भुवः ॥ १२.४४ ।
इत्युक्त्वा प्रेषयामास दूतं दूतेन तद्वचः ।
राणेन्द्रस्याग्रतः प्रोक्तं मानितं तन्न भूभुजा ॥ १२.४५ ।

ततस्तु शीकरीमध्ये संग्रामार्थं स बब्बरः।
क्षेत्रं सम्मार्जयामास कुरुक्षेत्रमिवापरम् ॥ १२.४६ ।
ततः सेनेऽत्र मिलिते राणेशयवनेशयोः।
अश्ववारैर्गजैः पूर्णे पत्तिभिर्बहुशस्त्रिभिः ॥ १२. ४७ ।
नालिकाः कालिकारूपा विकटाः शकटस्थिताः।
मुमुचुर्गोलकानीह ज्वलितास्तैश्चमूभटाः ॥ १२. ४८ ।

काव्यारम्भे मङ्गलानुशासनविधौ कृष्णाष्टकम्, शिवाष्टकम्, भवान्यष्टकम्, गणेशाष्टकम्, सूर्याष्टकं चेत्यष्टकपञ्चकं कविर्विनियोजयति। अन्यत्र चालौकिकीं वर्णनामुपस्थाप्य स दैवी शक्ति मेवाडशासकेषु द्रढयति। तद्यथा मोकलस्य मुखाद् गङ्गाजलं निर्झरति। केनचिद् याचकेन काचिद्राजमहिलायाचनप्रसङ्गे "यया सह मामिदानीं विहरन्तं न पश्यतु ता भवान्नयतु" इत्युक्तवति- कुम्भाराजे याचको यामपि राज्ञी प्रति तदानी गच्छ तयैव सह राजा विहरन् दृश्यते। प्रतापस्य कुन्तमूर्धायां स्थिता शकुनीदेवी शत्रु-न्ति-।

अमरकाव्ये अरबी-फारसी-लोकभाषादि-शब्दानां प्रयोगो दृश्यते। तद्यथा पठान, सुलतान, सहिजादा, मोरचा, रोज, नालीवालो, बान्दीत्यादयः।

शोधच्छात्रः
सागर विश्वविद्यालये

# दुष्यन्तो धीरोदात्तो धीरललितो वा

रामजी उपाध्यायः

दुष्यन्तोऽभिज्ञानशाकुन्तले धीरोदात्त इति विदुषां सामान्य-प्रतिपत्तिः। 'इदं मतं न सर्वथा साधु' इति विमर्शोऽत्र विशदीक्रियते। धीरोदात्तादि विषये ध्वन्यालोकलोचनेऽभिनवगुप्तो विशदयति—

धर्मयुद्धवीरप्रधानो धीरोदात्तः, वीररौद्रप्रधानो धीरोद्धतः। वीर-शृङ्गारप्रधानो धीरललितः, दानधर्मवीरशान्तप्रधानो धीरप्रशान्त इति चत्वारो नायकाः क्रमेण सात्त्वत्यारभटीकैशिकी—भारतीलक्षणवृत्तिप्रधाना इति।[1]

अनया दृशा धीरोदात्तनायको धर्मयुद्धवीर-प्रधानो भवेत् सात्वती-वृत्तिप्रधानश्च। अत्र प्रश्नः समुदेति—किं नाम दुष्यन्तो धर्मयुद्धवीरप्रधान उताहो शृङ्गारप्रधानः। न खलु नाटकेऽस्मिन् नायकस्य वीर्यं शौर्यं वा सातत्यं भजते, अपितु शृङ्गार एव तस्य क्वचित् पूर्वरागरूपेणान्यत्र सम्भोग-विप्रलम्भाभ्यां विलसति। तेषु तेषु शकुन्तला-मिलन-वियोग-प्रसङ्गेषु नायकस्य शृंगारत्वं लालित्यमेव प्रकटयति। तत्र धीरललितो दुष्यन्तोऽन्यत्र नाटकेऽस्मिन् धीरोदात्तो भवितुं नार्हति। अयं विषयो धनिकेन दशरूपका-वलोके साधु विमृष्टः

धीरललितादिशब्दाश्च यथोक्तगुणसमारोपितावस्थाभिधायिनः। वत्स—वृषभ-महोक्षादिवन्न जात्या कश्चिदवस्थितरूपो ललितादिरस्ति।.........
तथा च भवभूतिनैक एव जामदग्न्यः

ब्राह्मणातिक्रमत्यागो भवतामेव भूतये।
जामदग्न्यश्च वो मित्रमन्यथा दुर्मनायते॥

इत्यादिना रावणं प्रति धीरोदात्तत्वेन, कैलासोद्धारसार—इत्यादिभिश्च रामादीन् प्रति प्रथमं धीरोद्धतत्वेन, पुनः 'पुण्या ब्राह्मणजातिः' इत्यादिभिश्च धीरशान्तत्वेनोपवर्णितः, न चावस्थान्तराभिधानमनुचितम्। अङ्गभूतनायकानां नायकान्तरापेक्षया महासत्त्वादेरव्यवस्थितत्वात्।[2] अङ्गिनस्तु रामादेरेक-प्रबन्धोपात्तान् प्रत्येकरूपत्वारम्भोपात्तावस्थातोऽवस्थान्तरोपादानमन्याय्यम्।

---

१—ध्वन्यालोक लोचनम् ३.६ अधिकृत्य

२—रूपकेषु प्रधाननायकोऽङ्गीत्यभिधीयते। प्रधानेतरनायकाः—उपनायकः, अनु-नायकः, प्रतिनायकः, सखी, अमात्यः—इत्येते अङ्गनायका इति संज्ञितम्।

अतएव दुष्यन्त आद्यन्तं धीरललित एव कालिदासेन वर्णित इति शास्त्रीया पद्धतिः ।[1]

अन्यच्च—धीरोदात्तनायकः सात्वतीवृत्तिप्रधानः स्यात् । इयं सात्वती वृत्तिः शृङ्गारं तावन्निषेधति । तथोक्तं भरतेन—

या सात्वतेनेह गुणेन युक्ता न्यायेन वृत्तेन समन्विता च ।
हर्षोत्कटा संहृतशोकभावा सा सात्वती नाम भवेत्तु वृत्तिः ।

वागङ्गाभिनयवती सत्त्वोत्थान—वचन—प्रकरणेषु
सत्त्वाधिकारयुक्ता विज्ञेया सात्वती वृत्तिः ॥
वीराद्भुतरौद्ररसा निरस्तशृङ्गारकरुणनिर्वेदा
उद्धतपुरुषप्राया परस्पराधर्षण—कृता च ॥

नाट्यशास्त्रे २०. ४१—४३

अनेन स्पष्टं प्रतिभाति यदभिज्ञानशाकुन्तलेऽभावो वर्तते सात्वतीवृत्तेः । अतएव नास्ति तत्र धीरोदात्तावस्थाया अवकाशः । 'निरस्त-शृङ्गार-करुण-निर्वेदा' इत्यनेन शृङ्गारस्य सात्वतीवृत्त्या सह सामञ्जस्यमेव न कल्प्य । सात्वतीं विना धीरोदात्तत्वं न विलसति । अतएव ब्रवीमि नास्ति शाकुन्तले दुष्यन्तस्य धीरोदात्तख्यातिः समीचीना ।

तर्हि परिणमति यन्नाटकस्य नायको धीरललितोऽपि भवितुमर्हति यथा स्वप्नवासवदत्ते दृश्यत एव । भरतानुसारेण शृङ्गार एव विशेषतः नाटकोचितः । तथोक्तम्—

नाटकं सप्रकरणं भाणोवीथ्यङ्क एव च ।
ज्ञेयानि सुकुमाराणि मानुषैराश्रितानि तु ।
सुकुमार-प्रयोगोऽयं राज्ञामामोदकारकः ।
शृङ्गार—रसमासाद्य स्त्रीणां तत्तु प्रयोजयेत् ॥ ना. शा.२१.२५-२७

अन्यच्च—यत्र यत्र वीररसोऽङ्गी, तत्र तत्रैवोदात्तो नायको भवेत् ।

---

१—अभिनवगुप्तानुसारेण 'धीरललितत्वं राज्ञ एव वर्णनीयं नान्यस्य, सेनापत्यमात्ययोर्धीरोदात्तत्वमेव, देवानां धीरोद्धतत्वमेव' । अभिनवभारत्यां द्वितीयखण्डे पृष्ठ ४१४ । अनेनापि दुष्यन्तस्य धीरललितत्वमेव सिध्यति ।

अभिनवगुप्तोऽभिज्ञानशाकुन्तलं कामफलमिति संज्ञापयति । अभिनवभारती तृतीयखण्डे पृष्ठं ४२ । अनेनापि नाटकस्य धीरललितत्वमेव व्यज्यते ।

# आचार्यश्रीमन्महावीरप्रसाद-द्विवेदिनः संस्कृतकवित्वम्

डॉ० राधावल्लभः त्रिपाठी

हिन्दीभाषायां साहित्य-समीक्षायाः प्रवर्तकः साहित्यमर्मज्ञेषु मूर्धन्य आचार्यो महावीरप्रसादद्विवेदी संस्कृतपाण्डित्येन कवित्वेनापि च स्वप्रातिभं ज्योतिरदीपयत्। संस्कृतसाहित्यविषये भाषायां "कुमारसम्भवसारः" "वेणीसंहारसार" "विहार-वाटिका" ( गीतगोविन्दस्यानुवादः ), "स्नेह-माला" ( भर्तृहरिशतकानुवादः ) "कालिदासीया निरङ्कुशता" चेत्याद-योऽस्य प्रबन्धाः प्रथिताः। महाभारतमप्यनेन १९०८ ई० वर्षे भाषान्तरी-कृत्य प्रस्तुतम्। तथैव "नैषधचरितचर्चा" "विक्रमाङ्कदेवचरितचर्चा" चापि ग्रन्था अस्य अध्ययनविवेक प्रमाणयन्ति।

संस्कृतपरम्परायां गहनमवगाहमानोऽयं महाभागः हिन्द्या सह संस्कृतम-प्यभिव्यक्तिसौकर्याय शिश्रिये। दिवङ्गतायाः स्वपत्न्या स्मृतौ अनेन लक्ष्मी-सरस्वत्योर्मन्दिरमेकं निर्मापितम्। तत्र भार्याया मूर्तिं प्रतिष्ठाप्य संस्कृतो-पनिबद्धः स्वोपज्ञो लेखोऽयं निधापितः—

नवषण्णवभूसंख्ये विक्रमादित्यवत्सरे।
शुक्लकृष्णत्रयोदश्यामधिकाषाढमासि च ॥
मोहमुग्धा गतज्ञाना भ्रमरोगविपीडिता।
जह्नुजाया जले प्राप पञ्चत्वं या पतिव्रता ॥
निर्मापितमिदं तस्याः स्मृतौ स्मृतिमन्दिरम्।
व्यथितेन महावीरप्रसादेन द्विवेदिना ॥
पत्युर्गृहे यतः सासीत् साक्षाच्छ्रीरिव रूपिणी।
पत्याप्येकाक्षता वाणी द्वितीया सैव सुव्रता ॥

अतोऽग्रे लक्ष्मीसरस्वत्योः संस्तवं विधाय कविनालेखि—

एषा तत्प्रतिमा तस्मान्मध्यभागे तयोर्द्वयोः।
लक्ष्मीसरस्वतीदेव्योः स्थापिता परमादरात् ॥

स्वसुहृज्जनानां विषये प्रायशोऽयं मनीषी स्वगिरा स्वमनोभावान भिव्यानक्। श्रीपद्मसिंहशर्ममहाभागानां स्मृतावनेन लिखितम्—

संस्मृत्य तेऽद्य सरसं च कथाकलापं
सत्यं वदामि हृदयं शतधा प्रयाति।
आर्तस्य निर्गतधृतेर्मम शोकशान्त्यै
त्वत्सन्निधौ गमनमेव विनिश्चिनोमि।

पत्र-सन्देशादिप्रदानेऽप्ययं कदाचित् संस्कृतं प्रयुयोज। काश्याः 'श्रीराम' पत्रस्य सम्पादकं लेखसम्प्रेषणार्थमनुरुन्धन्तमयं स्वपत्रे शिखरिण्यां श्लिष्टाक्षरैः समदिशत्—

अनेकाधिव्याधिव्यथितहृदयं दीनवदनं
विहीनं पुत्रादिस्वजनसमुदायेन जगति।
अतित्रस्तं ग्रस्तं हतविधिविलासैः सपदि मां
शरण्य-श्रीराम त्रिभुवनपते पाहि रमया॥

वार्धक्ये विगतविभवः सर्वथा संन्यस्तः परिजनवियुक्तोऽप्ययं संस्कृत-व्यवहारं न जहौ। पत्रोत्तरप्राप्त्यैरसकृदनुबध्नन्तं कमपि सज्जनमयं समबोधयत्—

क्षीणशक्तिर्जराजीर्णो मन्ददृष्टिरहं बुध।
पत्रदाने प्रदाने च न समर्थोऽस्मि क्षम्यताम्।

अन्यदा आशीराकाङ्क्षमाणं श्री बनारसीदास-चतुर्वेदिनमयं संस्कृतै-राशीर्भिरवर्धयत्—

आत्मानुकूलं च विधाय कार्यं
सदैव सत्येन पथा प्रयाहि।
कुर्वन् स्वशक्त्याथ परोपकारं
बनारसीदास सुखी भव त्वम्॥[1]

श्रीद्विवेदिना कृतानि संस्कृतकाव्यानि "सुमन" इति सङ्ग्रहे प्रकाश्यं गतानि। तेषु—

(१) कथमहं नास्तिकः,
(२) कान्यकुब्जलीलामृतम्
(३) समाचारपत्र सम्पादकस्तवः
(४) सूर्यग्रहणं च

इति प्राधान्यमर्हन्ति।

---

१—श्रीमहावीरप्रसादद्विवेदिविरचितानि पद्यानीमानि श्रीबनारसीदासचतुर्वेदि-कृत "संस्मरण" इति पुस्तकादुद्धृतानि।

कथमहं नास्तिकः

अस्मिन् लघुकाव्ये भावसौष्ठवेन सह कविहृदयगतमौदार्यं सविशेषं लसति। कविना स्वहृदयगता आस्था विश्वासाश्च सार्जवं प्रकटीकृत्य वास्तविक आस्तिकभावोऽत्र चित्रीकृतः। तद्यथा—

नित्यं जपामि यदहं शुचि सत्यसूत्रं
लोके तदस्तु मम मन्त्रजपः पवित्रम्।
या सज्जनेषु भगवन् मम भक्तिरेषा
सैव प्रभो भवतु देवगणस्य पूजा॥
सर्वेषु जीवनिचयेषु दयाव्रतं मे
श्रेयो ददातु निखिलं नियतव्रतानाम्।
अच्छाच्छचन्दनरसादपि शीतलो मा-
मानन्दयत्वनिशमीश परोपकारः॥
अन्यद् ब्रवीमि किमहं जगदेकबन्धो
बन्धुर्न कोऽपि मम देव सुतोऽपि नास्ति।
तन्नास्तिकस्य भगवन्नथवास्तिकस्य
हस्ते तवैव करुणाम्बुनिधेर्गतिर्मे॥

कान्यकुब्जलीलामृतम्

अस्मिन् काव्ये ३४ पद्यानि लसन्ति। अत्र आचार्यद्विवेदिनः व्यङ्ग्य-गर्भा दृष्टिः सर्वंकष परिस्फुटति।

कान्यकुब्जानां कुब्जता कविना सावहेलं विषयीकृता। तेषां जीवने परिव्याप्तान् दोषान् समुद्घाट्यासौ परिमार्जनाय साधु समुपदिशति। कान्यकुब्जेषु प्रचलिता यौतुकाद्याः कुरीतयः दुष्प्रवृत्तयः पाखण्डाश्च तेन भूतार्थदर्शिचक्षुषा निभाल्य प्रखरस्वरेणोद्घोषिताः। तेनास्य समसाम-यिकदशानामवगतिः समाजोत्थानचिन्ता च ज्ञायेते। कानिचित् पद्यान्यु-दाह्रियन्ते—

सदैव शुक्लारुणपीतवर्णपाटीरपङ्कावृतसर्वभाल।
आभूतलालम्बिदुकूलधारिन् हे कान्यकुब्जद्विज ते नमोऽस्तु॥
भवन्ति ते धन्यतमा द्विजा ये
त्वदीयसम्बन्धमवाप्नुवन्ति।
व्रजन्ति ते ब्रह्मपदं तथान्ते
त एव वंशं निजमुन्नयन्ति॥३

अहो दयालुत्वमतः परं किं
यथेहितं यद् द्रविणं गृहीत्वा ।
निन्द्यानपि त्वं विमलं करोषि
तदीयकन्यापरपीडनेन ॥४

शास्त्रीयवार्तासु भवत्यहो ते
मुखे रसज्ञा किल कीलितेव ।
स्थिते तु वैवाहिकभाषणे त्व-
माविष्करोष्यद्भुतवाक्पटुत्वम् ॥६

मन्ये तदेव त्वयि वासवोऽपि
न्यासीकरोत्यक्षिचयं स्वकीयम् ।
न चेन्निमेषेण कथं परेषां
दोषानसंख्यांश्च समीक्षसे त्वम् ॥८

पुनः पुनः पुत्रवधूपितुश्च
धनानि हृत्वापि धरासुरेन्द्र ।
निरन्तरं तस्य कदर्थनायां
न शोभते ते रसनोपयोगः ॥१०

परन्तु तत्तन्नियमावलीनां
निवेश्य पत्रं गृहपेटिकायाम्
उपस्थिते विप्र विवाहकाले
सर्वं क्षणाद् विस्मरसीति चित्रम् ॥२१

अध्यक्षतां किं, बहुना त्वदीयां
गृह्णन्ति ये तेऽपि तदा पलाय्य ।
सुलम्बि लाङ्गूलमितस्ततश्च
गृह्णन्ति भीता इव भो द्विजेन्द्र ॥ २२

त्यजालसं शीलय विप्र विद्यां निधेहि दुष्टं व्यवहारनाशम् ।
उदारतां बन्धुषु दर्शय त्वं कुरुष्व कार्यं सुजनायतं च ॥२३॥

समाचारपत्रसम्पादकास्तवः

वार्तापत्र सम्पादकानां निर्घृणतां दौरात्म्यं छद्म लिप्सां च कविरत्र विशदं विवृणुते । तदीया नर्ममर्मावगाहिनी सोल्लुण्ठं सञ्चरन्ती दृष्टिः रचनाया रम्यत्वं भाषाया मसृणत्वं साधयति । तथाहि—

पत्रे स्वकीये जगदेकनेत्रे शिशुं त्रिपादं त्रिशिरस्करं च ।
सृजत्यजस्रं कुतुकेन तेन सम्पादक त्वं चतुराननोऽसि ॥
देशोपकारव्रतधारकाय नानाकलाकौशल-कोविदाय ।
निःशेषशास्त्रेषु च दीक्षिताय सम्पादकाय प्रणतिर्ममास्तु ॥
आकृष्टमुच्चैर्लघुपत्रमूल्यं नवोपहारादिविधेर्विधाने ।
समस्तमायाविशिरोमणित्वात् त्वमेव सम्पादक माधवोऽसि ॥
स्वदोषराशिं च तृणं विधाय त्रुटिं समालम्व्य लघुं परेषाम् ।
अलेख्यलेखैः कृतकालनाशात् त्वमीश्वरो भीम भयङ्करोऽसि ॥
त्वं लेखनीं पाणितले निधाय विराजसे वीर पदासने स्वे ।
सुरेन्द्रसिंहासनमप्यचिन्त्यं तदातिगर्वेण तिरष्करोषि ॥ ६ ॥
नम्रोऽसि मूल्यग्रहणे च मौनी पत्रोत्तरे दोषनिदर्शने स्वे ।
रुष्टः कुतो नीतिविदस्त्वयैवं विलक्षणा नीतिरहो गृहीता ॥

## सूर्यग्रहणम्

अस्मिन् काव्ये आचार्यद्विवेदिना सूर्यग्रहणावसरे भारतेषु मनुष्याणां नाना चेष्टा विशद्य मूर्तीकृताः । अत्रापि अवसरविशेषं वर्णयता कविना समाजे परिव्याप्ताः पाखण्डमय्यः प्रवृत्तयः शब्दप्रहारैः साधु ध्वंसिताः । विशेषतो ज्योतिर्विदः पण्डिताः पुरोहिता वा ग्रहनक्षत्रादिभयं प्रदर्श्य कथं मुग्धान् जनान् लुण्ठन्ति इति सम्यङ् निर्दिष्टम् । तथोक्तम्

पूर्णोपरागमथपङ्कजबान्धवस्य
ज्ञात्वा तदा भुवि चिरेण भविष्यमाणम् ।
लोकैरकारि कृत भारतवर्षवासै—
र्यद् यद्, वदामि तदहं, नियतैर्वचोभिः ॥
युद्धं भविष्यति नृपेषु परस्परेषु
लोकं गमिष्यति यमस्य रुजा प्रजा च ।
धान्यं धनं बहु हरिष्यति चौरवर्ग—
मित्यादि कैश्चिदिह सूरिभिरन्वभावि ॥
तत्तन्निशम्य सहसा मनुजाः सशङ्कं
पञ्चाङ्गवाचकजनानभिवन्द्य केचित् ।
दैवज्ञराज वद राशिफलं मदीय—
मेवं विरक्तमनसाञ्जलिवन्धमूचुः ॥

अन्नांशुकद्रविणदानविधानमाशु
दोषक्षयाय परिपृच्छ्य बुधांश्च केचित् ।
उद्योगिनः समभवन् खलु तत्तदाप्तौ
नास्त्यालये तदपि देयमवश्यमेव ॥

दैवज्ञशरणं शिरसा नतेन
केचित् फलानि भयदानि निशम्य जग्मुः ।
केनापि पण्डितपते परिपाहि नस्त्वं
यत्नेन वाक्यमिति दीनतमं न्यवेदि ॥९-१०

यस्मिन् क्षणे चपलातिशयेन चन्द्र
उत्प्लुत्य मेघमघःस्थलतश्चकार ।
स्पर्शप्रमाणातिदिनेशबिम्ब--
स्तस्मिन् बभूव जनताक्षिशतैकलक्ष्यः ॥

दृश्यं विलोक्य तदिदं किल कोऽपि नादः
संश्रूयते स्म भुवि लोककृतः समन्तात् ।
स्नाने जपे हरिहरस्मरणे च दाने
सर्वेऽभवन् रुचिविचित्रतया निमग्नाः ॥ १६,१७

धर्मं प्रभो कुरु कुरु ग्रहणं प्रसक्तं
स्वं देहि देहि वसनं च धनं च धान्यम् ।
इत्यादि दीनवचनानि च याचकानां
केषां न कर्णकुहरे पतितानि तानि ॥१९

छायां करोति वियति स्म यदा यदेन्दुः
श्यामप्रभां वितनुते स्म तदा तदार्कः ।
आपत्सु दैवविनियोगकृतागमासु
घोरोऽपि याति वदने किल कालिमानम् ॥२०

सन्ध्या जगाम सहसा किमुपेत्यकाण्डे
वासेच्छुकं खगकुलं विरुतिं ततान ।
गावस्तु गेहगमनोत्सुकतां दधानाः
पुच्छं प्रसार्य परितश्चलिताः सशब्दम् ॥२४

खग्रासमाप खलु यः स दिवाकरोऽयं
स्वच्छे नभस्यतितरां महसा चकासे ।
सम्पद्विपद्युगमिदं हि नितान्तलोलं
कुत्रापि नैव भजते स्थिरतां चिराय ॥३०

# "उत्तररामचरितस्य प्रस्तावना–वैशिष्टयम्"

ओमप्रकाशः राजपाली

महाकविर्भवभूतिः 'उत्तररामचरितनाटकस्य' प्रस्तावनायां सर्वप्रथमं नान्दीपाठे ब्रह्मणोंऽशभूतां वाग्देवी नमस्करोति।[1] तदनु सूत्रधारनुखेन कालप्रियानाथस्य यात्रायां स्वविरचितनाटकस्य प्रयोगं संसूचयन् स्वकीयाभिजात्यं पाण्डित्यं च परिचाययति।[2] एतदनन्तर सूत्रधारोऽयोध्यावासिनो भूमिकां गृहीत्वा[3] रामराज्याभिषेकावसरेऽपि चतुष्पथं मानवसंचारशून्यं विलोक्याश्चर्यं व्यनक्ति। ततो नटः प्रविष्टो भूत्वा संसूचयति—यदभिषेकमहोत्सवः समाप्तः, अतिथयश्च गतवन्तः। तत्रेदमपि सूचयति यत् रामस्य मातरो गुरुजनैः सह दशरथस्य जामातृणा ऋष्यश्रृङ्गेणायोजित द्वादशवर्षीययज्ञे कठोरगर्भा सीतां परित्यज्य गतवत्य। ततोऽग्रे नटः कविसमालोचकाना विषये धारणांवर्णयन् सीताविषयक लोकापवादं सकेतयति।[4] तत्र च सूत्रधारः कथयति—'यदि पुनरियं किंवदन्ती महाराजं प्रति स्यन्देत ततः कष्टं स्यात्।' पुनश्च नटः सूत्रधारं कथयति—'सर्वथा ऋषयो देवाश्च श्रेयो विधास्यन्ति।' ततः नटेन ज्ञायते यत् महराजजनकस्य निर्गमनेन सीतातिदुःखितास्ति। सीता परिसान्त्वनाय रामो धर्मासन विमुच्य गतवान्।

---

१. इदं कविभ्यः पूर्वेभ्यो नमोवाकं प्रशास्महे।
विन्देम देवता वाचममृतामात्मनः कलाम्॥ उ० च०, १.१

२. सूत्रधारः—अलमतिविस्तरेण। अद्य खलु भगवतः कालप्रियानाथस्य यात्रायामार्यमिश्रान्विज्ञापयामि—एवमत्रभवन्तो विदाकुर्वन्तु। अस्ति खलु तत्रभवान् काश्यपः श्रीकण्ठपदलाञ्छनः पदवाक्यप्रमाणज्ञो भवभूतिर्नाम जतुकर्णीपुत्रः।
उ० च० प्रस्तावनायाम्।

३. अत्रेदं सूच्यते यदभिनेतॄणां देशकालानुरूपतावधेया।

४. सर्वथा व्यवहर्तव्यं कुतो ह्यवचनीयता।
यथा स्त्रीणा तथा वाचा साधुत्वे दुर्जनो जनः॥
उ० च०, १.५

नाटकीयमहत्त्वदृष्टया प्रस्तावनायां सूत्रधारनटयोः संवादेन सुस्पष्टं ज्ञायते यत् रामस्याभिषेकः सद्य एव संजातः। अपि च ज्ञायते यत् रामचन्द्रेण राजर्षिमहर्षिविभीषणादयः स्व-स्व निवासस्थानं सम्प्रेषिताः। राममातरश्च ऋष्यशृङ्गस्य द्वादशवर्षीये यज्ञे उपस्थानाय तदाश्रमं गतवत्यः, गर्भदुर्भरत्वात् सीता यज्ञे न गता, तस्या विषये 'रक्षोगृहस्थितिमूलकः' लोकापवादोऽपि प्रसारितः। अमुना वृत्तान्तेन रामोऽनभिज्ञोऽस्ति परमियमाशङ्का वर्तते यदि चेत् वृत्तमिद रामेण ज्ञायते तन्महत्कष्ट भविष्यति।[1] अनयाशङ्कया प्रेक्षकाणां कृत ऽमङ्गलप्रतीतिर्न स्यात् अस्मात् कारणात्—'सर्वथा ऋषयो देवाश्च श्रेयो विधास्यन्ति' इत्युक्त्वा नाटकं सुशान्तं भविष्यतीति सूचितम्। प्रस्तावनाया अन्तिमः श्लोकोऽतिमहत्वपूर्णोऽस्ति।[2] श्लोकोऽयं नाटकस्य प्रस्तावनाया भावसौष्ठवं वर्धयति। श्लोकेऽस्मिन् नाटकीयवस्तुप्रकर्षो वीजरूपेण निक्षिप्तः। श्लोकेऽस्मिन् मिलनवियोगयोः उत्सवशोकयोः विषण्णतापरिसान्त्वनादयश्चभावाः सहैव प्रस्फुटिताः। अत्र सीतानिर्वासनात् प्राग् रामस्य दशा व्यञ्जिता।

उत्तरचरितस्य प्रस्तावना संस्कृतरूपकेषु दुर्लभान् भवभूतिकृतनाटकेष्वेवोपलभ्यमानान् कांश्चिदनन्यसामान्यविशेषानाविष्करोति। तद्यथा—

( १ ) कवेः वंशपरिचयः स्वभावानुकीर्तनं च।

( २ ) कथाप्रसङ्गच्छलात् कविना स्वकीयस्य वैयक्तिकभवस्याभिव्यक्ति स्वनिन्दकान् प्रति च कटाक्षपातस्तद्यथा—

सर्वथा व्यवहर्तव्यं कुतो ह्यवचनीयता।
यथा स्त्रीणां तथा वाचां साधुत्वे दुर्जनो जनः॥

अत्र वाचामाचार्यतां कुर्वाणाः समकालिकाः पण्डितम्मन्या परोक्षेण निपुण शिष्टं चाधिक्षिप्ताः।

( ३ ) प्रस्तावनान्तर्गतमेव नाटकप्रवर्तनम्। भवभूतेः रूपकद्वयं विहाय प्रायो न दृश्यते संस्कृतसाहित्ये तादृशं रूपकं यत्र प्रस्तावनान्तर्गतमेव नाटक

---

१— अत्रेदं प्रेक्षकान् समुत्सुकं कर्तुं प्रयासः द्रष्टव्योऽस्ति।

२— स्नेहात्सभाजयितुमेत्य दिनान्यमूनि
नीत्वोत्सवेन जनकोऽद्य गतो विदेहान्।
देव्यास्ततो विमनसः परिसान्त्वनाय
धर्मासनाद्विशति वासगृहं नरेन्द्रः॥ उ० च० १.७

परापतति। यथा मालतीमाधवे तथोत्तररामचरितेऽपिप्रस्तावना मूल-रूपक क्रोडीकरोति। तद्यथा सूत्रधारो ब्रूते—

'एष कार्यवशादायोध्यकस्तदानीन्तनश्च संवृत्तः।'

तस्य एतत्कथनादेव प्रस्तावनाया देशकालादिक स्थगितं भवति, अतीतगते च प्रसङ्गे वस्तु विश्राम्यति। अयं विशेषो मालतीमाधवेऽपि विलसति। तत्र सूत्रधार आह—'एष कामन्दको संवृत्तः।'

पारिपार्श्विकश्चाह—'अहमप्यवलोकितः।'

वस्तुतः प्रस्तावनाया शास्त्रीयं रूढिगतं च स्वरूपं विपरिवर्त्य क्रान्त-दर्शिना भवभूतिना तदीयं मूलप्रयोजनं विशद्य साधितम्। एतदेव प्रस्ताव-नायाः प्रयोजनं यत् प्रेक्षकस्य तद्देशतत्कालबोधं स्थगितं विधाय नाट्य-संसारे सा तदीया मतिं स्थापयति। सूत्रधारस्य वचोभङ्ग्या नाहं सम्प्रति स्थूलभौतिकजगतो जीवः, अपितु कविनिर्मितसंसारेण सम्बद्ध इदानी जात इत्यभिप्रायोऽवसेयः।

प्रस्तावनामध्य एव नाटकस्य समारम्भात् कविकृतैवेयं प्रस्तावना इत्यपि सुस्पष्टम्।

संस्कृतविभागे शोधच्छात्रः
विश्वविद्यालयः सागरम्।



# राजकर्माभिचारप्रकरणम्

आचार्यः डा॰ श्री किशोरमिश्रः

कौशिकेन महर्षिणा स्वीये गृह्यसूत्रे द्वितीयेऽध्याये राजकर्माणि, षष्ठेऽध्याये चाभिचारकर्माण्युपदिष्टानि सन्ति। राजकर्मसु परसेनात्रासनादीनि क्रूराणि कर्माणि सङ्गृहीतानि वर्तन्ते। तत्प्रसंगेनैवास्माभि भिन्नस्थलपठितान्याभिचारिकाणि कर्माणि शत्रुवित्रासनानि विनाशकारीणि च समुपनिबद्धानि।

राजकर्माभिचारकर्मसु पंचगृहीतभाज्यं भवतीति विशेषः प्रतिपदमुक्तः।[1] एतेनापि समानधर्मत्वादुभयोरेकप्रकरणे सन्निवेशो युक्तरूपः।

## राजकर्माणि

राज्ञः सम्बद्धानि कर्माणि राजकर्माणीत्यभिधीयन्ते। अतएव राजकर्मसु राजाभिषेकः, पुरोहितकृत्यम्, परसेनात्रासनादीनि कर्माणि सङ्गतार्थानि भवन्ति। राजकर्माणि द्विविधानि—स्वरक्षं राजत्वापादकानि परभयनिवारणानि च। तत्र राजत्वापादकानि कर्माणि राजाभिषेकादीनि सूत्रेऽन्ते सन्निवेशितान्यपि प्रथमकरणीयत्वेनास्माभिः प्रकरणादावेवोक्तानि। परभयनिवारकाणि कर्माणि सांग्रामिकाणीत्यप्युच्यन्ते। तत्र समपेक्षितोऽग्निः विशेषविधिना समुत्पादितः सेनाग्निरिति कथ्यते। सांग्रामिककर्मसु च सन्ति केचन विशेषधर्माः। ते सांग्रामिककर्मणामादावस्माभिः स्पष्टं प्रतिपादितानि। यद्यपि जैमिनिनये (२।३।२) क्षत्रियव्यक्तावेव राजत्वं व्यवस्थाप्यते, परं कौशिकः क्षत्रियेतरस्यापि राजयोगाद्राजानं मन्यत इत्यनुशीलनाज्ज्ञायते। राजकर्मणां कालो देशश्च विशेषोपदेशमन्तरा यथार्हं ज्ञातव्यौ।

## राजाभिषेकः

कौशिकसूत्रोक्तो राजाभिषेको द्विविधः लघुर्महांश्च। लघुरभिषेको माण्डलिकसामन्तयुवराजसेनापत्यादीनामपि भवति इति केशवः महाभिषेकस्तु परमेश्वरस्य माण्डलिकस्य भवतीति, दारिलः। जात्या क्षत्रियस्यापि राजत्वप्राप्तये अभिषेकः कर्तव्यः।

---

१—राजकर्माभिचारिकेष्वमुष्य त्वा'' ''''उदानायेति पंचमम् (३।१५)

## लघुरभिषेकः

गंगायमुनादिमहानदीनामदूरभवो देशो महानदः। तस्मिन् स्थाने कर्मेदमिति दारिलाशयः। तदर्थं मन्त्रोक्तानामपां (अ. ४।८।५) सम्मिश्रणेन शान्त्युदकं यथाविधि संसाधयेत्[१]। अभिषेककर्मणि क्रियमाणा हवनवेदिः परिगृह्या। तस्यां यथाविधि तन्त्रं कृत्वा स्थालीपाकं श्रपयित्वा वेद्या दक्षिणतो दर्भानास्तीर्य तत्र राजानं तिष्ठन्तमेव शान्त्युदकं कलशं भूतो भूतेषु (अ. ४।८।१) इति सूक्तेनाभिमन्त्र्य तेनाभिषिंचेत्[२]। ततस्तल्पमास्तीर्य तल्पे रक्तमानडुहं चर्मास्तीर्य तत्र राजानमारोहयेत्[३]। तत एकैकमुदपात्रं राजा पुरोहितश्च गृहीत्वा प्रकृतसूक्तेन राजा आत्मन उपरि, पुरोधाश्च राज्ञ उपरि जलमभिषिञ्चेताम्[४]। ततः पात्रपरिवर्तनं कृत्वा पुनरभिषिञ्चेतामिति दारिलकेशवाभिप्रायो ज्ञायते।[५]। केचन "विपरिदधान" इति सूत्रोक्तेन पदेन राज्ञः पुरोधसश्च विशिष्टवस्त्र-परिधापनं मन्यन्ते। अभिषेकानन्तरं सहैव नाविति सौत्रं मन्त्रं ब्रह्मापरपर्यायः पुरोहितो राज्ञे वदेत्[६]। राजा च यो दुस्कृतमिति सौत्रं मन्त्रं प्रतिवदेत्[७]। ततः पूर्वशृतं स्थालीपाक प्रकृतसूक्तेन सम्पात्याभिमन्त्र्य राजा प्राश्नीयात्[८]। प्राशनानन्तरं पुरोधाः प्रकृतसूक्तेन राजानमश्वमारोहयित्वा ऐशान्यां दिशं प्रति गमयेत्[९]। ततो राज्ञ आगमनानन्तरमुत्तरतन्त्रमिति केशवः। कर्मणोऽस्य गवां सहस्रं ग्रामवरश्च दक्षिणा देया[१०]।

---

१—भूतो भूतेष्विति राजानमभिषेक्ष्यन् महानदे शान्त्युदकं करोत्यादिष्टानाम् (१७।१)

२—स्थालीपाकं श्रपयित्वा दक्षिणतः परिगृह्याया दर्भेषु तिष्ठन्तमभिषिचति (१७।२)

३—तल्पार्षभं चर्मारोहति (१७।३)

४—उदपात्रं समासिंचेते (१७।४)

५—विपरिदधाने (१७।५)

६—सहैव नौ सुकृतं सह दुष्कृतमिति ब्रह्मा ब्रूयात् (१७।७)

७—यो दुष्कृतं करवत्तस्य दुष्कृतं सुकृतं नौ सहेति (१७।६)

८—आशयति (१७।९)

९—अश्वमारोह्यापराजितां प्रतिपादयति (१७।८)

१० सहस्रं ग्रामवरो दक्षिणा (१७।१०)

## महाभिषेकः

महाभिषेकेऽपि शान्त्युदकसाधनादि विपरिधानान्तं कर्म पूर्ववदेव (१७।१-५) भवति[1]। परमत्र वेद्या दक्षिणे तल्पं विधाय तत्र दर्भानास्तीर्योपविष्टस्य राज्ञः अभिषेचनं भवति।[2] ततो द्वितीये महति तल्पे व्याघ्रचर्मास्तीर्य तत्र राजानमारोहयेत्[3]। आरोहणानन्तरं सहैव नाविति वचनप्रतिवचने कुर्यातामिति केशवः। दारिलस्तु प्रतिपदं विपरिधानान्तकर्मोक्तेः (१७।११) नैतदनुमन्यते। ततश्चत्वारः क्षत्रियाः पुरुषाः तल्पस्य चतुर्षु पादेषु पृथक् पृथक् स्थित्वा शयनं परिगृह्य समारूढं राजानं सभां प्रापयेयु[4]। सभाप्राप्तस्य राज्ञः पादौ दासः प्रक्षालयेत्[5]। शूद्रवर्गेषु मुख्यत्वेनाधिकृतो महाशूद्रः पादप्रक्षालनावसरे जलं पातयेत्[6]। ततः बिभीतक काष्ठकृतान् कृतत्रेतादिनामसम्पन्नान् चतुरोऽक्षान् गृहीत्वा राजा ब्राह्मणेन क्षत्रियेण वैश्येन चेति त्रिभिर्वर्णपुरुषैः सह द्यूत-क्रीडां कुर्यात्[7]। द्यूतक्रीडायां सर्वस्वं पणे संस्थापयतां क्रीडिनां सर्वस्वं राजा जयेत्। एवं सर्वस्वजयिनं राजानं वैश्य उपतिष्ठन् प्रार्थयेत्–"उत्सृजायुष्मन्" इति[8]। सूत्रे जैनमित्यपपाठः, जयिनमित्येव शुद्धं पाठं मन्यामहे। ब्लूमफील्डमहोदयेन भृशं परिश्राम्यतापि शुद्धः पाठो न ज्ञातः। प्रार्थितश्च राजा उत्सृजामीति सौत्रेण मन्त्रेण प्रतिवचनं दद्यात्[9]। ततो वैश्यः "यथाज्ञापयति देव" इत्येवं प्रतिवचनं स्वीकुर्यात्[10]। ततः पूर्वश्रृतं स्थालीपाकं प्रकृतसूक्तेन संपात्याभिमन्त्रितं

---

१–विपरिदधानान्तमेकराजेन व्याख्यातम् (१७।११)

२–तल्पे दर्भेष्वभिषिञ्चति (१७।१२)

३–वर्षीयसि वैयाघ्रं चर्मारोहयति (१७।१३)

४–चत्वारो राजपुत्रास्तात्पाः पृथक् पादेषु शयनं परामृश्य सभां प्रापयन्ति (१७।१४)

५–दासः पादौ प्रक्षालयति (१७।१५)

६–महाशूद्र उपसिञ्चति (१७।१६)

७–कृतसम्पन्नानक्षानातृतीयं विचिनोति (१७।१७)

८–वैश्यः सर्वस्वजैनमुपतिष्ठत उत्सृजायुष्मान्निति (१७।१८)

९–उत्सृजामि ब्राह्मणायोत्सृजामि क्षत्रियायोत्सृजामि वैश्याय धर्मो मे जनपदे चर्यतामिति (१७।१९)

१०–प्रतिपद्यते (१७।२०)

राजा प्राश्नीयात्[१]। प्राशनानन्तरं पुरोधाः प्रकृतसूक्तेन राजानमश्वमारोह्य ऐशान्यां दिशं प्रति गमयेत्[२]। ततः प्रत्यावृत्त्य राजा पुनः सभायामागच्छेत्।[३] तदनन्तरं मधुररसोपेतमन्नं ब्राह्मणेभ्यो राजा भोजयेत्[४]। ब्राह्मणभोजनान्ते रसत्वेन परिभाषितानि ( ८।१९ ) द्रव्याणि प्रकृतसूक्तेन संपात्याभिमन्त्र्य राजा प्राश्नीयात्।[५] ततो राजा यावत्यो राजपत्न्यस्तासां सर्वासां प्रासादेषु गच्छेत्[६]। अत्रावसरे कुर्युंगामिति रूपेण सूत्रे संकेतितं मधुपर्कं राज्ञे दद्यादिति गार्ग्यपार्थश्रवसौ मन्येते। न दद्यादिति भागलिः[७]। महाभिषेकेऽपि उत्तरतन्त्रं दक्षिणादानादिकर्म च पूर्ववदेव भवति।

## प्रात्यहिकराजकृत्यम्

अभिषिक्तं राजानम् 'इममिन्द्र वर्धय' ( अ. ४।२२।१ ) इति सूक्तेन प्रत्यहं प्रातः पुरोधाः अभिमन्त्रयेत्[८]। सूक्तेनानेनैव प्रत्यहं प्रातः राज्ञः समासेचनं विपरिधानं चेति कर्मणी पूर्वोक्तवत् ( १४।४-५ ) कुर्यात्[९]।

## प्रात्यहिकराजपुरोहितकृत्यम्

राज्ञः पुरोहितः प्रत्यहं वैश्वलोपीः समिधः सविता प्रसवानामधिपतिः ( अ. ५।२४।१ ) इति सूक्तेन प्रत्यृचमग्नावादध्यात्[१०]। विश्वलोपशब्देनात्र चन्द्रस्य पूर्णादर्शनकालः अमावास्याख्यः संकेतितो वर्तते। अमावस्यायां संगृहीताः समिधः वैश्वलोपीः ताश्च शूद्रेणाहृताः स्युरिति केशवः।

---

१–आशयति ( १७।२१ )
२–अश्वमारोह्यापराजितां प्रतिवादयति ( १७।२२ )
३–सभायामुदायाति ( १७।२३ )
४–मधुमिश्रं ब्राह्मणान् भोजयति ( १७।२४ )
५–रसानाशयति ( १७।२५ )
६–माहिषाण्युपयाति ( १७।२६ )
७–कुर्युंगामिति गार्ग्यपार्थश्रवसौ नेति भागलिः ( १७।२७ )
८–इममिन्द्र वर्धय क्षत्रियं प्रातः प्रातरभिमन्त्रयते ( १७।२८ )
९–उक्तं समासेचनं विपरिधानम् ( १७।२९ )
१०–सविता प्रसवानामिति पौरोहित्ये वत्स्यन् वैश्वलोपीः समिध आधाय ( १७।३० )

## राज्ञः नूतनरथोपवेशनम्

सज्जे नूतने रथे सारथिना सहितं राजानं "नि तद् दधिषे" इत्यृचा, वनस्पते वी.ड्वङ्गः ( अ० ६।१२५।१ ) इति तृचेन, अया विष्ठा (अ.७।३।१) इत्यृग्द्वयेन, अग्न इन्द्रश्च ( अ. ७।११०।१ ) इत्यृग्द्वयेन, दिशश्चतस्रः ( अ.८।८।२२ ) इत्यृग्द्वयेनारोहयेत्[1]। मन्त्रवर्गविकल्पः केशवोक्तः। वनस्पते इति प्रतीकेन संहितायां स्थानत्रये मन्त्रः पठितः। तत्रसन्देहनिर्णये पूर्वापरमन्त्रयोः मध्यपतितस्यैव मन्त्रस्य ग्रहणमिति सूत्रकारशैली। ततश्च पंचमसप्तमकाण्डयोः सन्दंशपतितस्य षष्ठकाण्डीयस्यैव ग्रहणं कर्तव्यमित्यस्माकं निर्णयः। अतश्च ब्लूमफील्डमहोदयेन संकेतितो द्वादशकाण्डीयो मन्त्रोऽत्र अनादरणीयः।

## साङ्ग्रामिकाणि

सांग्रामिककर्मसु विशेषविधयाग्निरुत्पाद्यते, सेनाग्निरिति च स व्यवह्रियते। अत्रैवाग्नौ सेनासम्बद्धानि शत्रुविनाशकानि च सर्वाणि कर्माणि भवन्ति।

## सेनाग्नि-साधनम्

सेनाग्न्युत्पादनार्थं अश्वत्थबाधकवृक्षयोन्यतरस्यारणिं निष्पाद्य तत्र मन्थेत्[2]। मन्थने इन्द्रो मन्थतु ( अ. ८।८।१ ) इत्यृक् प्रयोक्तव्या[3]। मथ्यमानेऽग्नौ धूमं दृष्ट्वा अग्निपदरहितेन धूमम् ( अ. ९।८।२ ) इत्यर्धर्चेन तमनुमन्त्रयेत्[4] जातेऽग्नौ एतेनैवार्धर्चेन धूमपदरहितेन तमाग्निमनुमन्त्रयेत्[5]। तत उत्पन्नमग्निं जीर्णरज्ज्वां पूतिरज्जुः ( अ. ८।८।२ ) इत्यर्धर्चे पातयेत्[6]।

सेनाकर्मसु सेनाग्नौ वक्ष्यमाणानि त्रीणि कर्माणि नित्यानि भवन्ति। तत्र स्वाहैभ्यः ( अ. ८।८।२४ ) इति पदद्वयेन स्वमित्रबलवृद्ध्यर्थं बधक-

---

१—नि तद् दधिषे वनस्पतेऽया विष्ठाग्न इन्द्रो दिशश्चतस्र इति नवं रथं राजानं ससारथिमास्थापयति ( १५।११ )

२—अश्वत्थबधकयोरग्निं मन्थति ( १६ ११ )

३—इन्द्रो मन्थत्विति ( १६।६ )

४—धूममिति धूममनुमन्त्रयते ( १६।१२ )

५—अग्निमित्यग्निम् ( १६।१३ )

६—पूतिरज्जुरिति पूतिरज्जुमवधाय ( १६।१० )

काष्ठप्रज्वालिते सेनाग्नौ दक्षिणहस्तेनाज्यं जुहुयात्[1]। तत्रैवाग्नौ दुराहामीभ्यः इति पदद्वयेन वामहस्तेन इङ्गिडहोमममित्रक्षयार्थं कुर्यात्[2]। तथा च प्रधानहोमात् पूर्वमग्नेरुत्तरतः लोहितवर्णाश्वत्थस्य शाखां निहत्य तां नीललोहितवर्णाभ्यां सूत्राभ्यां परिवेष्टयेत्। उत्तरतन्त्रे च तां शाखां "नीललोहितेनामूनभ्यवतनोमि" ( अ. ८।८।२४ ) इति मन्त्रेण दक्षिणस्यां दिशि सुदूरं प्रक्षिपेत्[3]।

## हस्तित्रासनम्

पृथिवीविजये आसीत् पुरा हस्तिबलस्य महत्त्वम्। हस्तिनां त्रासनेन परकीया सेना दुर्बला भवतीति कृत्वा हस्तित्रासनकर्म सूत्रकृतोपनिबद्धम्। हस्तित्रासने ये त्रिषप्ताः ( अ. १।१।१ ) इति प्रथमस्य सूक्तस्य विनियोगः[4]। एतदर्थं स्वकीयारोहणीयं रथचक्रं सांग्रामिके हवनतन्त्रे सूक्तेन सम्पात्य तं रथं हस्त्यभिमुखं प्रवर्तयेत्[5]। अश्वादियानसाधनान् सूक्तेन सम्पात्य शत्रुहस्त्यभिमुखं गच्छेत्[6]। पटहभेर्यादिवाद्यानि सूक्तेनाभिमन्त्र्य परसेनाभिमुखं गच्छन् वादयेत्[7]। चर्मकृते दृत्याख्ये पात्रे चर्मपुटे वा सूक्ताभिमन्त्रिताः शर्कराः संस्थाप्य ना हस्त्यभिमुखं प्रक्षिपेत्[8]। शर्करावद् बालुकाप्रक्षेपोऽपि केशवसायणाभ्यामुक्तस्तत्र मूलं न विद्मः। कश्चन स्वीयः पुरुषः अपरिहितवस्त्रः प्रच्छन्नश्च तोत्रेण सूक्ताभिमन्त्रिताः शर्कराः हस्त्यभिमुखं प्रक्षिपेत्[9]। वेणुकाष्ठेन सम्पादितं प्रक्षेपणसाधनं तोत्रमिति दारिलः।

## संग्रामजयाः

विद्मा शरस्य ( अ. १।२।१ ) मा नो विदन्, अदारसृद् स्वस्तिदा ( अ० १।१९, २०, २१।१ ) अव मन्युः, निर्हस्तः, परिवर्त्मानि ( अ०६। ६५, ६६,

---

१—स्वाहेभ्य इति मित्रेभ्यो जुहोति ( १६।१८ )

२—दुराहामीभ्य इति सव्येनेंगिडममित्रेभ्यो बाधके ( १६।१९ )

३—उत्तरतोऽग्नेर्लोहिताश्वत्थस्य शाखां निहत्य नीललोहिताभ्यां सूत्राभ्यां परितत्य नीललोहितेनामून् इति दक्षिणा प्रह्णापयाति ( १६।२० )

४—पूर्वस्य हस्तित्रसनानि ( १४।१ )

५—रथचक्रेण सम्पातवता प्रतिप्रवर्तयति ( १४।२ )

६—यानेनाभियाति ( १४।३ )

७—वादित्रैः ( १४।४ )

८—दृतिवस्त्योरोप्य शर्कराः ( १४।५ )

९—तोत्रेण नग्नप्रच्छन्नः ( १४।६ )

६७।१ ) अभिभूः, इन्द्रो जयाति, अभित्वेन्द्र: ( अ०६। ९७, ९८, ९९।१ ) इत्येतानि अपराजितगणोक्तानि सांग्रामिकाणि सूक्तानि सन्ति[१]। अत्र केशवमतेन चत्वारो वर्गाः। तत्र विद्मा शरस्येत्येकसूक्तात्मकः प्रथमः, मा नो विदन्नित्यादिसूक्तत्रयात्मको द्वितीयः, अत्र मन्युरित्यादि सूक्तत्रयात्मकः तृतीयः अभिभूरित्यादि सूक्तत्रयात्मकश्च चतुर्थो वर्गः। कर्मसु प्रत्येक वर्गस्य विकल्पः।

संग्रामजयार्थमाज्यमिश्रितान् सक्तून् सांग्रामिके हवनतन्त्रे मन्त्रगणेन जुहुयात्[२]। सक्त्वाज्ययोः पृथक् पृथग्घोमविकल्प इति केशवमतम्। धनुर्वृक्ष-काष्ठेध्मैः प्रज्वालितेऽग्नौ सांग्रामिके हवनतंत्रे मन्त्रगणेन प्रत्यृचं धनुर्वृक्ष-समिध आदध्यात्[३]। धनुर्वृक्षः कार्मुकमिति पर्यायौ। मध्यप्रदेशे कारीपदेनैतं व्यपदिशन्ति। एवमेव शरेध्मप्रदीपितेऽग्नौ शरसमिधानं कर्तव्यम्।[४] पुरोधा राज्ञो धनुपं सांग्रामिके हवनतन्त्रे मन्त्रगणेन सम्पात्याभिमन्त्र्य हस्तेन संमृज्य राज्ञे प्रयच्छेत्[५]।

संशितं मे ( अ० ३।१९।१ ) इममिन्द्र ( अ० ४।२२।१ ) इति समुच्चिताभ्यां सूक्ताभ्यामपि सक्त्वाज्यहोमादि धनुः प्रदानान्तानि कर्माणि भवन्ति[६]।

संग्रामजयकामः अश्वत्थकाष्ठनिर्मितायां पात्र्यां ( कुण्डिकायां ) नवानां गोमयशकलानामुपचयं कृत्वा तेष्वग्निं प्रज्वाल्य हस्तिपृष्ठे पुरुषशिरसि वा पात्रीसहितमग्निं धृत्वा पुरुषं हस्तिनं वा प्रचालयन् ऋधङ्मन्त्रः तदिदास ( अ. ५।१, २।१ ) इति सूक्ताभ्यां प्रत्यृचमाज्यं जुह्वन् युद्धदेशे शत्रून् परिक्रमेत्। परिक्रम्य पात्रीं भूमौ निक्षिपेत्[७]। अत्र यावदुक्तमेव कर्म भवति, न हवनतन्त्रम्। सूत्रे त्रिवृदिति जैमिनिनयसिद्धान्तात् (जै. न्या. मा. १।३।५ ) नवसंख्यापरः, परिचयशब्दश्च परिपूर्वकाच्चिनोतेः गोमय-शकलोच्चयपर इति वयमवगच्छामः। वराहोत्खातमृत्तिकया क्षत्रियजातीय-

१–द्र० कौ० ( १४।७ )

२–आज्यसक्तून् जुहोति ( १४।८ )

३–धनुरिध्मे धनुःसमिधमादधाति ( १४।९ )

४–एवमिष्विध्मे ( १४।१० )

५–धनुः सम्पातवद् विमृज्य प्रयच्छति ( १४।११ )

६–इममिन्द्रेति युक्तयोः प्रदानान्तानि ( १४।२४ )

७–ऋधङ्मन्त्रस्तदिदासेत्याश्वत्थ्यां पात्र्यां त्रिवृति गोमयपरिचये हस्तिपृष्ठे पुरुषशिरसि वामित्रान् जुह्वदभिप्रक्रम्य निवपति ( १५।१ )

पुरुषैः कृतायां वेद्यां पुरोधाः ऋधङ्मन्त्रः तदिदास इति सूक्ताभ्यां पूर्वोक्तवत् ( १४।८-११ ) आज्यहोमादि धनुः प्रदानान्तं कर्म कुर्यात्[1]। सूत्रे त्रिहतशब्दः हिंसार्थकाद् हन्धातोः उपसर्गवशादुत्खननपरः। राजान इति बहुत्वोपदेशात् त्र्यवराणां क्षत्रियाणां वेदिकरणम्।

जयकामनायामेव एकेन वाणेन युद्धे हतस्य सैनिकस्य दाहाग्निनुपसमाधाय तस्याग्नेरुपरि रथचक्रं धारयित्वा दीर्घदण्डेन स्रुवेणाज्यं गृहीत्वा रथचक्रस्य छिद्रेण अग्नेः परितः प्रकृतसूक्तद्वयेन प्रत्यृचमाज्यं जुहुयात्[2]। सूत्रे समयाशब्दः परितः इत्यर्थे इति हारिलः। उत्तिष्ठ संनह्य प्रहर इत्यादि सैनिकानामुत्साहवाचः श्रुत्वा पुरोधाः प्रकृतसूक्ताभ्यां तान् गमनायानुजानीयात्[3]।

शत्रुमभिमुखं पश्यन् यदि चिन्नु ( अ. ५।२।४ ) इत्यृचं नमो देववधेभ्या ( अ. ६।१३।१ ) इति सूक्तं च तज्जयकामः पठेत्[4]। भूम्यधिपतिर्वैश्यजातीयश्चेत् तस्य संग्रामप्राप्तौ पुरोहितः "यदि चिन्नु "इत्यृचा" नमो देववधेभ्य" इति सूक्तेन च पूर्वोक्तवत् ( १४।८--११ ) आज्यहोमादि धनुः प्रदानान्तं कर्म कुर्यात्[5]। सेनापतिः सेनाया जयमिच्छन् युद्धोद्यतः पूर्वोक्तानि ( १४।८--११ ) आज्यहोमादि धनुः प्रदान्तानि कर्माणि त्वया वयम् ( अ. ५।२।५ ) इत्यृचा पुरोधसा कारयेत्[6]।

संग्रामजयकामेन शणरज्जुभिः कुञ्जरज्जुभिर्वा पाशान् निर्माय इङ्गिडादिना संस्कृत्य सांग्रामिके हवनतन्त्रे संदानं वः, आदानेन (अ.६।१.३-१०४।१ ) इति तृचाभ्यां संपात्याभिमन्त्र्य परसेनासंचारस्थानेषु प्रक्षिपेत्[7]। सूत्रे आदान-संदानानीति शब्दः पाशैः शत्रूणां बन्धनफलबोधकः।

राजा जयकामः युद्धकाले स्वसैनिकान् दृष्ट्वा ये बाहवः, उत्तिष्ठत ( अ. ११।९,१०।१ ) इति अर्धसूक्ताभ्यां यथालिंगं सम्प्रेष्येत्, स्वयं चैते

---

१–वराहविहिताद्‌ राजानो वेदिं कुर्वन्ति, तस्यां प्रदानान्तानि ( १५।२--३ )

२–एकेष्वाहतस्यादहन उपसमाधाय दीर्घदण्डेन स्रुवेण रथचक्रस्य खेण समया जुहोति ( १५।४ )

३–योजनीया श्रुत्वा योजयेत् ( १५।५ )

४–यदि चिन्नु त्वा नमो देववधेभ्य इत्यन्वाह ( १५।६ )

५–वैश्यस्य प्रदानान्तानि ( १५।७ ).

६–त्वया वयमित्यायुधि ग्रामण्ये ( १५।८ )

७–संदानं व आदानेवेति पाशैरादानसंदानानि ( १६।१ )

जपेत्[1]। आभ्यामेव सूक्ताभ्यां पूर्वोक्तानि (१४।८-११) आज्यहोमादि धनुः प्रदानान्तानि कर्माण्यपि भवन्ति[2]। एतावत् खल्वत्र विशिष्यते यद् यत्राज्यस्य विधानं तत्र पृषदाज्याख्यं दधिमिश्रमाज्यमुपयुञ्ज्यात्[3]। यानि च सेनासंचारप्रदेशेषु वपन (प्रक्षेपण)-रूपाणि मौञ्जशरपाशामपात्रादीनां कर्माणि तान्यप्येताभ्यां सूक्ताभ्यां कार्याणि। यानि च पूर्वं वाप्यत्वेन पदार्था उक्ताः तेभ्य। सहैव सन्धित्रययुक्ताः लौहमय्यो वज्रप्रतिकृतीः अर्बुदरूप-लौहगोलिकाश्च पूर्ववदेव तन्त्रेण प्रकृतसूक्ताभ्यां सेनासंचार-प्रदेशेषु प्रक्षिपेत्[4]। यत्र क्षत्रियाः सैनिकाः शिविरे विश्रमन्ति तत्र स्थले निखातो ध्वजदण्डः क्षत्रियोपासंगदण्डः कथ्यते। तस्मिन् दण्डे शितिपदीं गामजामविं वा आभ्यामेव सूक्ताभ्यां सम्पात्याभिमन्त्र्य मुञ्जरज्वा रहसि बध्नीयात्[5]। अन्यां च शितिपदीं प्रकृतसूक्ताभ्यां सम्पात्याभिमन्त्र्य शत्रून् प्रतिगमयेत्[6]।

## शत्रुनिवारणम्

संग्रामे शत्रुकृतेषुबाधाया विनिवृत्तये विद्मा शरस्य (अ० १।२।१) इति मन्त्रगणे प्रथममुक्तेन सूक्तेन प्रयोगो भवति[7]। तत्र द्रुघ्न्यार्त्नीज्यापाशं द्व्यंगुलमात्रं छित्त्वा सांग्रामिके हवनतन्त्रे सूक्तेन सम्पात्याभिमन्त्र्य च बध्नीयात्[8]। दूर्वादितृणमूलबन्धनं वा तथैव कुर्यात्। सूत्रे द्रुघ्न्याशब्दोऽस्पष्टः, अव्याख्याख्यातश्च।

खड्गादिशस्त्रनिवारणाय आरेऽसौ (अ० १।२६।१) इति सूक्तस्य प्रयोगः[9]। तदर्थं च सांग्रामिकेऽग्नौ फलीकरणानि, तुषान्, बुसानि अवतक्षणानि वा सूक्तेन जुहुयात्[10]। फलीकरणातण्डुलादिविवेचनेन पृथक्कृताः

---

१—ये बाहव उत्तिष्ठतेति यथालिंगं सम्प्रेष्यति (१६।२१)
२—प्रदानान्तानि वाप्यानि (१६।२३)
३—होमार्थे पृषदाज्यम् (१६।२२)
४—वाप्यं त्रिषन्धीनि वज्ररूपाण्यर्बुदिरूपाणि (१६।२४)
५—शितिपदीं सम्पातवतीं दर्भरज्ज्वा क्षत्रियायोपासंगदण्डे बध्नाति (१६।२५)
६—द्वितीयामभ्यस्यति (१६।२६)
७—प्रथमस्येषुपर्ययणानि (१४।१२)
८—द्रुघ्न्यार्त्नीज्यापाशतृणमूलानि बध्नाति (१४।१३)
९—आरेऽसावित्यपनोदनानि (१४।१४)
१०—फलीकरणतुषबुसावतक्षणान्यावपति (१४।१५)

सूक्ष्मकणाः, तुषा धान्यबल्कलानि, बुसानिः पशुभ्यो देयतृणानि ( भूसा ), अवतक्षणानि च काष्ठशकलानि। शत्रुं शस्त्रप्रहरणोद्यतं दृष्ट्वा सूक्तं जपेत्[1]।

## सेनामोहनम्

सेनामोहनाय अग्निर्नः शत्रून्, अग्निर्नो दूतः ( अ० ३।१,२।१ ) इति सूक्तद्वयेन प्रयोगा भवन्ति[2]। मोहनं नाम स्वपरयोरज्ञानम्। तदर्थं फलीकरणानि पक्वौदनमिश्रणेन पिण्डीकृत्य सांग्रामिके हवनतन्त्रे सूक्तद्वयेन उलूखलद्वारा अग्नौ जुहुयात्[3]। एवमेव तण्डुलकणिका वा जुहुयात्[4]। शूर्पे एकविंशतिशर्कराः ( क्षुद्रपाषाणमिश्रमृत्तिकाः ) कृत्वा सूक्तद्वयेन परसेनाभिमुखं निष्पुनीयात्[5]। सूक्तद्वयेनानेन अप्वायै देवतायै निर्वापादिविधिना चरुं श्रपयित्वा सांग्रामिके हवनतन्त्रेऽग्नौ जुहुयात्[6]।

## सेनोद्वेगकरणम्

परसेनोद्वेजनाय श्वेतानि चरणानि यस्या अजाया, मेष्या, एडकाया वा तस्याः पृष्ठं संशितं मे ( अ. ३।१९।१ ) इति सूक्तेन सांग्रामिके हवनतन्त्रे सम्पात्याभिमन्त्र्य तां शत्रुसेनां प्रति संचारयेत्[7]। कर्मणानेन उद्विग्नेषु शत्रुषु युद्धं प्रारभेत[8]।

## स्वसेनारक्षणम्

स्वसेनाया रक्षणकामेन दिक्शब्दयुक्ताभ्यां येऽस्याम्, प्राची दिक् ( अ. ३।२६, २७।१ ) इति सूक्ताभ्यां प्रत्येकं दिश उपतिष्ठेत्। नमो देववधेभ्यः ( अ. ६।१३।१ ) इति तृचेन वा षडावृत्त्या षड्दिश उपतिष्ठेत्[9]। षडावृत्त्योपस्थानमिदं जयकामः कुर्यादिति केशवसायणौ।

---

१—अन्वाह ( १४।१६ )

२—अग्निर्नः शत्रुनग्निर्नो दूत इति मोहनानि ( १४।१७ )

३—ओदनेनोपयम्य फलीकरणानुलूखलेन जुहोति ( १४।१८ )

४—एवमण्वन् ( १४।१९ )

५—एकविंशत्या शर्कराभिः प्रतिनिष्पुनाति ( १४।२० )

६—अप्वां यजते ( १४।२१ )

७—संशितमिति शितिपदीं सम्पातवतीमवसृजति ( १४।२२ )

८—उद्वृषत्सु योजयेत् ( १४।२३ )

९—दिग्युक्ताभ्यां नमो देववधेभ्य इत्युपतिष्ठते ( १४।२५ )

## स्वसेनाया उत्साहजननम्

स्वसेनाया उत्साहकामेन त्वया मन्यो, यस्त मन्यो ( अ. ४।३१,३२१ ) इति सूक्तद्वयेन प्रयोगो भवति[1]। उभयोः सेनयोर्मध्ये स्थितः सूक्तद्वयस्यास्य आशीर्लिङ्गमन्त्रैः स्वसेनां, विनाशलिंगैश्च परसेनां निरीक्षेत[2]। शणपाशान् मुञ्जपाशान् वा इंगिडाऽऽकृतान् कृत्वा सांग्रामिके हवनतन्त्रे सूक्तद्वयेन सम्पात्य सक्रोधमभिमन्त्र्य परसेनासचारस्थलेषु प्रक्षिपेत्[3]। सूत्रे भांगशब्दः शणवाची, अमरादिषु प्रठितो ज्ञेयः, अनूक्तशब्दश्च सक्रोधमुद्रयाभिमन्त्रणे साम्प्रदायिकः पाशवदेव अपक्वेषुमृत्तिकापात्रेषु वा तन्त्र कृत्वा तानि प्रक्षिपेत्[4]।

## जयपराजयविज्ञानम्

संग्रामे जयपराजयज्ञानाय उभयोः सेनयोर्मध्ये इंगिडसंप्रेक्षितानि शरतृणानि निधाय "त्वया मन्यो, यस्ते मन्यो" इति सूक्तद्वयेनाभिमन्त्र्य आंगिरसेनाग्निना तानि दहेत्[5]। यस्याः सेनायाः सम्मुखं धूमो गच्छति तस्य पराजय इति जानीयात्[6]। आंगिरसोऽग्निश्चाण्डालगृहाग्निः सूतिकारक्षार्थं स्थापितोऽग्निर्वा भवति।

तदर्थमेव तिस्रः स्नावरज्जूः ब्रह्मजज्ञानम् ( अ. ५।६।१ ) इति सूक्तेनाभिमन्त्र्य स्वाभिमुखां रज्जुमात्मसेनां मध्यरज्जुं मृत्युमन्त्यरज्जुं च शत्रुसेनां भावयित्वा तिस्रोऽपि सहैव पृथक् पृथक् अग्न्यङ्गारेषूपरि निदध्यात्[7]। मध्यमा मृत्युरज्जुः तां सेनारज्जुमधिरोहति तस्याः पराजयः। यदि सेनात्वेन भाविता रज्जुः मृत्युरज्जोरुपरि आयाति तदा तस्याः सेनाया विजय इति जानीयात्[8]। अभिमुखागमनेऽपि तस्या जयं जानीयादिति केशवः।

---

१–त्वयामन्यो यस्ते मन्यो इति संरम्भणानि ( १४।२६ )
२–सेने समीक्षमाणो जपति ( १४।२७ )
३–भांगमौञ्जान् पाशानिंगिडालंकृतान् संपातवतोऽनूक्तान् सेनाक्रमेषु वपति ( १४।२८ )
४–एवमामपात्राणि ( १४।२९ )
५–इंगिडेन सम्प्रोक्ष्य तृणान्यांगिरसेनाग्निना दीपयति ( १४।३० )
६–यां धूमोऽवतनोति तां जयन्ति ( १४।३१ )
७–साग्रामिकमेता व्यादिशति मध्ये मृत्युरितरे सेने ( १५।१५ )
८–पराजेष्यमाणान् मृत्युरतिवर्तते जेष्यन्तो मृत्युम् ( १५।१६ )

## युद्धार्हपुरुषपरिज्ञानम्

सैनिकानां युद्धयोग्यत्वपरीक्षणे एकमुदपात्रं नि तद् दधिषे (अ.।५।२।६) इत्यृचाभिमन्त्र्य राजा तस्मिन् मुखावलोकनार्थं द्वौ द्वौ सैनिकावनुजानीयात्। राजा तयोर्मुखं तस्मिन् निरीक्षेत[1]। यदि कस्यचिन् मुखं तस्मिन्नुदपात्रे न दृश्येत तदा तं पुरुषं युद्धे न नियोजयेत्[2]। प्रतिपुरुषयुग्ममुदपात्रस्य पुरोधसाभिमन्त्रणं कर्तव्यम्।

## जीवनपरिज्ञानम्

युद्धे आहतस्यान्यस्य वा जीवनसंशये जीविष्यति नवेति परिज्ञानाय तिस्रः स्नावरज्जूः ब्रह्मजज्ञानम् ( अ ५।६।१ ) इति सूक्तेनाभिमन्त्र्य अग्न्यंगारेषु निदध्यात्[3]। यदि ता उच्चैर्भवन्ति तदा जीविष्यतीति जानीयात्[4]। संग्रामे कीदृशानां विशेषतो हननं भवतीति ज्ञानाय तिस्रः स्नावरज्जूः प्रकृतसूक्तेनाभिमन्त्र्य पूर्वापरायतत्वेन अग्न्यंगारेषु पश्चिमाग्रा निदध्यात्। यदि प्रथमं रज्जूणामग्राणि दह्यन्ते तदा मुख्याः सैनिका हता भवन्ति। प्रथमं मध्यदाहे मध्यमाः, अन्त्यदाहे चावराः विशेषतो हता भवन्ति[5]। एवमेव स्नावरज्जु-स्थाने शरमया वीरिणमया वा इषीकाः परीक्षणार्थमुपयोक्तव्याः[6]।

## परसेनात्रासनम्

परस्य सेनायास्त्रासनार्थं भेरीदुन्दुभ्यादि सर्वाणि युद्धवाद्यानि प्रक्षाल्य तगरोशीरयोः द्रवपिष्टेनानुलिप्य उच्चैर्घोषः ( अ०५।२०।१ ) उप श्वासय ( अ०६।१२६।१ ) इति सूक्तयोरन्यतरेण सांग्रामिके हवनतन्त्रे संपात्य पुरोधाः स्वयमेव त्रिराहत्य ( वादयित्वा ) वादकेभ्यः प्रयच्छेत्[7]। प्रक्षालनानुलेपनयोरपि सूक्तप्रयोगो युक्तः। अयमेव विधिः विहृदयम् ( अ० ५।-

---

१–नि तद् दधिषे इति राज्ञोदपात्रे द्वौ द्वाववेक्षयेत् ( १५।६ )

२–यन्न पश्येन्न युध्येत ( १५।१० )

३–ब्रह्मजज्ञानमिति जीवितविज्ञानम्, तिस्रः स्नावरज्जूरंगारेष्ववधाय ( १५।१२।१३ )

४–उत्कुचतीषु कल्याणम् ( १५।१४ )

५–अग्रेषूत्कुचत्सु मुख्या हन्यन्ते मध्येषु मध्या अन्तेष्ववरे ( १५।१७ )

६–एवमिषीकाः ( १५।१८ )

७–उच्चैर्घोष उप श्वासयेति सर्ववादित्राणि प्रक्षाल्य तगरोशीरेण संवाप्य सम्पातवन्ति त्रिराहत्य प्रयच्छति ( १६।१ )

२१।१ ) इति सूक्तेनापि भवति । पर तत्र उच्चैर्मन्त्रप्रयोगेण होमः, प्रत्यृचं हवनान्ते स्रुवस्य किंचित् किंचिदूर्ध्वं नयनं च विशेषतो भवति[1] । श्रौतेऽपि चयनयागे उद्गृह्णन् इति विशेषनिर्देशे होमसाधनस्य प्रत्यृचमुन्नदन भवति ( का. श्रौ. १६।२।७ ) ।

सोमलतायाः खण्डेन मणिं सम्पाद्य हरिणचर्मण्युद्ग्रथ्य विहृदयमिति सूक्तस्योच्चैः प्रयोगेण साग्रामिके हवनतन्त्रे सम्पात्याभिमन्त्र्य क्षत्रियस्य राज्ञोऽवयवे पूर्वोक्तकामेनैव बध्नीयात्[2] । परसेनायाः त्रासनाय परिवर्त्मानि (अ. ६।६७।१ ) इन्द्रो जयाति ( अ. ६।९८।१ ) इति सूक्तयोरन्यतरेण राजा स्वीयां सेनां त्रिः परिक्रामेत्[3] । तदर्थमेव च सोमखण्डमणि हरिणचर्मण्युद्ग्रथ्य साग्रामिके हवनतन्त्रे परि वर्त्मानि इति प्रथमसूक्तेन सम्पात्याभिमन्त्र्य राज्ञे बध्नीयात्[4] । पूर्वशब्देन ये त्रिषप्तीयं सूक्तं दारिलोऽभिप्रैति । परं प्रकृतत्वान्मन्त्रलिंगाच्च परि वर्त्मानीति सूक्तस्यैव ग्रहणं युक्तं प्रतिभाति । केशवः कर्मेदं जयकामार्थमुपदिशति । तन्न युक्तम्, मन्त्रेषु त्रासनलिंगोपलब्धेः ।

## अभयकरणम्

परकृतसेनोद्वेजनेन संभाव्याशान्त्यनुभवमूलिका धैर्यस्थितिः अभयम् । तत्कामेन पुरोधा मर्माणि ते ( अ. ७।११८।१ ) इत्यृचा कवचमभिमन्त्र्य धारणाय स्वयमेव राज्ञे प्रयच्छेत्[5]। सेनाया अभयकामार्थमेव सूत्रोक्तानाम् ( ५९।२६ ) अभय द्यावापृथिवीति (अ. ६।४०।१) सूक्तेन सम्पपुपस्थानादिकर्मणामपि प्रयोगः कर्तव्यः[6] ।

## सपत्नक्षयणम्

शत्रूणा क्षयफलकं कर्म सपत्नक्षयणमुच्यते । तदर्थं हि संपादितं सेनाग्निमरण्ये हुत्वा तस्मिन् सांग्रामिके हवनतन्त्रे इन्द्रो मन्थतु ( अ० ८।८।१ ) इत्यर्धसूक्तेन अश्वत्थ-बधक-ताजद्भंगाह्व-खदिर-शरवृक्षेष्वन्यतमस्य सपत्न-

---

१–विहृदयमित्युच्चैस्तरां हुत्वा स्रुवमुद्वर्तयन् ( १६।२ )

२–सोमांशु हरिणचर्मण्युत्सीव्य क्षत्रियाय बध्नाति ( १६।३ )

३–परि वर्त्मानीन्द्रो जयातीति राजा त्रिः सेनां परियाति ( १६।४ )

४–उक्तः पूर्वस्य सोमांशुः ( १६।५ )

५–मर्माणि त इति क्षत्रियं सन्नाहयति ( १६।७ )

६–अभयानामप्ययः ( १६।८ )

क्षयणीः समिधः प्रत्यृचमादध्यात्[1]। तत्र बधकः करिमालक इति दारिल-सायणौ। ताजद्भंग एरंडः। आह्वश्चपलाशः।

तथा च प्रकृतसूक्तेनैव पूर्वोक्तवत् (१४।२८) शणान् मौञ्जान् वा पाशान् सेनासंचारदेशेषु प्रक्षिपेत्[2]। तथैव आश्वत्थानि कूटानि, शणनिर्मितानि प्राणिवन्धनार्थानि जालानि वा प्रकृतसूक्तेन सपात्याभिमन्त्र्यच सेनासंचारप्रदेशे प्रक्षिपेत्[3]। एवमेव बाधकवृक्षदण्डानपि प्रक्षिपेत्[4]। सायणस्तु बाधकदण्डानां विशेषणत्वेन कूटानि जालानि च प्रयुनक्ति। सूत्रोक्तः कूटो निषादानां प्राणिवन्धन-साधनवाचीति सायणः।

## स्वराष्ट्रप्राप्तिः

कश्चन राजा शत्रुभिः स्वीयाद् राष्ट्राद् विवासितश्चेत् पुनः स्वराष्ट्र-प्रवेशाय राष्ट्रस्थितजनानां स्वस्मिन् अनुरागप्राप्तये च अस्मिन् वसु (अ. १।९।१) इति सूक्तेन कर्म कुर्यात्[5]। तत्र आव्रस्कारूढकाम्पील-काष्ठसाधितेऽग्नौ समानवर्णवत्साया गोर्दुग्धे आनुशूकव्रीहिणां चरुं श्रपयित्वा सूक्तेन हवनतन्त्रे तं संपात्याभिमन्त्र्यच राजानमाशयेत्[6]। सूत्रे अवगमनमिति प्रजानुरागकरार्थकमिति दारिलः। सकृच्छिन्नासु व्रीहिषु तस्मिन्नेव काण्डे पुनः प्ररूढा व्रीहय आनुशूका उच्यन्ते। छिन्नायाः शाखायाः स्थाने पुनः प्ररूढा शाखा आव्रस्कजेत्युच्यते।

शत्रुभिः स्वीये राष्ट्रे मर्दिते सति पुनः स्वराष्ट्रप्राप्तये तत्र सर्वविध-सम्पत्तिप्राप्तिकामनया रथचक्रनेमिखण्डेन मणिं सम्पाद्य तन्मध्ये स्वर्ण-निवेशनेन हेमनाभित्वं कृत्वा मणेरुपरि पंचधातुवेष्टनानि विधाय त्रयोदश्यादि पर्वान्तं यथोक्तम् (७।१९) अभिवास्य प्रतिपदि तं सूत्रप्रोतं कृत्वा अग्ने-रुत्तरतः आस्तृते बर्हिषि निधाय अभीवर्तेन (अ. १।२९।१) इति सूक्तेन हवनतन्त्रे मणिं सम्पात्याभिमन्त्र्यच शरकाण्डकृता भृष्टचाख्याः समिधस्तेनैव सूक्तेन प्रत्यृचं हुत्वा, तमभीवर्ताख्यं मणिं सूक्तोत्तमाभ्याम् उदसौ सूर्यः

---

१—तस्मिन्नवरण्ये } सपत्नक्षयणीरादधात्यश्वत्थबधकताजद्भंगाह्वखदिरशराणाम् (१६।१४)

२—उक्ताः पाशाः (१६।१५)

३—आश्वत्थानि कूटानि भांगानि जालानि (१६।१६)

४—बाधकदण्डानि (१६।१७)

५—अस्मिन् वस्विति राष्ट्रावगमनम् (१६।२७)

६—आनुशूकानां व्रीहीणामाव्रस्कजैः काम्पीलैः शृत सारूपवत्समाशयति (१६।२८)

(अ१।२६।५) इत्याभ्यामृग्भ्यां राज्ञोऽवयवे बध्नीयात्। वेष्टने अयः सीसः लोहः रजतं ताम्रं चेति पंच धातवः[१]।

शत्रुभिर्यस्माद् देशाद् राजापसारितो भवति तस्मादेव देशाद् वक्ष्यमाण-कर्मोपयोगीनि साधनानि सम्भृत्य यस्याश्च दिशो निःसारितः, तस्यामेव दिशि श्येनाकृतिपुरोडाशं कृत्वा जले दर्भानास्तीर्य दर्भोपरि पुरोडाशं निधाय तदुपरि मज्जनार्थं तद्देशलोष्ठ निधायास्तृतदर्भैर्बध्वा अचिक्रदत्, आ त्वा गन् ( अ० ३।३,४।१ ) इति सूक्ताभ्यां जले एव निनयेत्[२]। सूत्रे शयनविधमित्यपपाठः, श्येनविधमिति युक्तम्, अभिचारकर्मत्वात् केशवोक्तेः, यथा वै श्येनो निपत्यादत्त एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्ते ( जै. न्या. मा. वि १।४।५ ) इति श्रुतिन्यायाच्च। तथा च तस्यामेव दिशि वेदिं निर्माय दर्भास्तरणस्थाने तद्देशमृल्लोष्ठचूर्णान्यास्तीर्य तत्र वेद्यां यथा-विधि क्षीरौदनं पक्त्वा प्रकृतसूक्ताभ्यां संपत्याभिमन्त्र्य च राजा प्राश्नीयात्[३]। एवमेव पुरोडाशश्रपणं दिनत्रयं विधाय भक्षिते सति चतुर्थेऽहनि उद्वासित-राष्ट्रजनाः स्वयमेव राजानं स्वामित्वाय आह्वयन्ति[४]।

व्याख्याता, वेदविभागे,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये,
वाराणसी।

---

१—अभीवर्तेनेति रथनेमिमणिमयः सीसलोहरजतताम्रवेष्टितं हेमनाभि वासितं बध्वा सूत्रोतं बर्हिषि कृत्वा सम्पातवन्तं प्रत्यृचं भृष्टोरभीवर्तोत्तमाभ्यामा-चृतति ( १६।२६ )

२—अचिक्रददा त्वा गन्निति यस्माद् राष्ट्रादवरुद्धस्तस्याशायां शयनविधं पुरोडाशं दर्भेषूदके निनयति ( १६।३० )

३—ततो लोष्ठेन ज्योतिरायतनं संस्तीर्य क्षीरौदनमश्नाति ( १६।३१ )

४—तिसृणां प्रातरशिते पुरोडाशो ह्वयन्ते ( १६।३३ )

# "रूपकेषु प्रस्तावनायाः प्रयोजनम्"

ओमप्रकाशः राजपाली

नाट्यनियमानुरोधेन नाटकेषु सर्वप्रथमं पूर्वरङ्ग, सभापूजां, कविचर्चां च सम्पाद्य प्रस्तावना प्रयोज्या[1]। वस्तुबीजपात्रादिपरिचयात्मिकां नाटकस्य भूमिकामुपस्थापयन्तीयं कविमधिकृत्यापि प्रस्तावना प्रभूतं सूचयति। तस्माद् देहे मुखमिव नाटके प्रस्तावनापि स्वमहत्त्वं सर्वातिशायित्वेन भजत्येव। महत्त्वपूर्णमिदं नाट्यशास्त्रीयतत्त्वं सर्वरूपकेषु सविशेषं दृश्यते।

आचार्यभरतानुसारेण स्थापकः सर्वप्रथमं प्रेक्षकान् मधुरश्लोकैः प्रसाद्य ततः परं कवेर्नामादिकं कीर्त्तयन् काव्यार्थानुगतां प्रस्तावनां प्रस्तौति[2]। नियमोऽयं नाभविष्यच्चेत्तर्हि कवीनां विषये ज्ञानं न सम्भवेत्। प्रसङ्गेऽस्मिन् भासकृतनाटकानां प्रस्तावनासु नाटयकारमधिकृत्य न किञ्चिदपि सूचितम्। फलतो भासविषये न किमप्यस्माभिर्ज्ञायते। अतः स्पष्टतया प्रतिभाति यत् तस्मिन् समये नाटयशास्त्रे प्रस्तावनाविषयको न कश्चित्तादृशो नियम आसीत्। भासस्य परवर्तिनस्तु सर्वे कवयो नाट्यशास्त्रीयं नियममनुसरन्ति। यत्र प्रस्तावनायां रचयितुः परिचयं नूनमनिवार्यतया दातव्यमित्यभिहितम्। फलतः नाट्यकाराणां जीवनदर्शन प्रस्तावनातः प्राप्यते। नाटकविषयेऽपि महत्त्वपूर्णं नैकं तत्त्वं प्रस्तावनापदार्थेन परिचीयते।

प्रस्तावनायां नाटकस्य अभिनयावसरः, अभिनयस्थलं, तदुद्देश्यं चोल्लिख्यते। नाटकानामभिनयो विभिन्नावसरेषु भवतिस्म, इति प्रस्तावना-

---

१. तत्र पूर्वं पूर्वरङ्गः सभापूजाः ततः परम्। सा० द० ६—२१
कथनं कविसंज्ञादेर्नाटकस्याप्यथामुखम् ॥

२. सुवाक्यमधुरैः श्लोकैर्नानाभावरसान्वितैः।
प्रसाद्य रङ्गं विधिवत्कवेर्नाम च कीर्तयेत् ॥

नुशीलनात् ज्ञायते । ये कवयो राजाश्रिता आसन् । ते समकालिकानां राज्ञामुल्लेखमपि प्रस्तावनायां कृतवन्तः । तेषां कवीनां नाटकानि राजसभायाः समक्षमभिनीयन्ते स्म । किन्तु तद्भिन्नरूपकाणामभिनयो मन्दिरप्राङ्गणेषु यात्रोत्सवेषु चाभवत् । नाटकमिदं प्रेक्षकाणां मनोविनोदाय अभिनेयमिति प्रस्तावनायां कवयः सूत्रधारद्वारेण प्रायशः कथयन्ति । अतो नाटकं मनोरञ्जनार्थं अभिनयार्थं च भवतीति प्रस्तावनाभ्यो ज्ञायते । प्राचीनकाले अभिषेक-विवाह-पुत्रजन्मादि-विभिन्नोत्सवेषु नाटकमभिनीतम् । भरतमुनिना नाट्यशास्त्रे प्रतिपादितं यत् तस्य नाटकं महेन्द्रोत्सवे आयोजितमासीत्[1] । अतः स्पष्टतया प्रतीयते यत् प्राचीनकाले विभिन्नावसरेषु नाटकादीनां रचनया अभिनयेन च प्रजानां मनोरञ्जनं क्रियतेस्म । अनेके कवयः किमपि विशेषप्रयोजनमधिकृत्यापि रूपकाणि रचितवन्तः । तथा हि पुरा नृपतीन् मोदयितुं राजाश्रितकवयः काव्यं चक्रुः । अतोऽत्र राज्ञां प्रमोद एव मुख्यं प्रयोजनम्[2] । कतिपय—नाट्यकाराणामुद्देश्यं स्वनूतनकाव्यप्रयोजनमेव । केचन कवयो रचनायाः प्रयोजनं प्रतिपादयन्तः लोकोपदेशं तत्र दर्शयन्ति । अत्र प्रस्तावनाध्ययनात् रूपकाणां महत्त्वं निर्धार्यते ।

प्रेक्षकाणां रसास्वाददृष्ट्या प्रस्तावनाया विभिन्नाभिप्राया प्रतिभान्ति । नाट्यप्रस्तुतिसमये प्रेक्षकस्य चेतनां वर्तमानकालात् कालान्तरं संक्रमयितुं प्रस्तावको यतते । प्रेक्षकस्य चेतना तद्देश—तत्कालविशिष्टा एव भवति । अतः प्रेक्षकस्य वर्तमानावद्धचेतनायाः कालान्तरं देशान्तरं च संक्रमणं कलासर्जनाया महत्त्वपूर्णं लक्ष्यम् । परन्तु जटिलमिदं संक्रमणं सहसा न

---

१—महानयं प्रयोगस्य समयः समुपस्थितः ।
अयं ध्वजमहः श्रीमान् महेन्द्रस्य प्रवर्तते ॥

ना० शा०, १–५४

२—सूत्रधारः—आर्ये । इयं हि रसभावविशेषदीक्षागुरोर्विक्रमादित्यस्य अभिरूपभूयिष्ठा परिषत् । अस्यां च कालिदासग्रथितवस्तुना नवेनाभिज्ञानशाकुन्तलनामधेयेन नाटकेनोपस्थातव्यमस्माभिः, तत्प्रतिपात्रमाधीयतां यत्नः ।

( अ० शा० प्र० )

संभवति । अतो नाटकप्रस्तुतेः पूर्वमेव प्रेक्षकान् तत्भूमिकामेवाधिगमयितुं प्रस्तावनेयं अपेक्षिता । सूत्रधारस्यात्मकथनं तथा नाट्यकारस्य परिचयं प्रतिपादयन्ती प्रस्तावनेयं शनैः शनैः तत्कालं संगच्छति । अतः प्रेक्षकस्य चेतनायाः कालसंक्रमणं अस्य प्रमुखं लक्ष्यं भवति । यद्यपि नाट्यशास्त्रे वर्णिताः सर्वाणि पूर्वरङ्गस्य अङ्गानि प्रमातुश्चेतनां वस्तुजगतः कलाजगत् संक्रमयितुं यतन्ते तथापि तेषु प्रस्तावनेयं प्रमुखत्वं धारयति ।

शोधच्छात्रः, संस्कृतविभागे
सागरविश्वविद्यालयः सागरम् ।

# संज्ञाव्यवहारस्य प्रयोजनानि

डॉ० जानकीप्रसादद्विवेदः,

लोके व्याकरणशास्त्रे च संज्ञाव्यवहारेण समीहितार्थस्यावबोधो झटिति भवति। हस्तचेष्टादिभिस्तु क्वचिदिष्टार्थाविबोधनेऽधिकं कष्टमनुभूयते। अपि च तेनोपायेनाभिमुखस्थितस्यैव पुरुषस्य बोधो भवति न तु यत्र कुत्रापि स्थितस्य। एवमर्थस्यासन्देहेनाशु बोधनाय संज्ञाव्यवहारोऽपरिहार्यः। अत एव चान्द्रव्याकरणस्य प्रणेता चन्द्राचार्योऽसंज्ञकस्यैव व्याकरणस्य रचनार्थं कृतप्रतिज्ञोऽपि स तदुद्देश्यपूर्तौ सफलो नाभूत्। दृश्यते च तत्र तत्र तदीय-व्याकरणे संज्ञाशब्दानां प्रयोगः। अत्र विषये मञ्जूषापत्रिकायां श्रीक्षितीश-चन्द्रमहोदयो दृष्टान्तमेकमदर्शयत्—'यथा गङ्गाप्रवाहपतितेन भल्लूकेन केनचिद् आक्रान्तो गङ्गास्नायी पुरुषस्ततो मुक्तिं वाञ्छन्नपि मुक्तो न बभूव, तथैवासंज्ञकस्यैव व्याकरणस्य रचनार्थं कृतप्रतिज्ञोऽपि चन्द्राचार्यः संज्ञाव्यवहारस्यापरिहार्यतापाशेन मुक्तिं न लेभे' इति।

अयं वाग्व्यवहाराश्रितः समस्तः संज्ञाप्रपञ्चो विकाररूपोऽपि लोके शास्त्रे च व्यवहाराय समादरणीय एवेति विदुषामनुभवः।

संज्ञानाम—

सञ्ज्ञिनां बोधार्थं प्रवृत्तायाः संज्ञायाः कानिचित् प्रयोजनानि लोक-शास्त्रयोरुदीरितानीह संक्षेपेण प्रस्तूयन्ते। एतेन संज्ञाव्यवहारविषये लोकशास्त्रयोः कियत् साम्यं वैषम्यं तदीयमहत्त्वं वेति प्रेक्षावन्तोऽधिगन्तुं प्रभवन्ति।

लोके संज्ञायास्त्रीणि प्रयोजनानि भवन्ति—

१—पापसमूहस्य प्रणाशः, २—लाघवेन व्यवहारस्य सम्पादनम्, ३—गुणा-दीनां प्रकाशनं च। तत्र पापप्रणाशरूपप्रथमप्रयोजनविषये माध्यन्दिन-शतपथब्राह्मणस्य ( ६।१।३।८–१८ ) अग्निजन्मसन्दर्भः प्रमाणम्। प्रजापते-स्तपसः प्रभावात् संवत्सरानन्तरमचिरजातः कुमारोऽरोदीत्। प्रजापतिना पृष्टः स स्वरोदनस्य निमित्तं नामाभावमेवाख्यातवान्। साम्प्रतमहं नाम-रहितोऽस्मि, तेन मे पापं न नष्टम्, पापनाशाय नाम मे विधेहीति। ततो

नक्षत्रघटितादीनि नामानि पापनाशायालमिति मन्यमानः प्रजापतिस्तस्य कुमारस्य 'रुद्र' इति संज्ञाम्, ततश्च कुमारासन्तोषक्रमवारणाय नव नामान्यकार्षीत् ।

नामकरणेन पापानि नश्यन्तीत्यभिप्रायेणैव नामकरणाख्यः एकः पावनतमः संस्कारो धर्मशास्त्रेऽभिहितः, स च जन्मतो । दशमे, एकादशे, द्वादशे वाह्नि विद्वद्भिरनुष्ठीयते ।

लोके संज्ञाव्यवहारस्य द्वितीयं प्रयोजनं वर्तते—लाघवेन व्यवहारस्य-निष्पत्तिः । येन शब्देन संज्ञा क्रियते स शब्दो व्यापकोऽणीयांश्चाभिमतः । एवं विधेन व्यापकेनाणीयसा च शब्देन कृता संज्ञा लाघवेन व्यवहाराय कल्पते—समर्था भवतीत्यर्थः। यथा 'देवदत्त' इति संज्ञाशब्देन बोधित एक एव पुरुषो गमनाध्ययनादिविविधव्यापारेषु नियुज्यते, ततो निवार्यते चापि ।

मातापितरौ पुत्रस्य यन्नामधेयं कुरुतस्तस्य व्यवहारं यदन्येऽपि कुर्वन्ति तत्र लाघवमेवोद्देश्यम्—"लोके तावन्मातापितरौ पुत्रस्य जातस्य संवृतेऽवकाशे नाम कुर्वाते 'देवदत्तो यज्ञदत्त' इति। तयोरुपचारादन्येऽपि जानन्ति—इयमस्य संज्ञेति" ( म० भा० १।१।१ ) इति ।

जातिगुणक्रियाणां प्रकाशनमपि संज्ञया संभवति । लोके विश्वनाथान्नपूर्णा—राम—विक्रमादित्य—घनश्याम—नृसिंह—ब्राह्मण—शरच्चन्द्र—क्षत्रियादि-संज्ञाः समाकर्ण्य अवश्यमेव कस्यचिद् गुणादेर्बोधो भवति । यत्र जातिगुण-क्रियाणामन्यतमं नाभिव्यज्यते सा संज्ञा व्यर्थैव भवति । संज्ञावत पुरुषस्य तस्य जन्म यदृच्छाशब्दवन्निरर्थकमेव जायते । उक्तं च कविवरेण माघेन—

असम्पादयतः कञ्चिदर्थं जातिक्रियागुणैः ।
यदृच्छाशब्दवत् पुंसः संज्ञायै जन्म केवलम् ॥
( शिशु० २।४ ) इति ।

यस्य नाम्न एतानि प्रयोजनान्यभिधीयन्ते तन्नाम चतुर्विधं भवति । तत्र तावत् प्रथमं नामास्ति—नक्षत्रदेवतावाचकपदघटितम् । यथा कृत्तिकानक्षत्रे जातस्य पुत्रस्य 'अग्निदत्त' इति नाम । कृत्तिकानक्षत्रस्याधिपतिर्देवो-अग्निः स्मर्यते, तस्य वाचकं यदग्निपदं तद्घटितं नाम भवति—'अग्निदत्त' इति ।

द्वितीयं नाम नक्षत्रपादाक्षरेण प्रारभ्यते । यथा पुष्यनक्षत्रस्य द्वितीय-पादस्य ज्ञापकं 'हे' इत्यक्षरम्, तेन च हेमचन्द्र—हेमाद्रि—हेमनाथप्रभृतीनि नामानि निधीयन्ते । एवं रोहिणीनक्षत्रस्य द्वितीयपादे जातस्य वासुदेव-वासव-वामनादीनि नामानि कर्तुं शक्यन्ते ।

द्वितीय एष नामविधिरभिवादनकार्ये श्रेयस्करः उपनयनपर्यन्तं गोपनीयश्चाभिमतो गृह्यसूत्रकाराणाम्—

"नक्षत्रनाम च निर्दिशति, तद् रहस्यं भवति" ( आप० गृ० १५।२–३ )

"अभिवादनीयं च समीक्षेत तन्मातापितरौ विद्यातामोपनयनात्"

( आश्व० गृ० १५।९ ) इति ।

जन्मनक्षत्राज्ज्ञातार्थप्रत्ययं विधाय यन्नाम क्रियते तत् तृतीयं नाम भवति । यथा रोहिणीनक्षत्रे जातस्य 'रौहिण' इति नाम । एव पुष्यः, श्रवण इत्यादीनि ।

चतुर्थं च नाम भवति घोषवदाद्यन्तरन्तःस्थमवृद्धं त्रिपुरुषानूकमनरिप्रतिष्ठित द्व्यक्षरं चतुरक्षरं वा कृदन्तमेव न तु तद्धितान्तम् । अयमर्थः–अस्य नामधेयस्यादौ घोषसञ्ज्ञको मध्ये चान्तःस्थसञ्ज्ञको वर्णः प्रयुज्यते । नाम्न आदौ वृद्धिसंज्ञकवर्णस्य प्रयोगो न क्रियते । पिता-पितामह-प्रपितामहेषु प्रसिद्धं शत्रुवर्गे चाप्रसिद्धमक्षरद्वयात्मकमक्षरचतुष्टयात्मकं वा कृत्प्रत्ययान्तं नाम करणीयं भवति, न तु तद्धितप्रत्ययान्तम् । यथा रामः, जयदेवः, जनार्दन इत्यादीनि नामानि ।

व्याकरणशास्त्रे सञ्ज्ञाया अष्टौ प्रयोजनान्युपलभ्यन्ते—१. लाघवेनार्थविबोधनम्, २. अन्वर्थतावबोधः, ३. सुखेनार्थविबोधः, ४. शब्दशक्तिनियमनम्, ५. धर्मावाप्तिः ६. मङ्गलाचरणम्, ७. पूर्वाचार्यकीर्तिरक्षणम्, ८. विविधकार्यसम्पादन च ।

लाघवेनार्थविबोधाय संज्ञा समाद्रियते किं बहुना, महाभाष्यकारमते नाम तदेव भवति यतो व्यवहारस्य लघुभूतमन्यत् किञ्चिदपि वस्तु नास्ति— "संज्ञा च नाम, यतो न लघीय." इति । शास्त्रे याः संज्ञा अन्वर्था न भवन्ति ता हस्तादिचेष्टावत् सकेतार्थबोधिका ताः —

यास्त्वेताः स्वेच्छया सञ्ज्ञा क्रियन्ते टि-घु-भादयः ।

हस्तचेष्टा यथा लोके तथा संकेतिता इमाः ॥ ( पदमञ्जरी )

यस्याः संज्ञायाः कश्चिद् योगार्थोऽपि भवति, सा संज्ञान्वर्था भवति । पाणिनीयाष्टाध्याय्यामुपसर्जनप्रभृतयो महत्यः संज्ञा अन्वर्थाः सन्ति । उक्तं च महाभाष्ये—

"महत्याः सञ्ज्ञाया· करणे एतत्प्रयोजनम्—अन्वर्थसंज्ञा यथा विज्ञायेत, अप्रधानमुपसर्जनम्" ( म० भा० १ २।४३ ) इति ।

पूर्वाचार्यैरन्यैश्च शाब्दिकाचार्यैर्महासंज्ञाः किमर्थमाश्रिता इति विषये तैत्तिरीयप्रातिशाख्यस्य वैदिकाभरणभाष्यकारेणोक्तम्—महासंज्ञया यौगिकार्थः पारिभाषिकार्थश्चावगम्यते । अयमेव हेतुर्महासंज्ञानां समाश्रयणे—

अन्वर्थत्वं महासंज्ञा व्यञ्जन्त्यर्थान्तराणि च ।
पूर्वाचार्यैरतस्तास्तु सूत्रकारेण चाश्रिताः ॥ ( १।२ )

लोकप्रसिद्धस्यार्थस्यावबोधकः शब्दो यदि शास्त्रेऽपि तदर्थे प्रयुज्यते तर्हि तदर्थावबोधनेऽवश्यं किञ्चित् सुखमनुभूयते । सम्प्रदानादिसंज्ञाप्रयोगविषये इदमेवाभिमतमुदीर्यते व्याख्याकारैः—

सम्प्रदानादयः संज्ञा रुचिधारिविर्विजताः ।
लोकोपचारतः सिद्धाः सुखबोधाय दर्शिताः ॥
( कात० वृ० टी० २।४।१६ )

४—संज्ञायाः प्रयोगेण शब्दशक्तेर्नियमनमपि भवति । यः शब्दः शक्तिवशान्नानार्थान् अभिधत्ते, तस्योच्चारणेन तदीयसर्वेषामर्थानां प्रतीतिर्भवति । परमेकत्र सर्वेषामर्थानां प्रतीतिर्मा भूत्, ईप्सितार्थस्यैव च प्रतीतिः स्याद् इति प्रयोजनं सर्वनामादिभिरुपपन्नं भवति । एवमाचार्यैः स्वेच्छया प्रयोगेऽपि संज्ञाना शब्दार्थसंबन्धस्य नित्यत्वं न विहन्यते—

"सर्वार्थाभिधानयोग्यशब्दस्य शक्तिनियमनमात्रं संज्ञाकरणमिति शब्दार्थसम्बन्धनित्यत्वस्यापि न विरोधः". ( म० भा० प्र० १।१।२७ ) इति ।

तासां संज्ञानां पाठेन कश्चिद् धर्मः प्राप्यते, यासां व्यवहारः ( विधिसूत्राणि ) स्वशास्त्रे नास्ति । एवञ्च ऋग्वेद–प्रातिशाख्ये पदवृत्तिसंज्ञाया उपादानविषये तदीयभाष्यकारेण उव्वटाचार्येण स्पष्टमुक्तम्—

"अत्र याभिः संज्ञाभिः शास्त्रकृद् व्यवहरति तावत्यः स्वव्यवहारार्थाः । याभिर्व्यवहारो नास्ति तासां ज्ञाने धर्मः फलम्"
( ऋ० प्रा०–उ० भा० २।२६ ) इति ।

शास्त्रादौ, शास्त्रमध्ये, शास्त्रान्ते च केनचित् संज्ञाशब्देन प्रयुक्तेन मङ्गलमपि क्वचिद् उपपन्नं भवति । यथा वाजसनेयिप्रातिशाख्ये पठितापि सोष्मसंज्ञा न कस्मिंश्चित् कार्ये विनियुज्यते । अतस्तस्यास्तत्र पाठस्य मङ्गलरूपं प्रयोजनमङ्गीक्रियते शिष्यसंव्यवहारार्थम्–
( द्र०–वाज० प्रा०–उ० भा० १।५४ ) ।

"वृद्धिरादैच्" ( अ० १।१।१ ) इति सूत्रे संज्ञिनिर्देशात् पूर्वं प्रयुक्तं 'वृद्धिः' इति संज्ञापदं महाभाष्यकारेण मङ्गलार्थं मन्यते—

"एतदेकमाचार्यस्य मङ्गलार्थं मृष्यताम्" इति ।

कार्यदृष्ट्या वृद्धिसंज्ञाया विविधानि प्रयोजनानि वर्तन्ते। तस्या मङ्गलरूपं प्रयोजनं तु केवलं संज्ञिभ्यः पूर्वमुपन्यासादेवास्तीति विज्ञेयम्।

कातन्त्रव्याकरणे "अवर्णादूटो वृद्धिः" (४।६।११६) इति सूत्रे औरिति कर्तव्ये यद् वृद्धिग्रहणं कृतं तस्य प्रयोजनं ग्रन्थान्ते मङ्गलमङ्गीक्रियते व्याख्याकारैर्दुर्गसिंहादिभिः—

"औरिति वक्तव्ये वृद्धिग्रहणं मङ्गलार्थम्"

(कात० वृ० ४।६।११६)।

पूर्वाचार्यकृतानां यासां संज्ञानां पाठः परवर्तिनाचार्येण क्रियते परं विधिसूत्राणि न क्रियन्ते, तासां पाठेन पूर्वाचार्याणां कीर्तेः परिरक्षणं भवतीति न तासां पाठो व्यर्थः, किं च पूर्वाचार्यकीर्तिरक्षकत्वात् सार्थक एवेति शुक्लयजुःप्रातिशाख्यस्य भाष्यकारेण उव्वटेन ग्राह्यं किञ्चिन्मतं दर्शितम्। (द्र०—यजुःप्राति०—उ० भा० १।५४)।

काचिदपि संज्ञा नैकेन प्रयोजनेनोच्यते, किं च तस्या अनेकानि प्रयोजनानि भवन्ति। महाभाष्यकारादिभिरेतद् व्याख्यातमेव यदेकेन संज्ञासूत्रं नारभ्यते। "नैकं प्रयोजनं योगारम्भं प्रयोजयति" इति भाष्यवचनव्याख्यावसरे कैयटेन स्पष्टमुक्तम्—

"अनेककार्यसिद्ध्यर्थं संज्ञासूत्रं नैकेन प्रयुज्यते इत्यर्थः। अन्यत्तु सत्रमेकेनापि प्रयुज्यते—मुद्गादण्" (म० भा० प्र० १।१।१२) इति। एतेन संज्ञा विविधप्रयोजनवती भवतीति सिध्यति। यथा पाणिनीये "वृद्धिरेचि" (अ० ६।१।८८) इत्यादिसूत्रेषु वृद्धिसंज्ञा तदीयसंज्ञिनां विधानाय व्यवहृता, "वृद्धिर्यस्याचामादिस्तत् वृद्धम्" (अ० १।१।७३) इत्यादौ वृद्धिमुद्दिश्य वृद्धसंज्ञाप्रभृतीनि च कार्याणि निर्दिष्टानि।

कातन्त्रादिव्याकरणेष्वपि संज्ञाया विविधानि कार्याणि प्रयोजनानि च दृश्यन्ते।

एवं संज्ञाव्यवहारस्य लोकोपयोगीनि त्रीणि शास्त्रदर्शितान्यष्टौ च प्रयोजनानि संक्षेपेणेह व्याकृतानि। तेषामयमेव निष्कर्षः साधीयान् प्रतिभाति यत् तत्तदीयगुणक्रियाकर्मादेः परिज्ञानार्थं नामानि विज्ञेयानि भवन्ति सर्वत्र। नाम्नामवश्यविज्ञानविषये शौनकस्येदं वचनमविस्मरणीयमेव—

अवश्यं वेदितव्यो हि नाम्नां सर्वस्य विस्तरः।
न हि नामान्यविज्ञाय मन्त्राः शक्या हि वेदितुम्॥

(बृ० दे० १।८०) इति।

अनुसन्धानाधिकारी
सम्पूर्णानन्द संस्कृत वि० वि० वाराणसी

# अङ्गनायकाः

रामजी उपाध्यायः

फलभागङ्गी नायको भवति। नाटकीयकार्यव्यापारेऽव्यवसिताः शेषाः स्त्री-पुरुषा अङ्गनायका इत्युच्यन्ते। एतेषां द्विधा विभाजनं समीचीनम्—प्रधाननायकस्योपकारकाः प्रतिनायकस्तस्योपकारकाश्च। तेषु प्रधाननायक-पक्षतः प्रथम स्थानं कार्यनायकस्य विलसति।

## कार्यनायकः

मुद्राराक्षसे चाणक्यवत्, प्रतिज्ञायौगन्धरायणे यौगन्धरायणवत्, वेणी-संहारे भीमवच्च सर्वं नाटकीयं कार्यजातं कार्यनायकः फलोन्मुखं प्रवर्तयति। अत एव नाट्ये प्रधाननायकादपि अधिकतरमुत्कृष्टं तस्य स्थानं प्रत्यक्षतः प्रतिभासते। फलनायको रङ्गे केषु चिन्नाटकेषु न दृश्येत, क्वचिदेव दृश्येत वा, किन्तु कार्यनायकस्तत्र स्वानुपस्थितावपि सामाजिकान् सततं प्रभावयत्येव। स बीजादारभ्य फलपर्यन्तं चेष्टमानः परिलक्ष्यते। बहुषु नाटकेषु प्रधाननायक एव कार्यनायकोऽपि भवति।

## उपनायकः

नाटकीयेतिवृत्ते क्वचित् पताकावृत्तं, प्रकरीवृत्तं च वर्तेते। एतयो-र्द्वयोर्नायकौ 'उपनायकौ' इति प्रोच्येते। पताकानायकस्तु कथामध्ये प्रकटति। अनुबन्धानुसारेण प्रथमं तस्य समीहितं नायकः साधयति, पश्चात् स नाटकान्तं यावन्नायकस्य साह्यमाचरति। प्रकरीनायकस्य स्वार्थस्तु परार्थ एव। सोऽपि नाटकान्तं यावन्नायकार्यं साधयेद्यथोत्तर-रामचरिते वाल्मीकिः। कथामध्य एव तस्यापि आविर्भावो लक्ष्यते।

## अनुनायकः

नायकस्याद्यन्तं साह्यमाचरन्ननुनायको विशेषतो महाकाव्येषु लक्ष्मण-वद् विभाति। न स कार्यनायकवत् स्वतन्त्रः, न चापि पताकानायकवत् स्वार्थसाधकः। स प्रकरीनायकवन्नि-स्वार्थो भवति, किन्तु नायकस्यानु-पस्थितिं न सहते। अनर्घराघवे लक्ष्मणोऽनुनायकभूमिकां निर्वहति।

## पीठमर्दः

धनञ्जयानुसारेण पताकानायको पीठमर्दो भवति। पीठमर्दस्तावत् पारिभाषिकं पदम् । न तत्र पीठं न च मर्दनं व्युत्पन्नम् । पीठमर्दस्तु नायकस्यानुचरः, भक्तः, गुणैः प्रधाननायकात् किञ्चिदूनो विचक्षणः स्यादिति धनञ्जयो दशरूपके निदर्शयति ।[1]

शारदातनयानुसारेण पताकानायक एवोपनायको भवति । शारदातनयः पीठमर्द इति पदं व्युत्पन्नं मन्यते । तद्यथा,

पीठमध्यास्य पुरतः प्रयोक्ता नायिकादिषु ।
स पीठमर्दो विश्वास्यः कुपितस्त्री-प्रसादकः ।।

पीठमर्दस्तन्मतेन विदूषको भवति[2] । न हि खलु सुग्रीवादयः पताकानायकाः पीठमर्दाः । पीठमर्दास्तु नायिकाप्राप्तौ एव नायकस्य सहायाः । नैतन्निर्दिष्टं धनञ्जयेन । स तु पताकानायकं पीठमर्दं च पर्यायं मन्यते इति चिन्त्यम् ।

विदूषकस्य स्थानं शृङ्गारितनाटकस्य पात्रत्रय्यां वर्तते इत्यनेन तस्य महत्त्वं सूचितम्[3] । स नायकस्य राज्ञो नर्मामात्यः पारिपार्श्विकेषु गणितः[4] ।

कालिदासानुसारेणायं विदूषको राज्ञः प्रियसखो ब्राह्मणो भवति[5] । स प्रणयात्मकेषु रूपकेषु नायकस्य प्रथमः सहायको वर्तते । स तु न केवलं राज्ञामेव हासकारकोऽपि तु देवानामपि । तद्यथा भरतो वर्णयति—

लिंगी द्विजो राजजीवी शिष्यश्चेति यथाक्रमम् ।
देवक्षितिभृतामात्यब्राह्मणानां प्रयोजयेत् ।। २४.२०

अभिनवगुप्तानुसारेण देवानां विदूषकः लिङ्गी ऋषिर्भवति । राज्ञां विदूषकः कश्चिद् ब्राह्मणो नियुज्यते । अमात्यस्य विदूषको राजजीवी

---

१—दश० २.८

२—भावप्रकाशने पृ० ९४

३— नायकं रक्षतीन्द्रस्तु नायिकां च सरस्वती ।
विदूषकमथोङ्कारः शेषास्तु प्रकृतीर्हरः ।। ना. शा. १–६७

४—ना. शा. ५.२८ अधिकृत्यभारती ।

५. विक्रमोर्वशीये पञ्चमाङ्के ।

भवति । ब्राह्मणानां विदूषकः शिष्य एव नियोजनीयः[1] विशेषतो राज्ञो विदूषकस्य प्रमुखं स्थानमासीत् रूपकेषु । तद्यथा,

विप्रलम्भसुहृदोऽमी संकथालाप-पेशलाः ॥ ना० शा० २४. २१

भरतो विदूषकस्य विशेषं वर्णयति—

प्रत्युत्पन्नप्रतिभो नर्मकृतो नर्मगर्भे निर्भेदः ।
छेकविदूषितवचनो विदूषको नाम विज्ञेयः ॥ ३५. २५

अप्रणयात्मकेषु नाटकेषु क्वचिद् विदूषकस्य स्थानं नासीत् । उत्तररामचरिते, वेणीसंहारे, मुद्राराक्षसे च विदूषकाभाव प्रमाणयति यत् गम्भीरार्थचिन्तनस्य वैदुष्यपूर्णप्रकृतौ विदूषकस्य हास्यादिकमवांछितमिति सुसम्मतम् । रामकाव्यात्मक-नाटकेषु विदूषकोऽपवाद एव ।

विदूषकस्य विवरणं दशरूपकेऽतिन्यूनमेव वर्तते ।

हास्यकृच्च विदूषकः । २. ६

स तु न केवलं वाचापितु स्वरूपेण, वेषेण च हास्यमुदपादयत् । भरतानुसारेण—

विदूषकस्य खलतिः स्यात् काकपदमेव वा । २१. १५५
दन्तुरः खलतिः कुब्जः खञ्जश्च विकृताननः ।
यदीदृशः प्रवेशः स्यादङ्गहास्यं तु तद्भवेत् ।
यदा तु वकवद् गच्छेदुल्लोकितविलोकितैः ।
अत्यायतपदत्वाच्च अङ्गहास्यो भवेत्तु सः ॥
काव्य—हास्यं तु विज्ञेयमसम्बद्ध—प्रभाषणैः ।
अनर्थकैर्विकारैश्च तथा चाश्लीलभाषणैः ॥
चीरचर्ममषीभस्मगैरिकाद्यैस्तु मण्डितः
यस्तादृशो भवेद् विप्रा हास्यो नेपथ्यजस्तु सः ॥

ना. शा. १२.१३८–१४१

---

१. भगवदज्जुकीये प्रहसने धूर्तसमागमे च आचार्यस्य शिष्यः शाण्डिल्यो दुराचारश्च विदूषको एव प्रयुक्तः । प्रतिज्ञायौगन्धरायणेऽमात्यस्य यौगन्धरायणस्य विदूषकः प्रयुक्तः ।

विदूषकस्तु कुरूपो वानररूपो वासीदिति रूपकेषु प्रायशो वर्णितम्।
कालिदासो विदूषकमालेख्यवानर इवेति चित्रयति।[1] नागानन्दस्य तृतीयाङ्के विटो विदूषकं कपिलमर्कट इति सम्बोधयति। करुणावज्रायुधे चन्द्रसूरिर्विदूषकं वर्णयति—

पादौ वक्रौ धनुरिव कटिर्वज्रमध्यानुकारा।

## विटः

विटस्तु नाट्यशास्त्रीयो वैशिक एव। भरतानुसारेण अयमधमो नाट्यकथापुरुषः। वेशप्रधान–प्रकरणेषु विटो नायको भवितुमर्हति। न सोऽधमो भवति। यथा मृच्छकटिके चारुदत्तः।
वेश एव वेश्या। वेश्योपचारे साधुः वैशिकः।[2] भरतस्तस्य त्रयस्त्रिंशद् गुणान् निवोधयति। तद्यथा,

शास्त्रविच्छिल्प-सम्पन्नो, रूपवान्, प्रियदर्शनः, विक्रान्तः, धृतिमान्, वयोवेषकुलान्वितः, सुरभिः, मधुरः, त्यागी, सहिष्णुः, अविकत्थनः, अशङ्कितः, प्रियभाषी, चतुरः, शुभदः, शुचिः, कामोपचारकुशलः, दक्षिणः, देशकालवित्, अदीनवाक्यः, स्मितवान्, वाग्मी, दक्षः, प्रियंवदः, स्त्रीलुब्धः, संविभागी, श्रद्धानः, दृढस्मृतिः, गम्यासु चाप्यविस्रम्भी, मानी च।[3] अनेन विटः प्रतिष्ठतो नागरिकः प्रतिभाति।

शारदातनयस्य विटः पूर्वोक्तवैशिकेन समान एव। तद्यथा—

वेशोपचारकुशलो मधुरो दक्षिणः कविः।
ऊहापोहक्षमो वाग्मी चतुरश्च विटो मतः।
विटश्च कामसाचिव्यकरणे चोपयुज्यते।
माल्यभूषोज्ज्वलः कुप्यत्यनिमित्त प्रसीदति।
विटः प्राकृतवादी च प्रायो बहुविकारवान्॥[4]

सिंहभूपालोऽपि विटं प्रायशः सर्वगुणसम्पन्नं परिभाषते।

---

१. विक्रमोर्वशीये प्रथमद्वितीयाङ्कयोर्मध्ये मिश्रविष्कम्भके। तत्रैव पञ्चमाङ्के स्वयमेव विदूषक आत्मानं निवेदयति— 'नन्वाश्रमवासपरिचित एव शाखामृगः।'
२. वेशोपचारे साधुर्वा वैशिकः परिकीर्तितः। ना. शा. २३. १
३. ना० शा० २३. २–७
४. भावप्रकाशने पृ० ९४, २९७ २७६

वैशिकस्य विटस्य वा पूर्णपरिचयश्चतुर्भाणी नामकेनोपरूपकचतुष्टयेन प्रतिफलति। तत्र नायका अनायका वा विटा वेश्योपचारे सम्यक् प्रवर्तन्ते। ते तत्र राजकुमारा ब्राह्मण-युवका, वणिजः, शूद्रा वा सर्वे वेश्यानिरता एव स्वजीवनं सफलयन्ति। वृद्धोऽपि विटो स्वानुभवेन प्रवीणः सन् कामुकान् वेश्याश्च परामर्शैर्बोधयति।

भाणनामके रूपके वैशिको वा विटो वानुत्तमोऽपि वेशोपचार-कर्मणि न विशेषमहत्त्वपूर्णं स्थानं भजते, यथा मृच्छकटिकादिषु प्रकरणेषु। अस्मिन् प्रकरणे स शकारस्य मित्रमेव तस्य कामुकतां सम्पूरयति।

ईदृशो महत्त्वपूर्णो विटो धनञ्जयेनातिसंक्षेपेण वर्णितः —

एकविद्यो विटश्चान्यः।

बहुरूपमिश्रानुसारेण सैकविद्या मन्मथतन्त्रमेव। विटस्तु केवलं हास्य-शृङ्गारात्मकरूपकेष्वेव विलसतीति अभिनवगुप्तमतम्।[1]

## शकारः

शकारस्तु भरतेन परिभाषितोऽद्भोविधो वर्तते—

शकाराभीरचण्डालशबरद्रमिलान्ध्रजाः॥

शकारघोषकादीनां तत्स्वभावश्च यो गणः

शकारभाषा योक्तव्या चाण्डाली पुल्कसादिषु॥ १७.५४

अनया कारिकया स्पष्टं प्रतिभाति यत् नाटकीया प्रकृतिः शकारः कस्याश्चिद् शकारनाम्न्या विशिष्टजातः प्रतिनिधीभूतो नृपस्य नायकस्य सान्निध्यमभजत्। अभिनवगुप्तोऽपि तत्रैव शकाराणां जातिं मन्यते। तस्या जातेः सामान्यलक्षणं स प्रवदति—शकारा नीचाभिजना आर्थीभूतत्वेन सदर्पाः। मानियरविलियम्स-महोदयः स्वकोशे शकारं व्याख्याति—'शक-वंशीयः, शकः, राजश्यालः (राज्ञो हीनकौलिकपत्न्या भ्राता), नाटकेषु मूर्खः, हास्यास्पदः, सदर्पः, नीचः, निर्दयश्च, यथा मृच्छकटिके संस्थानकः। स शकारीं (शपरायणां भाषां) वदति। अभिनवगुप्तः शकारमद्योविधं बहुलीकरोति—

शकारबहुला यस्य भाषा स शकारः। शकारोपलक्षितशकारजनपद-वासीत्यन्ये। यद्वक्ष्यते—'शकाराभीरचण्डाल' इत्यादि। हीनाशय उत्तम-पदेऽभिरोपितः शकार इत्यन्ये[2]।

---

१. अभिनवभारतीप्रथम खण्डे पृष्ठं ३२

२. ना० शा० १२.१४८ अधिकृत्य भारती।

अभिनवगुप्तानुसारेण। योग्यतां विनापि शकारः मूर्धन्यपदेऽधिष्ठित आसीत्। वस्त्राभरणसंस्पर्शालोकनगर्व-योगः शकारस्य तेन वर्णितः। स विशेषयति—न चार्यदेशजातिः शकारः कश्चित् प्रसिद्धः। स म्लेच्छ-जातीयः।[1]

## बाह्यसहायाः

भरतानुसारेण (युव-) राजः, सेनापतिः, पुरोधाः, मन्त्री, सचिवः, प्राड्विवाकः, कुमाराधिकृतश्च, नायकस्य सहायाः सन्ति। अन्येऽपि तत्र सहाया भवेयुरिति भरत आह—

एते चान्ये च बहवो मान्या ज्ञेया नृपस्य तु। २४, ७५

भरतनिर्दिष्ट-सहायेषु युवराजः सेनापतिः, सचिवः, प्राड्विवाकः, कुमाराधिकृतश्च धनञ्जयेन न सगृहीताः। अस्मिन् प्रसङ्गे नायकस्य सहायो राजा भवेदिति भरतः स्पष्टयति[2]। कथं नाम राजा स्वयमेव स्वकीयः सहायः स्यादिति सन्देहे समुत्पन्नेऽभिनवगुप्तो व्याख्याति—युव-राजोऽत्र राजशब्देनोक्तः। अत्र धनञ्जस्याधोलिखित-कारिकाभिनवगुप्त नानुसरन्ती किंचिन्नवीनं तथ्यमुद्घाटयति—

मन्त्री स्वं वोभयं वापि सखा तस्यार्थचिन्तने। दश० २.४२

कथं कश्चिद् राजा नायकः स्वयमेव स्वकीयः सहायः स्यादिति समा-हितमेव—

राजा यदान्यस्य कस्यचिन्मन्त्रिणो वा दूतस्य वा कार्यं करोति तदा स स्वयमेव स्वकीयः सहायः। अन्यत्रापि धनञ्जयो नायिकासहायेषु स्व इति गणयति तत्र धनिकानुसारेण नायिका स्वयंदूती भवति।

शारदातनयस्तावद् वैतालिको, वन्दी मङ्गलपाठकः, सूतो, मागध-श्चेति सहाया इति गणयति।

---

१. ना० शा० १२,१४८ अधिकृत्य भारती।

२. राजा सेनापतिश्चैव पुरोधा मन्त्रिणस्तथा।
सचिवाः प्राड्विवाकाश्च कुमाराधिकृतास्तथा॥ २४, ७५

धनञ्जयेन तपस्वी ब्रह्मवादी, सुहृत्, कुमारः, आटविकः, सामन्तः, सैनिकः, वर्षवरः, किरातः, मूकः वामनः, म्लेच्छः, आभीरः, शकारः इति बहुजना नायकोपकारकाः परिगणिताः[1]।

सर्वे ते नायकस्य सहाया गुणानुसारेण ज्येष्ठाः, मध्यमाः, अधमा वा भवन्ति।

## प्रतिनायकः

धनञ्जयानुसारेण प्रतिनायकस्तु—

'लुब्धो धीरोद्धतः स्तब्धः पापकृद् व्यसनी रिपुः'

दश० २.९

एतादृशेन प्रतिनायकेन नायकस्य मर्यादा नश्येदिति विचारणया प्रतिनायक–विषयकं रुद्रटमतं समीचीनं प्रतिभाति यत् स गुणी, अभिजातश्च स्यात्। पामरः प्रतिनायकः सहानुभूतिं न जनयेदित्यपि विचारणीयम्।



---

१. दशरूपके २. ४३-४४

# स्वर-विवेचनम्

डा० युगलकिशोरमिश्रः

प्रातिशाख्यवाङ्मये वर्णसमाम्नायस्योपदेशः कात्यायनकृते वाजसनेयिप्रातिशाख्ये एव दृष्टिगोचरो भवति। तत्र स्ववैशिष्ट्यात्, ध्वनेः आधारभूतत्वाच्च स्वर-वर्णानां प्रथमतयोपदेशः। अनुशीलनेनेदं ज्ञानं भवति यत् 'स्वर' शब्दस्य विविधा अर्थप्रयोगाः सन्ति।

( क ) 'स्वृ शब्दोपतापयोः' इति धातोः करणे घ प्रत्यये सति निष्पद्यते स्वर शब्दः[1]। तेन हि स्वर्यते शब्द्यतेऽनेन व्यञ्जनमिति निर्गलितोऽर्थः। शिक्षावल्ल्यामपि तथ्यमिदमेवमुक्तम् स्वर्यते शब्दयते व्यञ्जनमेभिः, इति।

( ख ) वेदाङ्गनिघण्टौ स्वरशब्दो वाङ्नामसु पठितः उक्तञ्च—"जिह्वा। घोषः। स्वरः। ( नि० १।११।११ ) इति। तत्र स्वर शब्दो वागर्थे उपयुज्यते। यथा—"तीर्थे सिन्धोरधिस्वरे।[2] अत्र स्वरोपेते शब्दवतीति सायण.। स्वरैर्युक्ता शब्दात्मिका वागिति। एवमत्र स्वरशब्दो वागर्थमभिव्यनक्ति।

( ग ) वेदारम्भे अन्ते च यस्त्रिमात्रिकः प्रणवः "ओम" इत्युच्चार्यते सोऽपि स्वर एव। उक्तञ्च--तैत्तिरीयोपनिषदि—यो वेदादौ स्वरः प्रोक्तः वेदान्ते च प्रतिष्ठितः इति।[3]

( घ ) निघण्टौ स्वरतीति पदं गत्यर्थक धातुषु परिगणितमस्ति।[4] अतश्च 'स्वरशब्दस्य व्युत्पत्तिः'—स्वर्यन्ते गम्यन्ते ज्ञाप्यन्ते अर्था एभिः इति भवति। अनयैव व्युत्पत्या वेदार्थज्ञापकत्वात् उदात्तानुदात्तस्वरिता अपि स्वर संज्ञया व्यवह्रियन्ते।

---

१—इदमप्यत्रावधेयं यत् स्वार शब्दोऽपि स्वृ धातोः करणे घञ् प्रत्यये कृते सति निष्पद्यते। एवं स्वृ धातोः गुणे रपरे च कृते 'स्वर' इति वृद्धौ तु 'स्वार' इति चैव रूपद्वयं जायते। अतश्च स्वर एव स्वार इति

२—ऋ० सं० ८'७२।७

३—तै० उ०

४—नि० २।१४

तदत्र स्वरशब्दस्य वर्णविशेषद्योतने एव मुख्यप्रयोगः कृतः शाब्दिकैः । अतएव "स्वयं राजन्ते नाऽन्येन व्यञ्जन इति स्वराः" इत्यभिप्रयन्ति वैदिकाभरणकाराः ।[१] स्वर्यन्ते शब्द्यन्त इति स्वराः" इति तु उवटाचार्यपादाः[२] पतञ्जलयस्तु स्वयं राजन्त इति स्वराः[३] । एवं वर्णान्तरनैरपेक्ष्येण स्वतन्त्रतया स्वसम्भवोच्चारणं येषां भवितुमर्हति ते स्वराः ज्ञेया । अतश्च वेदाङ्गशिक्षासु प्रातिशाख्येषु ऋक्तन्त्रादिषु व्याकरणेषु च स्वरशब्दः अकारादौ प्रयुक्तः । तेषां स्वराणामानुपूर्वी द्विधा । प्रथमा–वेदाङ्गोक्ता नैगमिका, द्वितीया–आगमिका वर्णमालोक्ता चेति । वेदाङ्गशिक्षायाम्—

द्विविधं वर्णजातं हि स्वरो व्यञ्जनमुच्यते ।
अकारादि स्वरो ज्ञेयः कादिव्यञ्जनमुच्यते ॥[४]

तत्र अकारादियो वर्णसमूह एकविंशतिसंख्याकः स स्वरसंज्ञया ज्ञेयः । तत्र अ, इ, उ, ऋ, ऌ इति पञ्चप्रकृतिभूताः । ए, ऐ, ओ, औ इति चत्वारः प्रकृतिविकृतिभूताः । आ, ई, ऊ, ॠ, इति चत्वारो विकृतिभूताः । तत्र अवर्ण–इवर्ण–उवर्णश्च कालभेदेन ह्रस्वदीर्घप्लुतसंज्ञया त्रिधा विभक्ता नव संख्याका भवन्ति । ऋवर्णो ह्रस्वदीर्घभेदेन द्विविधः ।[५] ऌवर्णोऽप्यत्र ह्रस्वप्लुतभेदेन द्विविधः । चत्वारः सन्ध्यक्षरा दीर्घप्लुतभेदेन द्विविधाः । एवं रीत्या एकविंशति संख्याकाः स्वराः सम्पद्यन्ते । उक्तञ्च—

त्रिषष्टिश्चतुष्षष्ठिर्वा वर्णाः शम्भुमते मताः ।
प्राकृते संस्कृते चापि स्वयं प्रोक्ता स्वयम्भुवा ॥
स्वरा विंशतिरेकश्च स्पर्शाना पञ्चविंशतिः ॥[६]

अथ च ऋक्प्रातिशाख्ये द्वादश स्वरा उक्ताः । यथा—अ, आ, ऋ, ॠ, इ, ई, उ, ऊ, ए, ऐ, ओ, औ, इति । उक्तञ्च—

"अष्टौ समानाक्षराण्यादितः । ततश्चत्वारि सन्ध्यक्षराण्युत्तराणि । एते स्वराः ।"[७]

---

१—तै० प्रा० १।५ वै० आ० भा०
२—ऋ० प्रा० १।१३ उ० भा०
३—म० भा० १।२।२९
४—शं० शि० ३ श्लो०
५—कातीयप्रतिशाख्ये ऋवर्णस्य प्लुतस्वरूपमपि निर्दिष्टम् । द्र० वा० प्रा० ।
६—पा० शि० ३–४ ।
७—ऋ. प्रा. १।१–३

अत्र 'अं' इत्यनुस्वारः विकल्पेन स्वरधर्मवान् भवति[1]। अन्यत्र च शुक्लयजुप्रातिशाख्ये त्रयोविंशतिसंख्याकाः स्वराः कथिताः अकारादिलृकारान्ताः ह्रस्वदीर्घप्लुतभेदेन त्रिधाभूताः पञ्चदशसंख्याका भवन्ति। ततश्चत्वारि सन्ध्यक्षराणि–ए, ऐ, ओ, औ इति दीर्घप्लुतभेदेन द्विधा भवन्ति। उक्तञ्च—"त्रयोविंशतिरुच्यन्ते स्वराः शब्दार्थचिन्तकैः।[2]

अपरञ्च तैत्तिरीय प्रातिशाख्ये षोडशसंख्याकाः स्वरा भवन्ति। अ, इ, उ, एते त्रयः स्वराः ह्रस्वदीर्घप्लुतभेदेन त्रिधाभूताः नवसंख्याका ऋवर्णः ह्रस्वदीर्घभेदेन द्विविधः, लृवर्णस्तु केवलो ह्रस्वमात्रिकः, ए, ऐ, ओ, औ एते चत्वारः केवलाः दीर्घमात्रिकाः। एवंविधया षोडशसंख्याकाः स्वरास्तैत्तिरीये उक्ताः। उक्तञ्च—"षोडशादितः स्वराः"।[3]

अपि च पाणिनीये—अ, इ, उ, ऋ, लृ, ए, ओ, ऐ औ इति 'अच्' प्रत्याहारत्वेन स्वराः परिगृहीताः। "अच स्वरा": इति वरदराजाचार्याः।

एव स्वरशब्देन वेदे अकारादौकारान्तो वर्णसमाम्नायो विशेषेण परिगृहीतः। लौकिक-साहित्ये स्वरशब्दः रुत, नाद, रव, ध्वनिशब्दपर्याय। यथा कण्ठस्वरः, विहगस्वर, भाण्डनादस्वरः, इत्यादयः। अत्र स्वरशब्देन सजीवनिर्जीवपदार्थानामभिव्यञ्जकं प्राकृतिकध्वनिमात्रमेव। अस्य स्वरशब्दस्य अर्थेन साकं कश्चनविशेषसम्बन्धो नास्ति। अतः "स्वरणं स्वरः" इति भाववाचकव्युत्पत्त्या लौकिकसाहित्ये प्रयुक्तस्य स्वरशब्दस्य स्वरूपं स्थिरं भवति।

## स्वराणामर्थवत्त्वम्

स्वराणामुदात्तानुदात्त–स्वरिता इति त्रयो भेदाः सन्तीति पूर्वमेवोक्तम्। परञ्चैते अस्वतन्त्राः सन्त एतेषामेव पूर्वोक्तानां वर्णानां धर्मपराः। अकारादि–स्वराणामुच्चारणे अन्येषां वर्णानां साहाय्यं नापेक्षते। अतएव व्याकरणमहाभाष्यकारेण महर्षिणा पतञ्जलिना स्वरव्युत्पत्ति–विषये प्रोक्तं यत् "स्वयं राजन्त इति स्वराः। एते स्वरा वर्णानां सहिताक्रस्णे लौकिकभाषानिर्माणे अन्वर्थकव्युत्पत्तिरूपाः। यदा वयं धर्मधर्मिसम्बन्धेन तेष्वेव स्वरेषूदात्तानुदात्तस्वरितेति त्रयाणां धर्माणां विशिष्ट दर्शनमभिलषामस्तदा पूर्वोक्तया व्युत्पत्त्या सङ्गतिर्न जायते।

---

१—अनुस्वारो व्यञ्जनं वा स्वरो वा। ऋ० प्रा० १।१५

२—शु. प्रा० ८।२८

३—तै० प्रा० १।५

एतस्मादेव कारणाद् वेदाङ्गभूतशिक्षा-प्रातिशाख्यग्रन्थेषूदात्तादि स्वराणा-मुच्चारणस्य विशिष्टलक्षणं विशिष्टयाभिव्यक्त्या पारिभाषिकेषु शब्देष्व-तीवावश्यकं सञ्जातम्। सविशिष्टाभिव्यक्त्यै उदात्तादिस्वराणां स्थाने क्रमेण आयाम-विश्रम्भाक्षेपादिरूपां पारिभाषिकी अन्वर्थां च संज्ञा कृता।[1]

एते उदात्तादि-वैदिकस्वरा न केवलं विशिष्टस्थान-प्रयत्नैरुच्चरित-ध्वनिमात्राः। अपितु स्वतन्त्रार्थ प्रत्यायन-विशष्टयोग्यता सिद्धाः। अत एवोक्तं निरुक्तकारैः—"अर्थमप्रतियतो नात्यन्तं स्वरसंस्कारोद्देशः"।[2] अर्थविशेषस्य प्रतीतिरेव स्वराणां तत्संस्काराणाञ्चोद्देशः। अतः स्वराः वेदे एव विशिष्टार्थबोधका भवन्ति। उक्तञ्च साहित्यदर्पणकारेण—"स्वरस्तु वेद एव विशेष-प्रतीतिकृत्".[3] अतएव तैत्तिरीय संहितान्तर्गते "त्वष्टाहतपुत्र"[4] इत्यनुवाके इन्द्रवधार्थमुद्युक्तो हतपुत्रस्त्वष्टा स्वर-स्खलनेन स्वयमेव हत इति आख्यायिका सर्वत्र चारितार्थभूत्। ऋग्वेदभाष्यकारेण वेङ्कटमाधवेनाप्युक्तं यद् वेदे स्वरेणैवार्थव्यवस्था भवितुं शक्यते। उक्तञ्च—"माधवस्य त्वयम्पक्षः स्वरेणैव व्यवस्थिति"।[5]

अतएवेदं सिद्धं यद् वैदिकानां शब्दानामुच्चारणं कर्त्तुं तस्य सम्प्र-दायानुगतं-स्वरज्ञानं प्राथमिकं परमावश्यकञ्चेति।

प्रवक्ता-संस्कृतविभागे
काशी-हिन्दू-विश्वविद्यालये
वाराणसी

---

१—ऋ० प्रा० ३।१ एवं शु० वा० प्रा० १।१०८-१०
२—नि० १।५।१५
३—सा० द० परि० ३
४—तै० सं० २।४।१-२।१
५—ऋग्वेदानुक्रमणी १।१।२५

# "संस्कृतरूपकेषु सूत्रधारः"

ओ३म्प्रकाशः राजपाली

अनकसस्कृतरूपकाणां प्रस्तावनासु सूत्रधारस्यास्तित्वस्य ज्ञानं भवति। रूपकाणा प्रयोगेण स जन-जीवने महत्त्व लभतेस्म। प्राचीनकाले सूत्रधाराणा मण्डल्योऽभवन्। या मण्डल्यः सूत्रधारस्य नेतृत्वे द्वीपाद्-द्वीपे नाट्य-प्रदर्शनार्थ प्रयोगार्थं वा पर्यटनमकार्षुः।[१] यदाभिनेतारो देशादेकास्मात्-परदेशेऽभिनयार्थं गच्छन्तिस्म तदा तस्यैव देशस्य भाषां प्रायुज्यन्त, यस्मिन् देशेऽभिनयकाव्यस्य रचना कृता स्यात्।[२] एतेषा प्रमुखं प्रयोजनं नाटचप्रदर्शनमासीत्। अस्माद्धेतोर्नाटचकलायाः प्रचारे प्रसारे च नटानां सातिशयं योगदानमासीत्। इत्थं नाटचकलायाश्चरमोत्कर्षस्य सम्पादने नटानां गौरवास्पदं स्थानं भवेत्।

नटमण्डल्यः पुरातनकथानां जनेषु प्रचारं कृत्वा तासा मौखिकरूपेण प्रतिष्ठाकरणरूपं महत्त्वपूर्णं कार्यमकुर्वन्। नटमण्डलीनां नाटच-शालाया निर्माणेऽपि महत्त्वपूर्ण-योगदानं परिलक्ष्यते। सर्वप्रथम एतासां नटमण्डलीनां नाटचप्रदर्शनेन प्रभावितो भूत्वैव वहवो राजानो नाटच-शालाया निर्माणमारभन्त। राज्ञां राजधानीषु चतुर्दिक्षु महाद्वारेभ्यो निर्गतानां राजपथानामुभयोः पार्श्वभागयोः द्वे नाटचशाले अभूताम्।[३]

नटमण्डलीनां प्रमुखं प्रयोजनमासीत् नाट्यकलायाः साधना उन्नति-

---

१—सूत्रधारः—अलमतिविस्तरेण। भो भो लवणोदवेला-वनालीत मालतरुकन्दलस्य त्रिभुवनमौलिमण्डनमहानीलमणेः कमलाकुचकलशकेलिकस्तूरीकारपत्राङ्कुरस्य भगवतः पुरुषोत्तमस्य यात्रायामुपस्थानीयाः सभासदः, कुतश्चिद् द्वीपादागतेन कलहकन्दलानाम्ना कुशीलवेन रौद्रबीभत्सभयानकादभुतरस-भूयिष्ठं कमपि प्रबन्धमभिनयता नित्यं किलायमुद्वेजितो लोकः।—अनर्घराघव प्रस्तावनायाः।

२—संस्कृत साहित्यस्य आलोचनात्मक इतिहास (द्वि० भागः) पृष्ठे—१५, डॉ० रामजी उपाध्यायः

३—संस्कृत साहित्यस्य आलोचनात्मक इतिहास (द्वि० भागः) पृष्ठे-१८, डॉ० रामजी उपाध्यायः।

श्च। एतादृशस्य महत्त्वपूर्णोद्देश्यस्य प्राप्त्यै सुनिश्चितं ताभिः भूयिष्ठः परिश्रमः कृतः। तत् एतादृक् महल्लक्ष्यमधिगन्तॄणां कलाकाराणां संघस्य संचालकसूत्रधारविषये विचारः स्वाभावतो मनसि समुदेति। सूत्रधारस्य विषये भरतस्येत्थं कथनमस्ति—

नाट्यस्य यदनुष्ठानं तत्सूत्रं स्यात्सबीजकम्।
रङ्गदैवतपूजाकृत्सूत्रधार उदीरितः॥

शारदातनयः भावप्रकाशने सूत्रधारस्य व्युत्पत्तिं निर्दिशन् कथयति यत् सूत्रधारो नाटकस्य कथा-वस्तुनायकरसादीनां सूत्ररूपेण ( संक्षेपेण ) वर्णनं करोति तस्मात् सूत्रधारः कथ्यते। यथा—

सूत्रयन्काव्यनिक्षिप्तवस्तुनेतृकथारसान्।
नान्दी-श्लोकेन नान्द्यन्ते सूत्रधार इति स्मृतः॥
आसूत्रयन् गुणान्नेतुः कवेरपि च वस्तुनः।
रङ्गप्रसाधनप्रौढः सूत्रधार इहोच्यते॥
—( भा० प्र०, द० अ०, पृ० २८८ )

संगीतसर्वस्वकारः कथयति—

वर्णनीयतया सूत्रं प्रथमं येन सूच्यते।
रङ्गभूमिं समाक्रम्य सूत्रधारः स उच्यते॥

मातृगुप्तानुसारेण विविधगुणमण्डितस्य जनस्य संज्ञा सूत्रधार इत्यस्ति। यथा तेन प्रतिपादितं यत्—

चतुरातोद्यनिष्णातोऽनेकभाषासमावृतः
नानाभाषणतत्त्वज्ञो नीतिशास्त्रार्थतत्त्ववित्
वेशोपचारचतुरः पौरेषणविचक्षणः।
नानागतिप्रचारज्ञो रसभावविशारदः॥
नाट्यप्रयोगनिपुणो नानाशिल्पकलान्वितः।
छन्दोविधानतत्त्वज्ञः सर्वशास्त्रविचक्षणः॥
तत्तद्गीतानुगलयकलातालावधारणः।
अवधार्य प्रयोक्ता च योक्तॄणामुपदेशकः॥
एवं गुणगणोपेतः सूत्रधारोऽभिधीयते।[1]

अस्मिन् विषये भरतकोशे वर्णितम्—

सूत्रधारः स्मृतो नाट्ये सूत्रं धारयतीत्यतः।
विद्वान् वाग्मी कविर्दक्षस्तौर्यत्रयविचक्षणः॥

---

१—अ० शा० ( किशोर केलि० ) प्रस्ता० पृ० ४

नाट्यप्रयोगकुशलो रसभावविवेचकः ।
नानादेशसमुद्भूतवेशभूषाविशारदः ॥
कामशास्त्ररहस्यज्ञो नानाशिल्पविचक्षणः ।
ऊहापोहान्वितः शक्तो धारणे चोपदेशने ॥
उत्तमप्रकृतिर्नाट्याचार्यः स सूत्रधारकः ।

—( भारतकोशे पृ० ६७० )

नाटकस्योत्पत्तिं पुत्तलिकानृत्यात् प्रतिपादयन् शर्मण्यविद्वान् प्राध्यापक-पिशेल-महोदयो वदति—पुत्तलिकानृत्तकारयितुः संज्ञा सूत्रधारोऽस्ति यतो हि पुत्तलिकानर्तने स पृष्ठतः सूत्राणि गृह्णातिस्म । अस्मात् कारणादेव स सूत्रधारः कथ्यते । ततश्च इदमेव नाम नाटकस्य प्रयोक्त्रे प्राचलत् । परं मतमेतत् विद्वद्भिर्नादृतम् ।

सूत्रधारस्यार्थोऽस्ति—रङ्गमञ्चव्यवस्थापकः । स प्रधानाचार्यो यो खलु सर्वाणि नाटकपात्राणि यथायोगं नियोजयति । प्रस्तावनायां तेषां परिचयं प्रयच्छति । मञ्चे पात्राणामागमनं निष्क्रमणादीनां निर्देशं करोति । प्रेक्षकाणां कृते संक्षेपतः कथापरिचयं कारयति । वस्तुतो नाटकीय-कथा वस्तुनः सूत्रं धारयति । अतः स सूत्रधार कथ्यते ।

आर० वी० जागीरदारस्यमतानुसारेण सूतस्य व्यवसाय एव कथा-वस्तुनो वर्णनं भवतिस्म । तदेव संस्कृतनाटकेषु सूत्रधार इति कथितः ।[1] महाभारते यस्य सूतस्य वर्णनमस्ति स खल्वयमेव सूत्रधारोऽस्ति—

स्थपतिर्बुद्धिसम्पन्नो वास्तु-विद्या-विशारदः ।
इत्यब्रवीत् सूत्रधारः सूतो पौराणिकस्तथा ॥

( महाभारते १-५१-१५ )

उपर्युक्तपंक्तिषु सूत्रधारस्य कृते स्थपतिः वास्तुविद्याविशारदश्चेति द्वे विशेषणे स्तः । यतो हि स खलु भूमि-परिमापनं करोतिस्म । कार्येऽस्मिन् प्रावीण्यलाभात् स "शिल्पग्रामवेत्ता" इत्युपाधिना सम्बोधितः । भूमिपरिमापनादतिरिक्तं भवननिर्माणं भवनसज्जादिकं चास्य प्रमुख-कार्याण्यासन् । मुद्राराक्षसेऽपि चाणक्य विनियोजितैः राजधानी–स्थितैः

१—Drama in Sanskrit Literature P 38–41

सूत्रधारै राजमार्गाणां राजप्रासादानां च सज्जाकरणस्योल्लेखः प्राप्यते।[1] वस्तुतः सूत्रधारो रङ्गमञ्चस्य निर्माता सम्पूर्णनाटकस्य सूक्ष्मातिसूक्ष्मतत्व-विवेचकः, चतुरः, धैर्यवान्, व्यवहारकुशलश्च भवति। स खलु प्रत्येकपात्रस्य पूर्वाभ्यासे नियोजयति, सर्वेषां पात्राणां सूत्रं सचालयति। तेषां वेशभूषा-दीनां व्यवस्थां च करोति। नाटकस्याभिनेयत्वगुणानां परीक्षकत्वात् नाटक-संचालनभरः स्वयमेव वहति। प्रेक्षकाणां प्रमोदाय नाटके नृत्य-सगीतयोश्च व्यवस्थां सूत्रधार एव करोति। तस्य प्रयोजन भवति आनन्दानुभूतिः। परमस्यापि नाट्यशास्त्रे सीमानिर्धारितास्ति यतो हि नृत्यगीतादीनामा-धिक्यं हानिप्रदमपि भवितु- शक्नोति।[2] प्राचीनकाले सूत्रधारस्य कर्तव्यं भवति स्म यत् स नाटकेऽवसरानुकूलं नृत्यसंगीतयोर्विनियोजनं करोतु। नाटकानां क्वचित् मुक्ताकाशतले विनिर्मितमञ्चेष्वभिनीयन्ते स्म। सूत्रधारः देवयोः स्तुतिं ऋतुप्रशंसा चाकरोत्। नाटकप्रदर्शनाय प्रयोगाय वा वसन्त-कालो ग्रीष्मतुश्चोपयुक्तौ स्वीकृतौ। अस्मात् कारणादेव संस्कृतरूपकाणां प्रस्तावनाया एतदेव ऋतुद्वयमधिकृत्य नटी गायति।[3] केषाञ्चित् रूपकाणां प्रस्तावना-लेखकः कविः, केषाञ्चिच्च स्वयं सूत्रधार एव भवति, न तु कविः। डॉ० रामजीउपाध्यायमतेन नाटकस्य प्रस्तावनाया लेखकः सूत्रधार आसीत् न तु नाट्यकविः।[4] सूत्रधारेण न केवलं नाटकस्य प्रस्तावना विलिख्यते प्रत्युत नाटके महत्त्वपूर्णभूमिकानिर्वाहोऽपि सफलतापूर्वकं

---

१—विराधगुप्तः—ततः पितृवधपरित्रासादपक्रान्ते कुसुमपुरात् कुमारे मलय-केतौ विप्रवासिते च पर्वतकभ्रातरि वैरोचके प्रकाशिते च चन्द्रगुप्तस्य नन्द-भवनप्रवेशे, चाणक्यहतकेनाहूयाभिहिताः कुसुमपुरनिवासिनः सर्वे एव सूत्रधाराः—यथा सांवत्सरिकवचनादद्यैवार्द्धरात्रसमये एवाभिमतः चन्द्रगुप्तस्य नन्दभवनप्रवेशो भविष्यति, ततः प्रथमद्वारात्प्रभृति संस्क्रियतां राजभवनम्' इति।

—( मु० रा०, द्वि० अं )

२—ना० शा० ५-१६२, १६३, १६४,

३—Drama in Sanskrit Literature P 4-8

४—दशरूपक-तत्त्वदर्शनम् प्रथमसंस्करणे पृ० १९५,

क्रियते । बहुरूपकाणां प्रस्तावनावसानेऽस्यसङ्केतः प्रेक्षकेभ्यः कृतः ।[1] कतिपय रूपकाणा प्रस्तावनायां सूत्रधारेण स्त्रीपुरुषपात्राणां नामोल्लेखः कृतोऽस्ति ।[2] केषाञ्चिद् रूपकाणां प्रस्तावनाया सूत्रधारेण स्वसहयोगिभिरभिनेतृभिः सम्पादितस्याकल्प्य-प्रसाधनस्यापि विवरण प्रस्तूयते स्म ।[3]

शोधच्छात्रः
सागरविश्वविद्यालये



१—रत्नावलीप्रियदर्शिकायाञ्च वत्सराजस्य, मालतीमाधवे कामान्दक्याः विद्धशालभञ्जिकायां अमात्यहरदासस्य, कर्पूरमञ्जर्यां चन्द्रवर्मणश्च भूमिका सूत्रधारेण स्वयमेव निव्यूँढाः । इति तेषा प्रस्तावनासु वर्णितम् ।

२—सूत्रधारः—( आकर्ण्य । नेपथ्याभिमुखमवलोक्य । सहर्षम् )

आर्ये । एष मम यवीयान्भ्राता गृहीतयौगन्धरायणभूमिकः प्राप्त एव । तदेहि । आवामपि नेपथ्यग्रहणाय सज्जीभवाव. ।

३—अतन्द्रचन्द्रप्रकरणे १-८ ।

# संस्कृत-वृत्तम्

क्षेत्रवासी पण्डा

## सागरविश्वविद्यालये संस्कृत महोत्सवः

अनुष्मिन् संवत्सरे सागर-विश्वविद्यालयस्य संस्कृत-विभागे त्रिदिवसीयः संस्कृतमहोत्सवः समायोजितः। विभागीयछात्राणां कृते वादविवाद-निबन्ध-प्रतियोगिते चानुष्ठिते। १-८-८० दिनांके "धर्मस्य गतिशीलते" ति विषय-मधिकृत्य विचारगोष्ठी समायोजिता, यस्यां पं० सुन्दरलाल शास्त्री, पं० जीवनलाल अग्निहोत्री, पं० बच्चूलालः अवस्थी, श्री रा० ल० पाण्डेयश्च व्याख्यातवन्तः। समापनदिवसे विश्वविद्यालयस्य कुलपति-महोदयानां प्रो० दत्तात्रेय-प्रभाकर-जठार-महाभागानां सभापतित्वे प्रमुखविदुषां प्रो० रामजी उपाध्यायानामभिनन्दनं साधु निर्व्यूढम् यत्र विभागस्यास्य प्राक्तनछात्रैरिदानीं दमोहनगरस्थ-शासकीयमहाविद्यालयस्य संस्कृतविभागाध्यक्षवर्यैः श्रीमद्भिः डॉ० भागचन्द्र-जैन-महोदयैः श्रद्धाञ्जलि-रर्पिता, अन्यैरपि बहुभिरध्यापकैः छात्रैश्च प्रो० उपाध्याय-महोदयाः सम्मानिताः।

## नाट्यप्रयोगः

विभागेऽस्मिन् प्रतिवर्षं संस्कृतनाटकानामभिनयः साधु विहितः। वर्षे-ऽस्मिन् बोधायन-विरचितं "भगवदज्जुकं" नाम नाटकं २७-२-८१ तिथौ प्रस्तुतम्। प्रयोगोऽस्य नितरां रुचिकरः प्रशस्यश्चाभूत्।

रेडियो-नाटकस्य प्रस्तुतीकरणार्थं डॉ० राधावल्लभ-त्रिपाठि-महोदया आकाशवाणी-भोपालकेन्द्रेणामन्त्रिताः। तेषां महोदयानां निर्देशनेन विभागीय-छात्राणामध्यापकानां सहयोगेन च रेडियो-नाटकमेकं भट्टनारायण-विरचितं वेणीसंहार-तृतीयाङ्कात् सम्पादितं भोपाल-केन्द्रतः २७-१२-८० दिनांकस्य रात्रौ प्रसारितम्।

## व्याख्यान-माला

अस्मिन् संवत्सरे विश्वविद्यालयानुदान-आयोगस्य द्वे व्याख्यानमाले समायोजिते। प्रथमपर्याये विक्रम-विश्वविद्यालयस्य हिन्दी-विभागाध्यक्षः

डॉ० राममूर्त्ति—त्रिपाठि-महोदयः जनवरी-मासस्य १५–१६ दिनांकयोः त्रीणि व्याख्यानानि व्यदधात्। तेषां विषया यथा—"संस्कृतकाव्यशास्त्राचार्याणा दृष्टौ कालिदास.", "काव्ये वाच्यार्थव्यतिरेक.", "साधारणीकरण" च। द्वितीयव्याख्यानमालाया बम्बई–विश्वविद्यालयस्य संस्कृत-विभाध्यक्षः प्रो० एस० ए० डांगेमहोदयः १०-२-८१ दिनांके "वैदिकाख्यानाना स्रोतो विकासश्च" "वैदिक परिशीलनं तथा सिन्धुमुद्राः" इति दिपयद्वयमाश्रित्य व्याख्यातवान्।

शोधकर्तॄणां विभागीय–छात्राणां च कृते डॉ० च० ला० अवस्थी–डॉ० चन्द्रमणिशर्मणोः व्याख्यानानि समायोजितानि।

## कवि–गोष्ठी

१०–२–८१ दिनांकस्यापराह्णे संस्कृत–कवि–गोष्ठी विहिता, यस्यां प्रमुख–कविः विक्रमविश्वविद्यालये संस्कृतप्राध्यापकः श्री श्रीनिवास–रथ–महोदयः तस्य सरसकवितामाधुरीधारया समुपस्थितसहृदयान् स्नपयति स्म। अस्मिन्नवसरे डॉ० व० ला० अवस्थी, पं० प्रेमनारायण. श्री रा० ल० पाण्डेयश्च स्वविरचितकाव्यान्यपठन्।

## सम्मेलनेषु प्रतिनिधित्वम्

शान्तिनिकेतनेऽखिलभारतोय–प्राच्यविद्यापरिषदः सम्मेलनं अक्टूबर–मासे समायोजितम्, यस्मिन् सागर-विश्वविद्यालयस्य संस्कृतविभागाध्यक्ष-वर्यैः डॉ० राधावल्लभ त्रिपाठि–महोदयैः शोध्–निवन्धः प्रस्तुतः।

मीमांसामधिकृत्य तिरुपतिनगरस्थ–श्री वेकटेश्वर–विश्वविद्यालयस्य संस्कृतविभाग–समायोजिते विश्वविद्यालयानुदानायोगान्तर्गताखिलभारतीय-शीतकालिकाधिवेशने सागर–विश्वविद्यालयतः डॉ० वालशास्त्रीमहोदयाः प्रतिनिधित्वं कृतवन्तः।

## नूतनप्रकाशनानि

संस्कृतविभागान्तर्गतया संस्कृतपरिषदा सत्रेऽस्मिन्नधोलिखिता ग्रन्थाः प्रकाश्यता नीताः।

| | | |
|---|---|---|
| १. | वाल्मीकि–विमर्शः | डॉ० राधावल्लभ त्रिपाठी |
| २. | नाट्यमण्डपम् | " |
| ३. | मुकुन्द–विलास–महाकाव्यम् | ( सं० ) " |
| ४. | मध्यकालिको नाटकालोकः | डॉ० रामजी उपाध्यायः |
| ५. | श्रीहर्ष के रूपक | डॉ० गोकुलप्रसादः त्रिपाठी |
| ६. | अर्वाचीन-संस्कृत-महाकाव्यानुशीलनम् | डॉ० रहस्यविहारी |

## विभागे सम्पन्नाः शोधप्रबन्धाः

सत्रेऽस्मिन् डी० लिट्० उपाधये द्वौ शोधप्रबन्धौ स्वीकृतौ–

| शोधकर्त्ता | शोधप्रबन्धः |
|---|---|
| १. डॉ० राधावल्लभत्रिपाठी— | "प्राचीनभारते नाट्यस्योद्भवो विकासश्च" |
| २. डॉ० श्रीमती मनोरमा तिवारी— | "संस्कृतमहाकाव्यस्य विकासः— १००० ई०—१५०० ई०" |

इमे विद्वांसः पी० यच्० डी० उपाधये योग्याः घोषिताः—

१. कु० गायत्री श्रीवास्तव—"ऐतिहासिक–सस्कृतरूपकाणां परम्परा"
२. श्री गोपीकृष्ण द्विवेदी "महाभारते युद्धनीतिः"
३. श्रीमती अर्चना मिश्रः महाभारतीय–जीवनमूल्यानि

शोध प्रगतिः

इमे छात्राः संवत्सरेऽस्मिन् शोधार्थं पञ्जीकृताः—

| छात्र–नाम | विषयः | निदेशकः |
|---|---|---|
| १. श्री क्षेत्रवासी पण्डा | Irony in Sanskrit Drama | डॉ० रा० च० त्रिपाठी |
| २. श्रीरामप्रकाश शुक्लः | "बुन्देलखण्डस्य संस्कृत-साहित्ये योगदानम्" | ,, |
| ३. कु० सावित्री जैन | "संततारणस्वामिनो व्यक्तित्वं कृतित्वञ्च" | डॉ० भागचन्द्र जैनः |
| ४. श्री राजाराम त्रिपाठी | "निरुक्तस्य सांस्कृतिकाध्ययनम्" | डॉ० बालशास्त्री |
| ५. श्री परमानन्द मिश्र | "विष्णुधर्मोत्तरपुराणस्य काव्यशास्त्रीयभागस्याध्ययनम्" | ,, |
| ६. श्रीमती उपमा चौरसिया | "विश्वगुणादर्श-चम्प्वा अध्ययनम्" | ,, |
| ७. कु० मालती तिवारी | "विष्णुपद-भट्टाचार्यस्याध्ययनम्" | डॉ० (कु०) कुसुम भूरिया |
| ८. कु० प्रतिभा श्रीवास्तव | "रामचन्द्रस्य नाट्य–साहित्यम्" | डॉ० (कु०) कुसुम भूरिया |

## उदयपुर-विश्वविद्यालयेऽनुसन्धानप्रगतिः

संस्कृतविभागस्येमे विद्वांसोऽधोलिखितविषयानधिकृत्य पी० यच्० डी० उपाधये प्रमाणिताः ।

| नाम | वर्ष | विषयः |
|---|---|---|
| १. श्री सी० एस० पुरोहितः | १९६९ | "मेवाडस्य संस्कृतसाहित्यं योगदानम्" |
| २. श्री विष्णुरामो नागरः | १९७० | "कालिदासीयकाव्येषु सादृश्येतरालंकाराणां प्रयोगः" |
| ३. श्रीमती राधाराणी सुखवाला | १९७३ | "वल्लभसम्प्रदायस्तस्य सिद्धान्तश्च" |
| ४. श्री मूलचन्द्रः पाठकः | १९७४ | प्रमुखसंस्कृतनाटकेष्वतिप्राकृत-तत्त्वम्" |
| ५. श्री पी० सी० जैनः | १९७४ | "उद्योतनसूरिकृत-कुवलयमालाकथायाः सांस्कृतिकाध्ययनम्" । |
| ६. श्री वी० एल० जैनः | १९७५ | "भट्टारकसकलकीर्त्तेरध्ययनम्" |
| ७ श्री एस० पी० व्यासः | १९७६ | "कश्मीर-शैवदर्शनेन बौद्धवेदान्त-दर्शनयोः समालोचनम्" |
| ८. श्री जी० एल० शर्मा | १९७७ | "राजस्थानी-भाषासाहित्ययोः संस्कृतस्य प्रभावः । |
| ९. श्रीमती कमला द्विवेदी | १९७७ | 'तन्त्रालोकस्य समालोचनात्मकाध्ययनम्" ( ३-४ आह्निकौ ) |
| १०. कु० एच० एल० वलिया | १९७७ | "शब्दप्रमाणस्यालोचनात्मकाध्ययनम् ।" |
| ११. श्री वी. एल. अञ्जना | १९७९ | प्रमुखसंस्कृतरूपकेषु धार्मिकतत्त्वम्" |
| १२ श्री वी० एल० शर्मा | १९७९ | "प्रमुखसंस्कृतमहाकाव्येषु सादृश्यमूलकालंकाराः" |

## शोधार्थं पञ्जीकृताः छात्राः

| नाम | वर्षः | विषयः |
|---|---|---|
| १. श्रीमती उमा भार्गवा | १९७७ | "रामचन्द्रस्य नाटकानां समालोचनात्मकाध्ययनम्" । |
| २. श्रीमती कामिनी कटारिया | १९७७ | "अमरचन्द्रस्य संस्कृतमहाकाव्यानामालोचनात्मकं परिशीलनम्" |
| ३. श्रीमती गायत्री पनवार | १९७८ | "संस्कृतनाटकेषु त्रासदीयतत्त्वम्" |

४. कु० सरिता भार्गवा    १९७८  "पुराणेषु शैवस्तुतीनामनुशीलनम्"
५. श्री आर. एल. कामदः  १९७६  "भारतीयदर्शने मानवीयतत्त्वम्"
६. श्री टी. एस जोशी    १९७९  "जीवन्धरकृत—अमरसारकाव्यस्यालोचनात्मकसंपादनं, अनुवादोऽध्ययनं च"
७ श्री हुकमि चान्द नागदा १९७६  "संस्कृत-शाक्तस्तोत्रसाहित्यम्"
८. श्री वासुदेवः शास्त्री  १९७९  "संस्कृते सूक्ति-साहित्यम्"

●

# स्कृतवृत्तम् ( २ )

राधावल्लभः

## संस्कृत पत्रिका

प्रायशो वर्षद्वयं यावन्निःस्पन्दा सर्वगन्धा पुनरप्यवरोधमवधूय समुच्छ्वसन्ती सम्पादकस्य वीरभद्रस्य वीरतां प्रकटीकरोति। व्यङ्ग्यचित्रालङ्कृता विचित्रवस्तुविन्यासविभूषिता समसामयिक–सामाजिक–राजनीतिक–प्रसङ्गेषु सममदारणं कटाक्षपातं कुर्वाणा क्वचित् कटुसत्यसमुद्घाटनेनाप्रियता भजमानापि पत्रिकेयं आधुनिकरुचिसम्पन्नानां संस्कृतपाठकानां मनोहरतिस्म। सम्पादकीयसमुद्योगात् पत्रिकायाः क्षीणः कलेवरः पुनरपि पुष्टिं यात्विति वाञ्छामहे।

दिवङ्गताः श्रीमन्तः पण्डितधुरीणा वे० राघवन्महोदयाः 'संस्कृत–प्रतिभा' मपि सहैव दिवं नीतवन्त इति चिरात् संशयो जायतेस्म। प्रायशो द्वयोर्वर्षयोर्न दृष्टः 'प्रतिभायाः' प्रकाशः। सम्प्रति डॉ० विद्यानिवासमिश्रमहोदयानां सम्पादकत्वेऽस्या नवोन्मेषः प्रकटित इति कर्णाकर्णि श्रूयते।

## पुण्यपत्तने ज्ञानसत्रम्

पुण्यपत्तने ज्ञानप्रबोधिनीति संस्थया विश्वविद्यालयेन मानितं 'संस्कृत-संस्कृति-संशोधिके' त्यनुसन्धान–केन्द्रं प्रारब्धम्। अस्यानुसन्धानकेन्द्रस्योद्घाटनसमारोहः सौर–ज्येष्ठ–पञ्चदशदिवसे शुक्रवासरे ९–३० वादने सम्पन्नः। विद्यावाचस्पतयः सुरेन्द्रबारलिंगे–महोदया अध्यक्षपदमलञ्चक्रुः। तत्रादौ ज्ञान–प्रबोधिनीशालाया प्राचार्यैः अभ्यङ्करमहोदयैर्वेदमन्त्रपाठपुरस्सरं मङ्गलमनुष्ठितम्। अस्मिन्नवसरे छात्रद्वयेन 'अनुसन्धानकार्यं निरलसं नैपुण्येन च करिष्याम' इति व्रतं गृहीतम्। सरस्वतीपूजनं विधाय तेन स्वमार्गदर्शकगुरूणां पूजा व्यधायि। अनुसन्धानविषयाणां परिचय-तस्मिन् काले प्रकटीकृतः। अध्यक्षाश्चैव प्रबोधितवन्तः—'अनुसन्धानं प्रातिभमेवास्ति। न कोऽप्यनुसन्धाता भवामी'ति कृत्वा अनुसन्धाता भविष्यति। अनुसन्धानार्थं या प्रज्ञा प्राणभूता, सा यदि विद्यते, तर्हि भवति वास्तविकी अनुसन्धानप्रगतिः। यस्मिन् जने सा विलसति, स एवानुसन्धानकर्मणि प्रवृत्तः स्यान्नान्यः। परेषामनुकृतिं विधाय निष्पन्नमनुसन्धानं नादर-

णीयं भवति। स्वीया प्रतिभा तत्र प्रमाणीकर्तव्येति। ज्ञानप्रबोधिनी-सञ्चालकः पेडसे-महोदयश्चास्मिन्नवसर आह-अस्माकमनुसन्धानं मा भवतु प्राश्चकलितया दिशा। अनुसन्धातारो नूत्ना अदृष्टपूर्वा दिश उन्मीलयन्तु। अस्माकं संस्कृतिः साहित्यं च पूर्वाग्रहं विहाय परिशीलनीये। तदर्थं प्राथमिकशालात एव संस्कृतं पाठनीयं, सर्वत्र तस्यः प्रचारः कार्य इति। उद्घाटनमहोत्सवेऽस्मिन् सर्वमपि कार्यजातं संस्कृतेन निर्व्यूढम्।

# ग्रंथ-समीक्षणम्

श्रीहर्ष के रूपक–ले० –डॉ० गोकुलप्रसादः त्रिपाठी । प्र० – संस्कृत-परिषद् सागर-विश्वविद्यालयः, सागरम् । प्रथमं संस्करणम्–१९८१ । मू०–४०

संस्कृतनाट्यकारेषु महाकवेर्बाणभट्टस्य समकालिकः सप्तमशतकोद्भवः कान्यकुब्जनरेशः श्रीहर्षो नूनमनुत्तमं स्थानं भजते । अस्य प्रियदर्शिका रसिकाना प्रिया, रत्नावली च सहृदयहृदयेषु रत्नमालेव राजते । तथैव नागानन्दमस्य नाट्यनैपुण्यं प्रमाणयति । वस्तुतो नाटिका-प्रणयनक्षेत्रे इदम्प्रथमतया अयमेव प्रगल्भते स्म, यन्निदर्शनमनुकृत्य नाटिकानां पृथुला परम्परा संस्कृतसाहित्ये निरन्तरं प्रचलिता । अथैतस्य कविताकामिन्या हर्षभूतस्य श्रीहर्षस्य व्यक्तित्वकृतित्व-समीक्षणपरो विस्तृतो विवेचनात्मकः प्रबन्धो नेदानी यावत् क्वचिद् दृश्यतेस्म । ग्रन्थोऽयमभावममुं सक्षमं दूरीकरोति । अत्र श्रीमता त्रिपाठिना श्रीहर्षस्य जीवनं, व्यक्तित्वं कृतित्वं कृतित्वविशेषाश्च सम्यग् गवेषिताः । पौरस्त्यपाश्चात्त्योभयविधसमीक्षासरणिभ्या श्रीहर्षप्रणीतानि रूपकाणि विशदं निकषमाणेन लेखकेन तुलनात्मकमूल्याङ्कनाय दिश उन्मीलिताः । लेखकस्य तलावगाहिनी दृष्टिः मर्मावगाहनक्षमा श्रीहर्षस्य रससृष्टिं भाषाभिव्यक्तिं पात्रवैशिष्ट्यं रङ्गनैपुण्यं च निपुणं शीलयति । भास-कालिदासपरम्परायाः प्रभावः, तत्प्रसङ्गे च श्रीहर्षस्य विशिष्टमवदानं परवर्तिरूपककारेभ्यस्तस्योत्तमर्णत्वमपि विवेचयन् ग्रन्थोऽयं श्रीहर्ष विषयकसर्वाङ्गीणानुशीलनं प्रस्तौति ।

गुरुमाहात्म्यशतकम्–डॉ० कैलासनाथ द्विवेदी प्र०–सुबोध प्रकाशनम्, कानपुरम् । मू०–२=५० रूप्यकाणि : प्रथम सं०–१९८१, पृ० ४६ ।

गुरुमाहात्म्यशतकं शतकपरम्परायां गुरोर्महिमान प्रथयति । अत्र प्रणेत्रा श्री कैलासनाथद्विवेदिना विषयावतरण-सोदाहरण-विषयप्रतिपादन पुरस्सरं गुरुकीर्तिः प्रख्यापिता । भूमिकायां विविधोपनिषत्पुराणेषु गुरुस्वरूपं स्वपाण्डित्यनिदर्शनपुरस्सरं प्रणेत्रा प्रतिपादितम् । सर्वत्र हिन्दीभाषयाऽनुवादः प्रदत्तः । काव्यमिदं बालानां सुखबोधाय युज्यते ।

द यूनीक् व्यू-प्वाइंट ऑफ ए पोएट—ले० एं० व्ही० सुब्रह्मण्यम् । सुरभारती समितिः ओस्मानिया विश्वविद्यालयः, हैदराबादम् । प्रथमं संस्करणम् ।

आङ्ग्लभाषोपज्ञेऽस्मिन् प्रबन्धे लेखकेन भारतीयदृष्ट्या कवेः कार्मण्य सम्यग् विवेचनं विधाय प्रकटीकृतम् । कवेरुदात्तजीवनादर्शान् प्रबन्धोऽयं प्रत्याययति । सारस्वतं चक्षुः कथं निखिलं जगदुन्मीलयतीति निरूपितम् ।

# भारतीयज्योतिषम्

डा० राजमोहन उपाध्यायः

ज्योतिषविद्या धरामण्डले सर्वत्रैव चिरकालादेव सुप्रसिद्धास्ति। मुख्यरूपेणास्या द्वौ भागौ वर्तते। तत्र प्रथमभागस्य नाम गणितज्योतिषम्, द्वितीयभागस्य च फलितज्योतिषमिति। तत्र गणितेन ग्रहनक्षत्रादीनां गतिस्थित्यादिज्ञानं जायते, फलितेन च प्राणिनां शुभाशुभफलविवेचनं सम्पद्यते। पाश्चात्यानां मते ग्रीक-वैवलोनिया-अरब-चीन-प्रभृतिदेशेषु ज्योतिषस्य विशेषज्ञानमासीत्। भारतीयैस्तेषामेव ज्ञानमादाय स्वकीयं ज्योतिष निर्मितमिति ते कथयन्ति। किन्तु तेषां ग्रन्थानां भारतीयशास्त्राणां च पर्यालोचनेन स्पष्टं प्रतीयते यत् भारतीयज्ञानं मौलिकं स्वकीयं मतं संस्थापयत् चिरकालादेव राजते। तत्र मौलिकं तथ्यमपि स्पष्टमेव, यतः पुनर्जन्मसिद्धान्तस्याविष्करणं संरक्षणं संवर्द्धनञ्च भारते एव दृश्यते। अतः भारतीयज्योतिषस्य मौलिकं तथ्यं लोकपरलोकयोः साधनम्। इह लोके च ग्रहप्रभावानुकूलत्वसाधनं परलोके च सुकृतकर्मवशादनुकूलयोनिग्रहणमिति। तत्र वेदास्तावद् यज्ञकर्मप्रवर्त्तकाः यज्ञाश्च कालाश्रयेण प्रोक्ताः कालज्ञानञ्च ज्योतिषशास्त्रेण भवति। अतः ज्योतिषं वेदाङ्गरूपेण गृह्यते। वेदास्तावद् अपौरुषेयाः। तस्मात् भारतीयज्योतिषमपि अपौरुषेयमेव।

तत्र शून्यगगनमण्डले भूमिसूर्याकाशगङ्गानीहारिकाणां क्रमेण दैर्घ्यविस्तारयोः ज्ञानसम्पादनेनेदं स्पष्टं भवति यत् ब्रह्माण्डोऽयमनन्तरूपेण विभाति। अनन्तस्य ब्रह्माण्डस्य कुत्रापि केन्द्रविन्दुकल्पनं भवितुमर्हति। किन्तु भूकेन्द्रं तु ध्रुवयोः निबद्धसूत्रे त्रिज्यान्तरे तिष्ठति। सूर्यस्य केन्द्रं भूकेन्द्रे नास्ति यतः तयोरेककेन्द्रं यदि भवेत्तदा भूस्फुट एव रविस्फुटो भवेत्। परञ्च तयोः पृथग् दर्शनात् भिन्ने केन्द्रे तिष्ठतः। भूमौ जनानां निवासो विद्यते परञ्च तेजस्तैक्ष्ण्यात् सूर्ये जीवानां निवासकल्पनं व्यर्थमेव। इदं तु स्पष्टमेव यद् भूसूर्ययोरन्तराले वितत-गगनमण्डले किरणजालसमूह इवानन्तानन्ततलानां संस्थितिः उपर्युपरि अस्ति। सूर्यकिरणाः भूमौ अवरोध विना समागच्छेयुश्चेत् तदा प्राणिनामुद्भिदादीनां च जीवनसम्भवो न भवेत्। परञ्चानेकविधतलानां प्रभाववशेनैव सूर्यतः निर्गताः किरणाः

१. ब्रह्मा प्राह च नारदाय हिमगू यच्छौनकायामलम्।
माण्डव्याय वशिष्ठसंज्ञकमुनिः सूर्योमयायाह यत्॥ इति

परिष्कृताः सन्तः भूमौ समागच्छन्ति। तत्र भूसूर्ययोः सापेक्ष्यवशेन चतुरशीतिलक्षयोनिगतानां जीवानां विविधपदार्थानां चाहर्निशं सृष्टिस्थिति-लयात्मिकाः स्थितयो भवन्ति।

तत्र नभोमण्डले भूग्रहोपग्रहनक्षत्रतारकोल्काधूमकेत्वादीनां विभागाः कालक्रमानुसारेण पूर्वाचार्यैः कृताः। ये तत्र गतिमन्तः पिण्डास्तेषां 'ग्रह' इति संज्ञा। राशिचक्रे विद्यमानानां पिण्डसमूहानामाकृतिवशतः स्वनाम्ना विख्यातानि नक्षत्राणि सन्ति। एवमचलपिण्डानां राशिचक्रेतराणां 'तारक' इति संज्ञा सुप्रसिद्धा। अन्येषां पिण्डसमूहानां विभागा अपि तत्रैव सन्ति। परंच ग्रहानभितः परिभ्रमणशीलानामुपग्रहसंज्ञापि प्रथिता। यथा चन्द्रो भूमेरुपग्रह एवमेवान्ये 'उपग्रहा' अपि ज्योतिषशास्त्रे सुपरिचिता एव। तारकाणां भग्नकणा वातजतस्त्वानां कणाः उल्का नाम्ना विख्याताः। एवं ये चान्ये केतवः काले-काले प्रकटीभूय विलुप्यन्ति तेषामावर्त्तनक्रमः संहिताकारैः उपनिबद्धः। आकाशगङ्गाविस्तृता विराजमाना तारकाणां समूहवशेनैव स्वकीयं रूपं द्योतयति। नीहारिकाणां संस्थितिः अतिदूरेऽस्ति। प्रकाशवर्षानुसारेणापि लक्षप्रकाशवर्षैस्तासां दूरत्वं परिगण्यते। गगने एतादृशा अपि पिण्डाः सन्ति येषां प्रकाशः स्वस्थानाद् भूमिप्रादु-र्भावकालात् प्रागेव संचरितः किन्तु नाद्यावधि भूमौ संप्राप्तः। प्रकाशस्य क्षणात्मिका गतिः १८६००० मील इत्यस्ति। अनेनास्य ब्रह्माण्डस्यापरिमेयत्वं निःसीमत्वं च स्वयमेव सिद्धम्।

खस्थानां पिण्डानामियत्ता कर्त्तुं केनापि न पार्यते। परं चैकस्य पिण्डस्य प्रभावेण अपरः पिण्डः प्रभावितो भवति इत्यत्र नास्ति सन्देहावकाशः। अतो भूमेः समन्ततः विद्यमाना ये पिण्डास्तेषां प्रभावेण प्रभावितेयं धरा प्रत्यहं प्रतिक्षणं च पर्यटति। एवमन्येऽपि पिण्डाः स्वस्ववर्त्मसु संचरन्ति। अतः संचरणशीलानां पिण्डानामियत्ता कथं सम्पाद्या इति महत्तमो गूढ-विषयः। इयं धरा च कदा संजातान्ये पिण्डाश्च कदा समभूवन् इत्यपि केनापि पुरुषेण ज्ञातुं न शक्यते। तात्पर्यमिदं यत् वस्तुस्थित्या ब्रह्माण्ड-विषये इदमित्थं रूपेण किमपि वक्तुं नैव शक्यते। परं च देशकालपात्राणां क्रमिकपरम्परया तेषां परम्परायां प्रसिद्धा विषया ऐतिहासिकरूपेण परि-वर्त्तमानाः कालक्रमेण ज्ञानप्रदायका भवन्ति। बीजवृक्षयोर्मध्ये कः प्रथमः समुत्पन्न इति न केनापि विज्ञेन पुरुषेणेदमित्थमुक्तम्। परं च व्यवहारे तयोर्मध्ये कः प्रथम इति व्यवहारो नावरुध्यते। तथैव सृष्टिविषयेऽपि व्यवहारेऽपि तस्य विवेचने प्रयोजनाभाव एव।

प्रत्यक्षदर्शनात् कालक्रमेण ऋतूनां परिवर्तनात् चन्द्रार्कयोरुपरागदर्शनात् पूर्णिमायां चन्द्रस्य पूर्णता अमायां च तस्याभावदर्शनात् एवं ग्रहाणां प्रागुदयपश्चिमास्तावलोकनात् सूर्यसान्निध्यवशेन तेषां लोपदर्शनात्, मनुष्यपरम्परायां कौतूहलप्रदविषया आसन्नित्यत्र नास्ति सन्देहस्य लेशावसरः। भूमण्डलस्य भिन्ने भिन्ने भागे ते कौतूहलप्रदविषया अपि किञ्चिदन्तरिता सन्तोऽपि सामान्यरूपेण व्यवहारे समत्वदर्शनात्तेषां प्रभावेण प्रभाविता लोकगाथाः परिष्कृताः। विषुवद्धरातलीयखमध्ये सूर्यस्य दर्शनं समरात्रिन्दिवञ्च भवति। ध्रुवप्रदेशे षण्मासमितं सूर्यस्य दर्शनं तदेव दिनं तावती च रात्रिरेवं एकसौरवर्षसममेव तत्राहोरात्रप्रमाणं सिध्यति। एवं भिन्ने भिन्ने भागे दिनरात्र्योः भेदोऽपि गणितयुक्त्या प्रत्यक्षदृष्ट्या च सिध्यति। परं च यथार्थदृष्ट्या सूर्यस्य न कदाप्युदयः कदाचिदस्तमन् भवति। सूर्यः स्वमार्गेऽहर्निशं भ्रमति न विराममुपगच्छति। धरेयं दीर्घवृत्तानुकारा वृत्तचक्राति। वृत्ते ऽर्धदर्शनं अर्धस्यादर्शनं घट इव निजमूर्त्या छाययैवातपस्थयुक्त्या इव सिध्यति। अर्थादहोरात्रदर्शनमपि सापेक्ष्यरूपेणैव सिध्यति। वस्तुतः भूमेः सकाशात् पिण्डानां दूरत्वञ्च नैकं समम्। अतस्तेषां कर्णानुसारेण परिभ्रमणवृत्तान्यपि भिन्नानि भिन्नानि सन्ति। अतः कस्याप्येकस्य ग्रहस्यापरेण ग्रहेण सह न कदापि योगसंभवः। किन्तु प्रत्यक्षदृष्ट्या एकस्मिन् याम्योत्तरे तेषां संस्थितिः योगरूपेण परिगण्यते। एवमत्र यथार्थदृष्ट्या योगाभावः विचारदृष्ट्या च योगसंभवो दर्शितो। किंबहुना लोके न कोऽपि एतादृशो विषयो दृश्यते यस्य वास्तविकं स्वरूपमन्यत् बाह्यदृष्ट्या चान्यद् न विभाति।

यद् हि ब्रह्माण्डे तदेव पिण्डे, यच्च पिण्डे तदेव ब्रह्मणि। अतः ब्रह्मब्रह्माण्डयोः, ब्रह्माण्डपिण्डयोश्च सादृश्यसम्बन्धात् ब्रह्मपिण्डयोरपि तादृशः सम्बन्धो वरिवर्ति इतिकृत्वा भारतीया महर्षयो ज्ञानार्जने तत्परा बभूवुः। तत्र यथा लोके द्वे ध्रुवे भूमेः अक्षकीले इव विद्येते तथैव ज्ञानस्यापि द्वे ध्रुवे विज्ञानदर्शने वर्तेते। यथा भूकेन्द्रात् ध्रुवे समानान्तरे स्तः तथैव ब्रह्मणि केन्द्ररूपेण विद्यमाने सति दर्शनविज्ञाने च ध्रुवरूपेणावतिष्ठत। अतो विज्ञानदर्शनयोः पर्यवसानं एकत्रैव भवति। तत्र दर्शनबिन्दुमादि कृत्वा विज्ञानबिन्दुं यावत् चिन्तनं वा विज्ञानबिन्दुतः दर्शनबिन्द्वधिगमनम् एकमेवास्ति।

प्रत्यक्षदर्शनकाङ्क्षिणो महर्षयः दर्शनविज्ञानयोः सामञ्जस्यं संस्थापयन्तः शास्त्राणि विरचयामासुः। किन्तु चाक्षुषप्रत्यक्षापेक्षया आत्मप्रत्यक्षता-

विषये तेषां चाभिरुचिरासीत् । अतो हि चाक्षुषप्रत्यक्षं तु नावास्तविकम् । तत्र चाक्षुषप्रत्यक्षमेव वैज्ञानिकपक्षः । आत्मप्रत्यक्षपक्षस्तु अध्यात्मविद्योच्यते । लोके तु वैज्ञानिकः पक्षः भौतिकवादः अपरश्च अध्यात्मवादनाम्ना विख्यातो विद्यते । पूर्वं तावद् वैज्ञानिकः ( भौतिकः ) पक्षोऽत्र प्रतिपाद्यते ।

तत्र ज्योतिषा ग्रहनक्षत्राद्यधिकृतं शास्त्रं ज्योतिषमित्युच्यते । गच्छतीति 'ग्रह' इति परिभाषया भ्रमणशीलानां पिण्डानां 'ग्रह' इति संज्ञा पूर्वमेवोक्ता । एतेषां साहाय्यवशेन भारतीयज्योतिषं त्रिस्कन्धात्मकं विभज्यते । तत्र वाराहीसंहितायाम्[1] मेतेषां परिभाषातीव स्फुटास्ति । यत्र ग्रहगतिस्थित्यादिनिरूपणं तद्गणितं सिद्धान्तज्योतिषं वा कथ्यते । तस्यैव पुरा 'तन्त्र' इति संज्ञासीत् । संहितास्कन्धे[2] दिविभौमान्तरिक्षाणां पर्ययप्रभावाणां समग्रपरिचयो निबध्यते । होरास्कन्धे[3] चाहोरात्रशब्दस्य पूर्वापरवर्णलोपात् 'होरा' इति संज्ञा अन्वर्थिका जीवानां शुभफलकथने प्रतिपद्यते । यद्यपि होरास्कन्धे जातकशास्त्रं, मुहूर्तशास्त्रं, शाकुनम्, अष्टाङ्गविद्याप्रभृतिविषयाः सन्ति; तथापि सौलभ्याय संक्षेपेण 'होरास्कन्ध' इत्युच्यते । तात्पर्यमिदं यत्, गणितस्कन्धेन ग्रहाणां दैर्घ्यविस्तारगतिस्थित्याकृतिप्रकृत्यादीन् विज्ञाय संहितास्कन्धेन च तेषां वर्णविन्यासपाञ्चभौतिकस्वरूपादीन् विज्ञाय तेषामुत्क्षेपणमाकुञ्चनं प्रसारणं गमनं च सम्यग् विज्ञाय, जातकस्कन्धद्वारा स्थितेः फल, गतेः फलस्वरूपपरिणामं गमनफलादिकं सम्यग् विज्ञाय जातकस्य लोकस्य वा फलं वक्तव्यमिति कृत्वा एकस्यैव ज्योतिषशास्त्रस्य त्रिस्कन्धस्वरूपम् ऋषिभिः पुराकाले निर्धारितम् ।

वैदिकवाङ्मये ज्योतिषस्य मूलविषयाः सूत्ररूपेणोपनिबद्धाः विराजन्ते । वेदार्था त्रिविधा भवन्ति । तत्र प्रसङ्गानुसारेण एकस्यैव शब्दस्य विविधा-

---

१. ज्योतिःशास्त्रमनेकभेदविषयं स्कन्धत्रयाधिष्ठितं,
तत्कात्स्न्योपनयस्य नाम मुनिभिः संकीर्त्यते संहिता ।
स्कन्धेऽस्मिन् गणितेन या ग्रहगतिस्तन्त्राभिधानस्त्वसौ,
होरान्योऽङ्गविनिश्चयश्च कथितः स्कन्धस्तृतीयोऽपरः ॥
—उपनयनाध्याये, श्लो० ६

२. वाराहीसंहितायाः संवत्सरसूत्राध्याये, श्लो० १७.

३. " " " २१.

अर्थाः पूर्वविचारणीयाः। तदनन्तरं तस्य विनियोगः कार्यः। यदि सर्वत्रैव एकरूपेण तस्य प्रयोगः क्रियते तदा वैदिकज्योतिषज्ञानसम्पादनं न केवलं कठिनमपितु असम्भवमेव। यस्मिन् काले यत्र देशे या भाषा प्रचलिता भवति, सा भाषा भावबोधिका भवति, कालान्तरे तत्र परिवर्त्तनं भवति। यदि परिवर्तितभाषया तस्यार्थबोधः सम्पाद्यते तदा न समीचीनं भवति। इदानीं वेदार्थप्रतिपादनेऽपि त एव दोषाः सन्ति। अतस्तान् दोषानपहाय वेदार्थाः सम्पाद्याः। एवं कृते सति भारतीयज्योतिषस्य मूलज्ञानं वेदानुरूपं ( वेदाङ्गरूपेण ) च सम्यक्तया कर्तुं शक्यते।

प्राच्यविद्या-सङ्कायाध्यक्षः

ज्योतिष-विभागाध्यक्षश्च

काशी-हिन्दू विश्वविद्यालये वाराणसी

# पण्डितराज-विभावनम्

डॉ० कैलासपति त्रिपाठी

मृद्वीकापाकनिर्यन्मसृणरसभरीमाधुरीभाग्य-भाजां वाचामाचार्यतायाः पदमनुभवितुं कोऽस्ति धन्यो मदन्यः॥

स्वोक्तां सूक्तिमेनां यथार्थतां प्रापयन् जगन्नाथपण्डितनरेन्द्र क्वचते लोकोत्तरं कल्पयति च नितान्तं मर्मस्पर्शि किञ्चत्, मीमांसते युक्तियुक्तम्, आशेते च मञ्जुलतरे युक्तिग्राह्ये सत्यतरे क्वचित् पक्षविशेष इति दन्हवनीत्येतदीयं वचः प्रतिपदम्।

यादृशं मधुर्वपि साहित्यं समुदपादि पण्डितराजेन तदनुकूलैवासीत्तदीया जीवनभूमिरपि। प्रतिभाभास्वन्मूर्तिरसौ यस्माज्जनि लेभेयदुत्सङ्गे वात्सल्य-सुधामातृप्ति परिपिबँश्चिरं चिक्रीड, यतश्चानुशीलिता साहित्य-विद्या सोऽभूत् सहृदयतिलकः श्रीमत्पेरुभट्टः यल्ललिया पांपाणोऽपि पीयूषमस्यन्दत। अत एव तु तदात्मजेन शास्त्रग्रन्थिष्वपि प्रवाहिता पर्वं सब्रह्मचारिणी विदग्धबुधजनमनोमुग्ध-विधायिनी सुधाधारा यत्राम्नातानि विविधशास्त्र-सिद्धान्तसूक्तिशूक्तिमुक्तास्विपि महार्हाणि वाक्यानि।

पण्डितराजभणितिः पदवाक्यप्रमाणशास्त्र-चक्रनेमिप्रतिमाचार्यगण-परिचर्या संस्कृत-साहित्य विद्योत्सङ्गमवाप्य महामोदमञ्जिमस्वतामभि गच्छतीति नाविदितं तदनुशीलनपरायणानाम्। विविध शास्त्रसंस्कारा-स्वादमसृणायां तद्वाचि विचित्रा विद्यते सारवत्ता। प्रणेतृ-प्रावीण्यमभि-व्यञ्जयन्ती रोचिष्णुता चापि न तत्र वर्तते पश्चात्पदा। आलोचनामृता-स्वादपरिचितस्वान्तानां तत्त्वार्थदर्शिन्याः प्रज्ञाया निकषोपलायिता पण्डित-राजस्य वाग्वक्रताऽनितरसाधारणीमपश्चिमामेतदीयां वैपश्चितीमभि द्योतयति।

एकस्मादेव गुरोः सर्वविद्यालाभ इति परम्परां नानुसरति सर्वविद्याधरः पण्डितराजः। साहित्यविद्योपासनापूतस्वान्तेषु परा कोटिमारोहमाना महामाहेश्वराः श्रीमदभिनवगुप्त पादा यथा बहुतरगुरून् पर्यचरन् तथैव

सर्वतन्त्र–स्वतन्त्रकवितार्किक–चक्रचूडामणिः पण्डितराजजगन्नाथः[1] समशिश्रियत् स वहून् गुरुजनान्।

अयङिकल तैलङ्गो विप्रः पिताप्रेरुभट्टः। माता चास्य लक्ष्मीः। वेदान्त-विद्यानेन श्रीमज्ज्ञानेन्द्र भिक्षोरधिगता। न्यायवैशेषिक शास्त्रानुशीलनं महेन्द्राभिधा द्विदुषोऽन्वस्थायि। श्रीखण्डदेवाचार्यात् काश्या मीमासा परिशीलिता। शेषवीरेश्वरात् व्याकृतिः संस्कृतिरलम्भि। अन्याश्चापि विद्याः पर्यशीलितानेन, यतो हि सर्वविद्याधरतात्मनः रसगङ्गाधरेऽघोषि।[2]

प्रतीयते स्वल्पीयसा कालेन प्ररिनिष्ठित परिणतञ्च वैदुष्यमर्जितमनेन। यतो हि सस्ततत्तद्विद्या-विशेष-नदीष्णान् गुरूनुपास्य तानि तानि शास्त्राणि सविधि निपीय नवीनं तारुण्याञ्चित वयो दिल्ली-वल्लभस्य पाणिपल्लवतलेऽत्यवाहयत्[3]।

एतावतेदं निष्कृष्यते यल्लोकोत्तरसंस्कारवशात् बाल्ये न्याय–व्याकरण साहित्य–वेदान्त–मीमासा–प्रभृतिविद्यासु परां वैशारदीमसावध्यगात्।

तैलङ्गवंशावतंसः, स्मरहरनगरसमुपासित–सरस्वतीकः, जयपुरनगर-नरेश सम्पर्कमवाप्य लोकोत्तर–प्रतिभामहिमविस्मापित–दिल्लीश्वरो जगन्नाथः शाहजहाँऽभिधस्य सम्राजः सभारत्नत्वमापत्।

सम्राट् शाहजहाँ कियानासीत् कला–समुन्नयन–समवहित–मानस इत्यागरानगरे विराजमानं विश्वविस्मयस्रोतस्ताजभवनमद्यापि स्मेराननं कीर्तयति।

तदीयेन कलास्नेहेन पण्डितराज–प्रतिमो वैदिको विप्रः प्रोदसाहि, समरक्षि, समुदनायि च केनापिश्लक्ष्णतरेण विधिना।

शाहजहाँऽभिधानः सम्राट् १६२८ ई० वर्षे राजसिंहासनमध्यतिष्ठत्। १६५८ ई० वर्षे अवरङ्गजीवेन तत् पुत्रेण कारागारे निक्षिप्तः, १६६६ ई० वर्षे यशोऽवशेषतां समभिलक्षत्। तत् समयान्तपातिनः पण्डित-

---

१—तैलङ्गकुलावतंसेन पण्डितराज-जगन्नाथेन (आसफविलासः)

२— श्रीमज्ज्ञानेन्द्रभिक्षोरधिगत–सकलब्रह्मविद्याप्रपञ्चः
काणादीराक्षपादीरपि गहनगिरो यो महेन्द्रादवेदीत्।
देवादेवाध्यगीष्ट स्मरहर नगरे शासनं जैमिनीयम्,
शेषाङ्कप्राप्तशेषामलभणितिरभूत् सर्वविद्याधरो यः॥

३—दिल्ली–वल्लभपाणि–पल्लवतले नीतं नवीनं वयः।
भामिनीविलासः

राजस्यापि स एव समय इति विद्वांसो विश्वसन्ति निर्णयन्ति च । इदञ्चापि सम्भाव्यते यन्निःश्रीकताङ्किते उपरते वा शाहजहाख्ये सम्राजि परिवर्तिते च दिल्लीश्वरे निष्फला राजधानी नाचकर्ष तं कलाश्लाघ्यं पण्डितराजम् । अत एवान्ते ऽनेन मधुपुरी संसेविता । सैषा मधुपुरीदानीन्तनी मथुरा । "मधुपुरी मध्ये" इत्यस्य स्थाने "अन्धकशासनस्य नगरे" इति पाठोऽपि क्वचित् प्राप्यते तेनेदमाशेरते विद्वांसो यदसाव वसदन्ते काश्याम् ।

यदाश्रये पण्डितराजो न्यवात्सीत् तेषु पञ्च नामान्याभ्यन्तरसाक्ष्यैः प्राप्यन्ते—नूरदीनः[1]=जहाँगीरस्तस्य शासनमासीत् १६०५ तः १६२७ ई० यावत् ।

साहिजहान,[2] शलवदीन[3] = शाहजहाँ, यस्य शासनमासीत् १६२८ तः १६५८ ई० यावत् । असफखानः=नूरजहाँ-भ्राता-यन्मृत्युः १६४१ ई० वर्षे जाता । उदयपुरीयो जगत्सिंह[5], यस्य शासनमभूत् १६२८ तः १६५९ ई० यावत् । कामरूपेश्वरः प्राणानारायणो[6] यदीयशासनमासीदसमप्रदेशे १६३३ तः १६५९ ई० यावत् । समेषामेषां समयपर्य्यालोचनेनेदमवसीयते यत् पण्डितराजस्य साहित्यसर्जनप्रवणा प्रज्ञोपरि निर्दिष्टसमयसीमनि पर्यु दलसत् । राजप्रसाद-संस्कृतिसुरभिता भगवद्भक्तिः—

स्मृतापि तरुणातपं करुणया हरन्ती नृणामित्यादि-पद्ये पण्डितराजस्य काचिद्विशिष्टासक्तिरभिव्यज्यते कलिन्दगिरि-नन्दिनीतटसम्भूते सुरद्रुमे क्रीडन्त्याम् अभङ्गुरतनुत्विषां विद्युताशतैर्वलयितायां कादम्बिन्याम् ।

अत्रैवमप्याशयितुं शक्यते यन्मुगलसम्राजां राजप्रासादेऽम्लानमहसां मादनमेदुराणां नृपति-प्रसादनव्यग्राणां विद्युन्मूर्तीनां ललनाजनानां शतैः परिकृता राजमूर्तिर्मेघमालां कृष्णामूर्तिञ्च स्मारयितुं पण्डितराजं प्रेरिरत । पण्डितराजेन यवनसाम्राजां प्रासादव्यवहारा नेदीयस्तया परिवीक्षिता

---

१—व्याकुप्यन्नूरदीन-क्षितिरमणरिपुक्षोणिभृत् पक्ष्मलाक्षी ॥ रसगङ्गाधरः ९५
प० का० सं० पृ० २००

२—साहिजहानाभिधवरचक्रवर्ती—आसफ विलासः पृ० १.

३—भूमीनाक शहाबदीन भवत स्तुल्यो गुणानां गणैः ।
र० गं० प० का सं० पृ० १०१

४—आसफविलासः

५—जगदाभरणम्

६—प्राणाभरणम्

आसन्। अतस्तत् प्रतिफलनमाञ्जस्येन तत् साहित्ये सम्भाव्यते। उद्यानोपवनाटवीविहरणपरायणानां सम्राजां सामन्तानाञ्चच्छविं प्रेक्ष्य मुहुर्मुहुः स्मृतिपदवीमधिरोह त्यरण्यविहारिणी भगतः श्रीकृष्णस्य मनोहारिणी मूर्तिः —

ता तमालतरुकान्तिलङ्घिनी किङ्करीकृत नवाम्बुदत्विषम्।
स्वान्त मे कलय शान्तये चिर नैचिकीनयन-चुम्बितां श्रियम्॥

राजप्रासादे कृतज्ञतांव्यञ्जयतामुपकृत-विधेयजनानां भावान्तव्याहारान् परिश्रुत्य पण्डितराजस्तमेव सनातनं यदुपति स्मरति—

वाचा निर्मलया सुधामधुरया या नाथ शिक्षामदा—
स्तां स्वप्नेऽपि न संस्पृशाम्यहमहम्भावावृतो निस्त्रपः।
इत्यागश्शतशालिनं पुनरपि स्वीयेषु मा बिभ्रतः।
स्त्वत्तो नास्ति दयानिधिर्यदुपते मत्तो न मत्तः परः॥

अत्र यदुपति-विषयिणी-कृतज्ञता-परायणा-विच्छित्तिच्छुरिता काचिद् भक्त्यभिव्यक्तिरनुभूयते।

## प्रपत्तिसंस्कृता मनस्विता

मङ्गलाजयालक्ष्मीः भगवान् कृष्णो विष्णुपदी कालिन्दगिरि नन्दिनी च जगन्नाथाराध्याः। यदीयहृदये प्रपत्तिसुधालहरी सातत्येन लीलायते, यत्र च समाराध्यचरणारविन्दयोः क्षमाभ्यर्थन भावनाया अविरला धारा प्रसूयते तत्रैवाप्पयदीक्षितप्रभृत्यनूचानजनान् प्रतीर्ष्या कलुषितशेमुषीकत्वं कुत उदेतीति गवेषणेनैव किञ्चित् प्रत्येतुं शक्यते। नूनमत्र भवितव्यं केनापि गभीरतरेण क्षोभेण। रसगङ्गाधरेऽन्यत्र च पण्डितराजकृतिषु शास्त्रवार्ता प्रसङ्गे अप्पयदीक्षितेन सह कश्चिल्लोकोत्तरोऽस्निग्धो दृश्यते व्यवहारः। जैमिनीयमलंधत्ते रसनायामयं द्विज इत्यादीन्युदाहरणानि परस्परासौमनस्यसम्भारभूतिं संरम्भेण केनचिद् द्योतयन्ति। पण्डितराजेन तिरस्कार-नामालङ्कारः स्वेन विधिना कल्पितः। तदुदाहरणेऽप्पयदीक्षितमेवोदाहरण कर्मतामनैषीत्।

सन्ति चात्र नैकविधा दन्तश्रुतयः। तत्र प्राधान्यं भजते लवङ्गी वृत्तम्। श्रूयते पण्डितराजेन वैदुष्यातिशयोल्लास-महिम्ना राजप्रसाद-प्रासादावाप्त्युन्मादे लवङ्ग्यभिधाना काचिद्यवनललना परिणीता एतदाक्रोशेऽप्पयदीक्षितप्रमुखैः कैश्चित् पण्डितैः पण्डितराजोऽधिक्षेपपदवी नीतः। इदमेवास्ति वैरबीजमप्पय-पण्डितराजयोरिति केचिदामनन्ति।

परमत्र सन्दिहन्ति प्रेक्षावन्तः। यतो हि लवङ्गीति नामसंरचना ललनायास्तस्याः यवनीत्वं प्रत्याचष्टे। यवन–कुलोद्भूत–ललनाजनना-मान्यन्यादृशानि भवन्ति। यदि चोच्यतेयवनीनाम्न एव लवङ्गीति संस्कृतं रूपं किञ्चिदस्ती त्येदपि न प्रतिभाति सम्यक्। यतोहि पण्डितराजेन सहावदीननूरदीनासफप्रभृतीनि कानिचिन्नामीनि संस्कृतसङ्घटासु लिखितानि स्वकृतिषु। तत्र च यादृशो गन्धो लभ्यते यवनपरम्परानुसारि नाम्नां न तादृशः कश्चिल्लवङ्गीतिनामनि। अतो लवङ्गी काचिदयवनकन्या-सोदिति न प्रतिभाति साम्प्रतम्।

लवङ्गी–प्रसङ्गसिक्तानि यानि कानिचित् पद्यानि पण्डितराज–समालोचनोद्यतजनमानसं मोदयन्ति तान्यपि तत्र तत्र प्रक्षिप्तानीव प्रतीयन्ते।

सनातनमान्यताभ्यर्चनपरायणस्य पण्डितराजस्य यवनीपरिणय–सम्भावनाभ्यन्तर–साक्ष्यैर्नितरां क्षीणवृत्ता। यतो हि पण्डितराजो न विरुणद्धि वैदिकी मान्यताम्। न चाप्यतिशेते परम्पराम्। मर्यादापरिपालन-परायणे जनेऽन्यथा सम्भावना तदभ्युदयरोपकषायत्वाविष्करणमात्रमेव प्रतीयते।

असति च दोषे दोषाविष्करणेन विनीते परं सवेदनशीले पण्डितराज–स्वान्ते कश्चित् क्षोभ उदगात्। यश्च समालोचन-सरणौ किमपि नवं प्रस्थानं प्रत्यतिष्ठिपत्।

रोषारुणितापि पण्डितराजभणितिरपूर्वामेवकाञ्चिन्माधुरी सूते—

> धूर्यैरपि माधुर्यैर्द्राक्षाक्षीरेक्षुमाक्षिकसुधानां
> वन्द्यैव माधुरीयं पण्डितराजस्य कवितायाः। ( भा० वि० ॥

यद्यपि काव्यशास्त्रे पण्डितराजेनाचार्यान्तरवत् किमपि नवं प्रस्थानं न प्रावर्ति तथापि चिन्तिते सुविचारिते पथि या विविधशास्त्र संस्कारम-सृणा नदता—उदपाति तया नव प्रस्थान् सब्रह्मचारी कश्चिदाह्लादोऽनुभूयते भावकैः। काव्य–वाक्येषु लोकोत्तराह्लादस्नातो वहो भागः क्वास्ते, तत् परिचयपर्यभ्यासः कथमिव भवतीत्यादि विवेचनस्य प्रौढः पन्थाः पण्डित राजः प्रावर्तयत्। अद्यतनालोचन प्रक्रियासु तत्परिपाटीविनियोग. काभ्याश्चिदवापोदवापाभ्या काव्यार्थं सङ्घटनाभावनदिशि महते क्षेमाय स्यादिति श्लाघीयसी सम्भावना।

# नृत्यं नाट्यञ्च

रामजी उपाध्यायः

डा० राघवन् महोदयः Bhoja's S'rngaraprakas'a नामके ग्रन्थे परिणमयति—

We find the Das'arupaka of Dhananjaya saying at the opening that Natya is imitation of mood or character and that it falls into two classes : the major, depicting Rasa—Rasasrya and the minor, depicting Bhava—Bhavasraya. The former is called Rupaka and is only of ten kinds. दशधैव रसाश्रयम्, The latter is called Nayta and is Padarthabhinaya.
अन्यद् भावाश्रयंतत्रपदार्थाभिनयः ।[1]

राघवन्-महोदयस्यानेन वक्तव्येन 'दशरूपके नृत्यस्य नाट्यादभेदः इति मतिविभ्रमो जागर्ति। दशरूपके तु नाट्यनृत्ययोः स्पष्टमन्तरमनया दिशा प्रकटितम्—

> अवस्थानुकृतिर्नाट्यं रूपं दृश्यतयोच्यते ।
> रूपकं तत् समारोपाद् दशधैव रसाश्रयम् ॥ १.७
> अन्यद् भावाश्रयं नृत्यमिति । १.१०

अत्र १.७ कारिकायां केवलमिदमेव कथितं यत् यावस्थानुकृतिर्नाट्यमिति प्रोच्यते, सैव रूप, रूपकं वा भवति । नाट्यं, रूपं, रूपक वा रसाश्रयं भवति ।

यदि नामावस्थानुकृतिः केवलं भावाश्रिता स्यात्, तर्हि सा नृत्यं भविष्यति, न नाट्यं तत्र प्रवर्तेत ।

अत एव नाट्यं नृत्याद् भिन्नमेव ।

दशरूपके धनञ्जयस्य नाट्यनृत्ययोर्भेदो धनिकेनाधोविधं स्पष्टीकृतः —

रसाश्रयान्नाट्याद् भावाश्रयं नृत्यमन्यदेव इत्यादि । बहुरूपमिश्रोऽपि तदेव समर्थयति—

---

1. Bhoja's S'rn'garaprakas'a p. 537 Ed. 1963

रसाश्रयान्नाट्याद् भावाश्रयत्वेन नृत्यमन्यदेव। नृत्यभेदाश्च डोम्बी-श्रीगदितादयो न नाट्यभेदाः।

अनेन विवेचनेन राघव-महोदयस्य नृत्य-नाट्याभेद-विषयक मतं चिन्त्यं प्रतिभाति। नैतत् धनिकधनञ्जययोर्विमर्शमनुसरति।



# कालिदासीयमवनद्धवाद्यवैदुष्यम्

डॉ० सुषमा कुलश्रेष्ठः

महाकवेः कालिदासस्य ग्रन्थेषु तस्य विविधशास्त्रविषयकं पाण्डित्यं परिलक्ष्यते। व्याकरणदर्शनायुर्वेदवनस्पतिशास्त्रेषु सङ्गीतादिललितकलासु च कविः परमनिष्णात आसीत्। 'गीतं वाद्यञ्च नृत्यञ्च त्रयं सङ्गीतमुच्यते'—इति न्यायात् सङ्गीते गायनस्य, वादनस्य, नृत्यस्य च त्रयाणामेव परिगणनं क्रियते। विभिन्नैः वाद्यैरुद्भूतस्य स्वरस्य लयस्य चानन्दोः वाद्यसङ्गीतेन वादनेन वा प्राप्यते। साङ्गीतिकानि वाद्यानि सन्ति चतुर्विधानि। आचार्यभरतमुनेरनुसारेण—

'ततं तन्त्रीकृतं ज्ञेयमवनद्धं तु पौष्करम्।
घनं तालस्तु विज्ञेयः सुपिरो वंश उच्यते॥' ना० शा० २८.२

कालिदास एभिश्चतुर्भिरेव वाद्यैः संगमित आसीत्। प्रस्तुते लेखे कालिदासकृतिषूल्लिखितानां साङ्गीतिकवाद्येषु अवनद्धवाद्यानां विवेचनपुरस्सरं वादनकलाविषयकस्य कविकौशलस्यौदात्त्यं प्रस्तूयते।

यानि वाद्यानि अन्तोःरिक्तानि चर्मणा चावेष्टितानि सन्ति, करेण अन्येन वस्तुना वा ताडनेन शब्दायन्ते, तानि आनद्ध-वाद्यानि अवनद्धवाद्यनि वा कथ्यन्ते। आचार्येण भारतमुनिनावनद्धवाद्यानां संख्या शतं लिखिता। अवनद्धवाद्येषु पटहस्य, पुष्करस्य, मुरजस्य (मृदङ्गस्य), दुन्दुभे भेर्याश्च्चोल्लेखाः कालिदासकृतिषूपलभ्यन्ते।

## पटहः

'हिन्दीशब्दसागरे' पटहस्यार्थः नगाड़ा' 'दुन्दुभिश्च' इति लिखितः किन्तु पटहः न नगाड़ास्ति न तु दुन्दुभिः। सङ्गीतपारिजातानुसारेण पटहस्यार्थोऽस्ति 'ढोलकम्।' तत्र स्पष्टरूपेण लिखितम् 'पटहः ढोलक' इति भाषायाम्।' केषाञ्चित् विदुषां मतानुसारेणायं स्थूलेन चर्मणावेष्टितो भवति। अयं काष्ठदण्डेन करेण वा वादयितुं शक्यते। सङ्गीतसारानुसारमपि मध्यकालीनं ढोलकमेव प्राचीनयुगे पटहसंज्ञामलभत। ऐतिहासिकानां तथ्यानामाधारभित्तौ पटहोः भारतवर्षस्य प्राचीनतमेषु अवनद्धवाद्येषु प्रतीयते। पटहस्य यादृशं वर्णनं धर्मग्रन्थेषु सङ्गीतग्रन्थेषु चोपलभ्यते तेनेदं कथयितुं शक्यते यत् प्राचीनकालत एव मृदङ्गमनु सर्वाधिकः प्रचारः पटहस्यैवास्ति।

केश्चित् ग्रन्थकर्तृभिस्तु मृदङ्गापेक्षया पटहस्याधिकं वर्णनं कृतम्। अस्यैकमेव कारणं सम्भाव्यते—पटहः शास्त्रीयसङ्गीते लोकसङ्गीते च समानरूपेण प्रयुज्यते यदा मृदङ्गस्य मर्दलस्य वा प्रयोगः शास्त्रीयसङ्गीत एव श्रेयस्करो मतः। मानसोल्लासभरतभाष्यसङ्गीतरत्नाकरसङ्गीतोपनिषत्सारोद्धारप्रभृतिषु सङ्गीतग्रन्थेषु पटहस्य विवरणं विस्तरेण समुपलभ्यते। पटहः द्विविधो भवति देशी, मार्गी च।

प्रायः पटहोः हर्षस्यावसरेषु वाद्यते। मेघदूते यक्षोः मेघं प्रति वक्ति—'जलधर, यदि भवान् सन्ध्यातिरिक्तेऽपि काले उज्जयिनीस्थं महाकाल प्राप्नोति, तदा भवता तत्र सूर्यास्तपर्यन्तं स्थातव्यं यतः सायङ्कालीनायां भगवतः महाकालस्यारार्तिकायां भवतोः गम्भीरं गर्जनं पूजाकालिकः पटहो भूत्वा महती प्रशंसां लप्स्यते, भवांश्च स्वकीयायाः सेवाया अखण्डं फल प्राप्स्यति—

'अप्यन्यस्मिन् जलधर! महाकालमासाद्य काले।
स्थातव्यं ते नयनविषयं यावदत्येति भानुः॥
कुर्वन्सन्ध्याबलिपटहतां शूलिनः श्लाघनीया-
मामन्द्राणां फलमविकलं लप्स्यसे गर्जितानाम्॥' पूर्वमेघे ३७.

अत्र मेघस्य गम्भीरे गर्जने पूजाकालिकस्य पटहस्य सम्भावना गोचरीकृता। कुमारसम्भवे कार्तिकेयस्य जन्मावसरे वाद्यमानान् पटहान् उल्लिखन् कविर्वर्णयति—'कार्तिकेयस्य जन्म-महोत्सवे शिवगणैः वाद्यमानानां पटहानां गम्भीरध्वनिः दिक्षु प्रसरन्ती पृथ्वी प्राप्ता प्रतिध्वनिता च भूत्वा सूचितवती यत् पृथिव्यामपि पुत्रोत्सवः सम्पद्यते देवलोक इव—

दिक्षु प्रसर्पंस्तदधीश्वराणा—
मथामराणामिव मर्त्यलोके।
महोत्सवं शंसितुमाहतोऽन्यैः
दध्वान धीरः पटहः पटीयान्॥'

कुमारसम्भवे ११.३३

युद्धप्रयाणावसरे, युद्धारम्भे चापि वाद्यमानानां पटहानाम् उल्लेखः साहित्ये समुपलभ्यते। एवमेव युद्धारम्भेऽत्युच्चस्वरेण वाद्यमानान् पटहान् कविरेवं वर्णयति—

'सुरारिलक्ष्मीपरिपङ्कहेतवो
दिक्चक्रवालप्रतिनादमेदुराः।
नभोऽन्तकुक्षिम्भरयो घनाः स्वना
निहन्यमानैः पटहैर्वितेनिरे॥

प्रमथ्यमानाम्बुधिगर्जितर्जनैः
सुरारिनारीगणगर्भपातनैः ।
नभश्चभूधूलिकुलैरिवाकुलं
रराम गाढं पटहप्रतिस्वनैः ॥'

कुमारसम्भवे १४.१७–१८

## पुष्करः, मृदङ्गः, मुरजश्च

'मृदङ्ग' इति शब्द आदिकाले पुष्करवाद्यस्य अभिधानमासीत् । पुष्करवाद्ये चर्मावृतानि त्रीणि मुखान्यासन् । द्वे मुखे दक्षिणतः वामतश्चास्ताम्, तृतीयं मुखं तु उपरिभागे आसीत् । तस्य पिण्डः मृदा निर्मित आसीत् । अतएवास्य नाम मृदङ्गोऽभवत् । किञ्चित्कालानन्तरं द्विमुखयुक्तस्य वाद्यस्य सृष्टिरभवत् । तस्य पिण्डः काष्ठनिर्मितोऽभवत् । एतेषां पुष्करवाद्यानामुत्पत्तिविषये नाट्यशास्त्रे कथानकमिदं प्राप्यते—

स्वातिः नारदश्च सङ्गीतवाद्यानामादिग्रन्थकर्तारौ स्तः । एकदा एकस्मिन्ननध्यायदिवसे स्वातिः जलानयनाय सरः प्रति गतवान् । नभः मेघैश्छन्नमासीत्, जलवृष्टिर्जाता । वायुवेगतस्तदा सरसि वर्षायाः जलस्य पृथुकाः विन्दवः निपातिता आसन् । तस्मिन् सरसि पद्मानां पृथुकेषु मध्यमेषु लघुषु च पटलेषु यदा वर्षाविन्दवः निपतिताः, तदा विविधाः ध्वनयः समुत्पन्नाः । तासामव्यक्तां मधुरतां निशम्य आश्चर्यचकितः स्वातिः तान् ध्वनीन स्वमनसि कृत्वा आश्रम प्रति गतवान् विश्वकर्माणमकथयच्च—'एतादृशान्ः ध्वनीन् समुपस्थातुमेकं वाद्यं निर्मातव्यम ।' फलतः 'सर्वप्रथमं त्रिमुखयुतं पुष्करवाद्यं मृदा सृष्टम् । अनन्तरं तस्य पिण्डः काष्ठेन लौहेन वा निर्मितोऽभवत् । तदनन्तरमस्माकं मृदङ्ग–पटहझल्लरीदर्दुरप्रभृतीनि चर्मावृतानि वाद्यानि निर्मितानि ।

आचार्येण सुधाकलशेन भगवान् शङ्करो मृदङ्गस्य मुरजस्य वाविष्कारकः कथितः । प्राचीनग्रन्थेषु मृदङ्गः पणवः दर्दुरश्च 'पुष्करवाद्यम्' इत्याख्यां लब्धवन्तः । ऐतिहासिकदृशा मृदङ्गमुरजादीनामुल्लेखो नोपलभ्यते वैदिकवाङ्मये किन्त्वनन्तरं मुरजा मर्दलाश्च मृदङ्गस्य पर्यायरूपेण प्रयुक्ताः । इदमेवास्ति मतं शाङ्र्गदेवस्य अभिनवगुप्ताचार्यस्य चापि । नामपरिवर्तनेन सह मृदङ्गस्य तत्स्वरूपं यत् प्राचीनकालादारभ्य भरतस्य समयं यावत् प्रचलितमासीत्, कदा लुप्तमिति ज्ञातुं साम्प्रतं कठिनमस्ति । यत् वाद्यमद्यास्माभिरुत्तरभारतीयैः 'मृदङ्ग' अथवा 'पखावजः' इति नाम्ना ज्ञायते, दक्षिणभारतीयैश्च यत् 'मृदङ्ग' इति कथ्यते, तत्तु भरतकालीनस्य

'मृदङ्गस्य केवलमस्ति एको भाग एव। मृदङ्गे परिवर्तनमिदं प्रायेण सप्तमशताब्द्या एव प्रारब्धम्। शाङ्गदेवसमये तु मृदङ्गः सम्पूर्णरूपेण परिवर्तितः।

मेघानां गम्भीरगर्जने मृदङ्गध्वनौ चातिशयं साम्यमनुभूतिपथमायाति अत एवौषधिप्रस्थनगरस्य गृहेषु वर्तमानानां मेघानां गर्जनमिश्रितो मृदङ्गध्वनिः तालेन लयेन च विवृतोऽभवत्। तालल्लयावेव मेघगर्जनाया मृदङ्गध्वनेश्चास्तां भेदकौ——

'शिखरासक्तमेघानां व्यज्यन्ते यत्र वेश्मनाम्।
अनुगर्जितसन्दिग्धाः करणैर्मुरजस्वनाः॥'

—कुमारसम्भवे ६.४०

मेघदूतेऽनेकस्थलेषु मुरजा उल्लिखिताः। यथा——

'निह्लादस्ते मुरज इव चेत्कन्दरेषु ध्वनिः स्यात्।

—पूर्वमेघे ६०

यक्षस्यालकानगरी अभ्रंकषैः प्रासादैः सुशोभितास्ति। प्रासादेष्वेषु च सङ्गीतध्वनिः प्रतिध्वनितोस्ति। सङ्गीतसम्पादनार्थञ्च मुरजनाम्नां मृदङ्गविशेषणां स्निग्धो गम्भीराश्च ध्वनिः सर्वत्र व्याप्ताः——

'विद्युत्वन्तं ललितवनिताः सेन्द्रचापं सचित्राः
सङ्गीताय प्रहतमुरजाः स्निग्धगम्भीरघोषम्।
अन्तस्तोयं मणिमयभुवस्तुङ्गमभ्रंलिहाग्राः
प्रासादास्त्वां तुलयितुमलं यत्र तैस्तैर्विशेषैः॥'

उत्तरमेघे १

सप्रमदा यक्षगणाः पुष्करवाद्यानां धीरगम्भीरध्वनिना सह स्मरोद्दीपकं मधुपानं विदधति——

'यस्यां यक्षाः सितमणिमयान्येत्य हर्म्यस्थलानि
ज्योतिश्छायाकुसुमरचितान्युत्तमस्त्रीसहायाः।
आसेवन्ते मधु रतिफलं कल्पवृक्षप्रसूतं
त्वद्गम्भीरध्वनिषु शनकैः पुष्करेष्वाहतेषु॥'

—उत्तमेघे ५

मालविकाग्निमित्रे मृदङ्गस्य मायूरीमार्जनया जनैः ज्ञायते यत् मालविकाया नृत्यप्रस्तुतिर्भविष्यति।[1]

१—जीमूतस्तनितविशङ्किभिर्मयूरैरुद्ग्रीवैरनुरसितस्य पुष्करस्य।
निह्लादिन्युपहितमध्यमस्वरोत्था मायूरी मदयति मार्जना मनांसि॥

—मालविकाग्निमित्रे १.२१

## त्रिमार्जना

मार्जना प्राचीनसङ्गीतस्य महत्त्वपूर्णा प्रक्रियास्ति। मार्जना त्रिविधा भवति--मायूरी अर्द्धमायूरी कार्मारवी च (नाट्यशास्त्रे ३३.९२)। मायूरी-मार्जना मध्यमग्रामसम्बद्धा, अर्द्धमायूरी षड्जग्रामसम्बद्धा, कार्मारवी च ग्रामसाधारणसम्बद्धा वर्तते—

'मायूरी मध्यमग्रामेऽप्यर्द्धा षड्जे तथैव च।
कार्मारवी चैव कर्त्तव्या साधारणसमाश्रया॥'

नाट्यशास्त्रे ३३.९७

मार्जनानां प्रक्रिया विशेषतः त्रिपुष्करवाद्यप्रकरणे निर्दिष्टा यत्र विभिन्नेषु मुखेषु मृत्तिकालेपेन विभिन्नानां स्वराणां स्थापना विधीयते। मायूरीमार्जनायां वामस्थपुष्करे गान्धारः, दक्षिणपुष्करे षड्जः, ऊर्ध्वगपुष्करे च मध्यमः स्थाप्यते। अर्द्धमायूरीमार्जनायां वामपुष्करे षड्जः, दक्षिणे ऋषभः, ऊर्ध्वगे च धैवतः स्थाप्यते। कार्मारवीमार्जनायां वामपुष्करे ऋषभः, दक्षिणे षड्जः, ऊर्ध्वगे च पञ्चमो निधीयते।[1]

एवं कालिदासनिर्दिष्टा मध्यस्वरोत्था मायूरी मार्जना तथ्यमिदं स्पष्टं द्योतयति यत् कालिदाससमये त्रिपुष्करस्य मृदङ्गस्य वादनं प्रचलितमासीत्।

रघुवंशस्यान्तिमो नृपोऽग्निवर्णः पुष्करवादनेऽतिनिपुणः, तस्य वादनेन नर्तकीनां सङ्गतिं विदधाति। आचार्याणामुपस्थितौ यदा नर्तक्यः नृत्यप्रयोगं कुर्वन्ति तदा तासां सङ्गतौ अग्निवर्णः नानाविधाना करणाना लयानाञ्च प्रयोगमेतादृशेन प्रकारेण करोति यत् नर्तक्यः स्वल्पेन भ्रष्टा भवन्ति, अभिनये च स्खलनानि कुर्वन्ति। आचार्याणां साम्मुख्ये कृतस्खलनैस्ता अतिलज्जिता जायन्ते—

'स स्वयं प्रहतपुष्करः कृती
लोलमाल्यवलयो हरन्मनः।
नर्तकीरभिनयातिलङ्घिनीः
पार्श्ववर्तिषु गुरुष्वलज्जयत्॥'

रघुवंशे १९.१४

मुनेः शातकर्णिनः जलभवने वाद्यमानस्य सङ्गीतमृदङ्गस्य घोष आकाशगामी निगदितः—

---

१—नाट्यशास्त्रे—३३.९३–९५

'तस्यायमन्तर्हितसौधभाजः
प्रसक्तसङ्गीतमृदङ्गघोषः ।
वियद्गतः पुष्पकचन्द्रशालाः
क्षणं प्रतिश्रुन्मुखराः करोति ॥'

रघुवंशे १३.४०

अयोध्याया विलासिन्यो रमण्यो जलक्रीडासमये यदा गायनं वादनञ्च कृतवत्यस्तदा तासां करैः कृतं जलस्य मन्दं मन्दमास्फालनं मृदङ्ग प्रहारमस्मारयत्। प्रतीयते स्म यत् गीतानुसारी जलमृदङ्गः कर्णेषु रसवर्षणं विदधाति—

'श्रोत्रेषु सम्मूर्च्छति रक्तमासां
गीतानुगं वारिमृदङ्गवाद्यम् ।'

रघुवंशे १६.६४

## दुन्दुभिः

वैदिकसाहित्ये वीणाया इव दुन्दुभेरपि उल्लेखः प्राप्यते। यथा तबलावाद्ये द्वे पात्रे ( नग इति भाषायाम् ) स्तः—दक्षिणपात्रं, वामपात्रञ्च उभये च 'तबला' इति संज्ञां लभेते एवमेव दुन्दुभावपि द्वे पात्रे भवतः—एकः बृहत्पटहो यस्य घोषो गम्भीरो भवति, अपरश्च लघुः पटहः, यस्य स्वरः अलीयान् तीव्रश्च भवति। इत्थं द्विस्वरयुतं द्विपात्रमिदं वाद्यं दुन्दुभिरित्यभिधीयते।

आनन्दोत्सवेषु विवाहाद्यवसरेषु च दुन्दुभिर्वाद्यते। संस्कृतसाहित्ये अनेकस्थलेषु नन्दनावसरेषु देवकृतस्य दुन्दुभिवादनस्य वर्णनमुपलभ्यते। कुमारसम्भवे वर्णितमिद यत् कुमारकार्तिकेयस्य जन्मोत्सवे सर्वेषु गृहेषु दुन्दुभयः शङ्खस्य गम्भीरध्वनिना सहावाद्यन्त देवाश्च नभसि आगत्य पुष्पवृष्टिं कृतवन्तः।

## भेरी

भेरी मृदङ्गजातेरेवास्ति एकं वाद्यं द्विमुखयुतम्। इयं दक्षिणतः काष्ठेन वामतश्च करेण वाद्यते। कुमारसम्भवस्य चतुर्दशे सर्गे भेर्या गम्भीरध्वनेरुल्लेखो विहितः।[1]

---

१—'गम्भीरशङ्खध्वनिमिश्रमुच्चैर्गृहोद्भवा दुन्दुभयः प्रणेदुः ।
दिवौकसां व्योम्नि विमानसङ्घा विमुच्य पुष्पप्रचयान्प्रसस्रुः ॥'

—कुमारसम्भवे ११.३८

आधुनिककालस्य प्रचलितानि अवनद्धवाद्यानि सन्ति मृदङ्गः पखावजो वा, घटः, डमरुकः, दुन्दुभिः, ढोलकम्, तबला, खञ्जरी, नगाड़ा, ड्रमश्च।

इत्थं कालिदासकृतिषूपलब्धाः वाद्यवादनसम्बद्धा निष्णात उल्लेखाः स्पष्टं सूचयन्ति यत् कालिदासः साङ्गीतिकवाद्येषु निष्णात आसीत्। वस्तुतः सङ्गीतस्य तिसृष्वेव विधासु तस्याद्वितीयं वैदुष्यमासीत्। संस्कृत-साहित्यस्य नास्ति कोऽप्यन्यः कविः यस्य साहित्ये सङ्गीतस्य तादृशी सरसता मधुरता, निपुणता चोपलभ्येत यादृशी महाकवेः कालिदासस्य साहित्ये प्राप्यते। तस्य सङ्गीतदाक्ष्यं तदीयं साहित्यं विशिष्टगौरवं प्रददाति। पुरातन कालादारभ्याद्यपर्यन्तं कवेः सर्वातिशायिन्याः प्रसिद्धेः सम्भवतः इदमप्यस्ति कारणम्।

वरिष्ठ-प्राध्यापिका
संस्कृत-विभागे
दौलतराम महाविद्यालयः
देहली।

१—'गम्भीरभेरीध्वनितैर्भयङ्करैर्महागुहान्तप्रतिनादमेदुरैः।
महारथानां गुरुनेमिनिःस्वनैरनाकुलैस्तैर्मृगराजताजनि॥'
कुमारसम्भवे १४.२७.

# भारतीयनाट्यशास्त्रे विडम्बनायाः स्वरूपम्

क्षेत्रवासी पण्डा

पाश्चात्त्यनाट्यचिन्तने कथावस्तुनो विकासाय प्रचलितासु युक्तिषु नाट्यविडम्बनायाः ( Dramatic irony) स्थानमन्यतमम् । "आयरनी" त्ययं शब्दः ग्रीकहास्योद्दीपकचरित्रात् 'एइरन' शब्दतः ( eiron ) विकसितः[1] ।

यदा काचिदुक्तिः वाच्यार्थं परित्यज्य तद्विपरीतं प्रकटयति, यदा वा शब्दस्याभिप्रेतार्थेन साक्षात्सङ्केतोऽर्थः विरुध्यते, तदा विडम्बना ( irony ) भवति, सा पुनः वाग्वैचित्र्यरूपा एव । तथा चोक्तम्—

A figure of speech in which the literal meaning of a word or statement is the opposite of that intended."[2] विडम्बनेयं द्व्यर्थवचनविन्यासद्वारेण भाविकार्यव्यापारं सूचयति । डब्ल्यू० एच० हडसन महोदयमतानुसारेण—"We may define irony, in broadest sense, as the contrast between two aspects of the same thing, whether such contrast is perceived at the time or become apparent later".[3] विडम्बनायाः शाब्दिकार्थः स्पष्टतया प्रतिभासमानोऽपि गौणतां भजते, अभिप्रेतार्थस्तु प्रच्छन्नः सन्नपि प्राधान्यमादधाति ।

सेयं विडम्बना मुख्यतया द्विधा विभज्यते— वाचिकविडम्बना ( Verbal irony ), नाट्यविडम्बना ( Dramatic irony ) च[4] ।

यत्र शब्द इच्छातोऽन्यथा वा वाच्यार्थमलीकं प्रमाणीकरोति अथवा स्वार्थस्य वैपरीत्यं दर्शयति, तत्र वाचिकविडम्बना भवति । अत्र शब्दस्य उक्तेर्वा विवक्षितार्थो वक्त्रा प्रथमत एव ज्ञायते, यस्तु श्रोतृभिः विडम्बनाद्वारेणानुमीयते ।" It is to be noted that Verbal irony depends on knowledge of the speaker's intention shared

---

1. "Encyclopedia of Poetry and Poetics"—P. 407.
2. "Concise Dictionary of Literary Terms—P. 150
3. "An Introduction to the Study of Literature" P. 297
4. "Encyclopedia of Poetry and Poetics"—P. 407

by the speaker and his audience."[1] अतः वाचिकविडम्बनायां वक्ता मुख्यतया वक्रोक्तिद्वारेण स्वाभिप्रेताशयं प्रकटयति ।

नाट्यविडम्बना तु वाचिकविडम्बनातो भिन्नैव । रङ्गमञ्चे केनापि पात्रेण प्रतिपादितोऽर्थो यदा प्रेक्षकेषु भिन्नाशयं प्रकटयति, सोऽयमर्थश्च रङ्गमञ्चस्थपात्राणि न स्पृशति तदा नाट्यविडम्बना भवति । इत्थं प्रेक्षकाः पात्रेण ज्ञातादर्थादतिरिक्तमर्थं यत्र जानन्ति, तत्र नाट्यविडम्बना कथ्यते । प्रेक्षकैः गृहीतोऽयमर्थः विषयोद्दिष्टो भवति तथा पात्राणां वास्तविकं स्वरूपं प्रकटयन् भाविकार्यव्यापारं सूचयति । यस्यां स्थितौ कोऽपि सत्त्वोत्कर्षवान्नायकोऽसदृशीमवस्थां भजते तत्रापि नाट्यविडम्बना भवति । एवं च नाट्यविडम्बनया पात्राणामायतिः ( Destiny ) सूच्यते । यथा कोऽपि महनीयो नायकोऽजानन्नेव स्वस्यैव विनाशं साधयति, प्रेक्षकाश्च प्रागेव तत्परिणतिमवगच्छेयुस्तत्रापि नाट्यविडम्बनैव स्यात् ।

"Dramatic irony is a plot device according to which the spectators know more than the characters, the character reacts in a way contrary to that which is appropriate or wise, characters or situations are compared or contrasted for ironic effects, such as parody. There is a marked contrast between what the character understands about his acts and what the play demonstrates about them."[2]

इयं नाट्यविडम्बना प्रायः सर्वविधनाटकेषु चमत्कारं वितनोति, तेन नाट्यकारस्य नाट्यकौशलं च प्रकाशयति ।

संस्कृतनाट्यशास्त्रे 'विडम्बने'त्ययं शब्दः यद्यपि न पारिभाषितः तथापि तस्य महत्त्वपूर्णकार्यमिदमधोलिखितैः प्रचलितनाट्य तत्त्वैः सम्पाद्यते । तेषु नाट्यतत्त्वेषु पताकास्थानकं सर्वोत्कृष्टम्, यतः सर्वविधेषु पताकास्थानकेषु विडम्बनेयं दृश्यते ।

## पताकास्थानकम्

नाट्यशास्त्रे वर्णितानि चतुर्विधानि पताकास्थानकानि विडम्बनायाः कार्यं निर्वहन्ति । पताकास्थानकं लक्षयन् भरत आह—

---

1. "A Glossary of Literary Terms"—P. 81
2. " Encyclopedia of Poetry anp Poetics"—P. 407

"यत्रान्यस्मिंश्चिन्त्यमाने तल्लिङ्गोऽन्यः प्रयुज्यते ।
आगन्तुकेन भावेन पताकास्थानकन्तु तत्" ॥[1]

पताकास्थानकस्य सामान्यलक्षणमिदं नूनं नाट्यविडम्बनां स्पृशति। यथा उत्तररामचरिते सीतां सस्नेहं परामृशन् रामः कथयति—

"इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयो—
रसावस्याः स्पर्शो वपुषि बहलश्चन्दनरसः ।
अयं बाहुः कण्ठे शिशिरमसृणो मौक्तिकसरः ।
किमस्या न प्रेयो यदि परमसह्यस्तु विरहः ॥" (१/३८)

तदानीं प्रतिहारी प्रविश्य विज्ञापयति—"देव ! उपस्थितः"। अत्र दुर्मुख उपस्थित इति प्रतिहार्यास्तात्पर्यविषयेऽपि रामोक्तस्य पूर्वश्लोकस्य यदि परमसह्यस्तु विरहः" इत्येकदेशस्य विरहस्य सान्निध्यात् समनन्तरभावी 'सीताविरहो' प्रेक्षकैरवगम्यते, न त्वयमर्थः प्रतीहार्या रामेण वा गृहीतः। अतः विषयोद्दिष्टं भाविव्यापारसूचकमिदं पताकास्थानकं नूनं नाट्यविडम्बनायाः स्थलम् ।

परन्तु सर्वं पताकास्थानकं यदि 'नाट्यविडम्बने'ति स्वीक्रियते तर्हि शाकुन्तले प्रियंवदानसूययो उक्तिरियं—"इमं जीवितसर्वस्वेनाप्यतिथिविशेषं कृतार्थं करिष्यति"[2] इत्यस्ति चिन्तनीया। जीवितसर्वस्वेनेति पदेन यदत्र शाकुन्तलरूपं दर्शकैः गृहीतं, तदेव सख्योरभिप्रेतार्थं स्पृशति, यतो वक्रोक्त्या ताभ्यां शकुन्तलां प्रति वाक्यमिदं प्रयुक्तम् । अतोऽत्र नाट्यविडम्बना भवितु नार्हति, अपितु वाचिकविडम्बनाया उत्कृष्टमुदाहरणमिदम्। एवं तत्रापि "चक्रवाकवधुके ! आमन्त्रयस्व सहचरं, उपस्थिता रजनी"[3] इतीयं नेपथ्योक्तिरपि चिन्तनीया। अतः पताकास्थानकेषु कुत्रचिद् वाचिकविडम्बना कुत्रापि च नाट्यविडम्बना प्राप्यते ।

## गण्डः

गण्डाख्यवीथ्यङ्गं नाट्यविडम्बनां स्पृशति। गण्डं लक्षयता विश्वनाथेनोक्तम्—"गण्डं प्रस्तुतसम्बन्धि भिन्नार्थं सत्वरं वचः"[4]। वस्तुतः यत्र नाट्यकारः कथावस्तुनो भाविव्यापारं केनचिद् भिन्नविषयबलेन सूचयति तत्र गण्डो भवति, तथा च गण्डेऽस्मिन् नाट्यविडम्बनायाः सादृश्यं परिलक्ष्यते ।[5] यथा वेणीसंहारे दुर्योधनो भानुमतीं कथयति—

१. ना० शा० ( का० मा० सं० )—१६।३१
२. अ० शा० ( किशोरकेलि० )—पृ–५८
३. अ० शा० ( किशोरकेलि० )—पृ–२२१
४. सा० द०—६।२६०
५. द० रू० साव०, चन्द्रकला० टीका—पृ–१५८

'अध्यासितुं तव चिरं जघनस्थलस्य
पर्याप्तमेव करभोरु ममोरुयुग्मम् ॥'' ( २।२३ )

तदानीं कञ्चुकी प्रविश्य कथयति—देव भग्नम्, भग्नम् । राजा—केन, । कञ्चुकी—भीमेन । राजा—कस्य । कञ्चुकी—भवतः

अत्र ''भीमेन मरुता भवतो रथकेतनं भग्न''—मिति कञ्चुकिनस्तात्पर्य-विषयेऽपि दुर्योधनोक्तस्यान्तिमपदस्यान्वयात् श्लिष्टप्रत्युत्तरमिदं भाविनं दुर्योधनस्योरुभग्नं पिशुनयति, यत्तु प्रेक्षकै एव ज्ञायते । अतो विपर्योद्दिष्ट-मिदं गण्डस्योदाहरणं नूनं नाट्यविडम्बना स्पृशति ।

## नालिका

वीथ्यङ्गेषु परिगणिता नालिकापि कदाचिद् विडम्बनामनुहरति । ''सोपहासा निगूढार्था नालिकैव प्रहेलिका'' इति नालिकाया लक्षणम्[1] । यथा रत्नावल्याम्—

सुसंगता—सखि, यस्य कृते त्वमागता सोऽयं पुरतः तिष्ठति ।

सागरिका—कस्य कृते अहमत्रागता ।

सुसंगता—ननु चित्रफलकस्य[2] ।

अत्र राज्ञः कृते त्वं ( सागरिका ) आगतेति सुसंगताया विवक्षितार्थः । अतः तस्या इयं वक्रोक्ति र्वाचिकविडम्बनां स्पृशति ।

कतिपयानि सन्ध्यंगानि कदाचिद् विडम्बनाया कार्यं साधयन्ति ।

## युक्तिः

युक्तिं लक्षयता रूपगोस्वामीप्रभुपादेनोक्तम्—

''सम्यक् प्रयोजनानां हि निर्णयो युक्तिरिष्यते'' ।[3]

यथा रत्नावल्याम्—मयापि चैनां देवीहस्ते सबहुमानं निक्षिपता युक्त-मेवानुष्ठितम्[4] । अत्र 'युक्तमेवानुष्ठित'मित्यनया वक्रोक्त्या अन्तःपुरस्थाया सागरिकाया वत्सराजस्य दर्शनादिप्रयोजननिर्णयो यौगन्धरायणस्याभि-प्रेतार्थः, यस्तु न सागरिका न वासवदत्तां न चोदयनं स्पृशति परन्तु-माशयो दर्शकैरवगम्यते एव । तेन वाचिकविडम्बनाया उदाहरणमिदम् ।

---

१. द० रू०—३।१९

२. रत्ना०— द्वितीयोऽङ्कः

३. ना० च० ( प्र० व्या० ), पृ० २५

४ रत्ना०—प्रथमोऽङ्कः

## परिभावना[१]

परिभावनायां कदाचिद् नाट्यविडम्वना दृश्यते। यथारत्नावल्याम्—

सागरिका—"कथं प्रत्यक्ष एवानङ्गः पूजां प्रतीक्षते, तत् अहमपीह स्थितैवैनं पूजयिष्यामि"[२]। इति परिभावनाया उदाहरणं नूनं नाट्यविडम्वनां स्पृशति। अनम्मन्यमानायाः सागरिकाया उदयनपूजनमिदं समनन्तरभाविनंमुदयनमिलनं प्रेक्षकेभ्यो विज्ञापयति। अतोऽत्र नाट्यविडम्बनैव भविष्यति।

## करणम्[३]

करणेऽपि कदाचिद् विडम्वना लभ्यते। करणे भाव्यङ्कवृत्तस्य व्यंजना क्रियते[४]। यथा रत्नावल्याम्—"नमस्ते कुसुमायुध, अमोघदर्शनो मे भविष्यति"[५] इति सागरिकाया उक्ति अन्तराङ्कभाविनमुदयनदर्शनं सूचयति। अत्र नाट्यविडम्वना, यतो विषयेऽस्मिन् सागरिकानभिज्ञैव। कुत्रचित् करणेऽस्मिन् वाचिकविडम्वनापि प्राप्यते।

## प्ररोचना

प्ररोचनापि कदाचिद् विडम्वनासंवलिता भवति। प्ररोचनां लक्षयता धनञ्जयेनोक्तम्– 'सिद्धामन्त्रणतो भाविदर्शिका स्यात् प्ररोचना"।[६] यथा ललितमाधवे—

नववृन्दा—"अलं विलापैः समयक्रमस्य दुरूहरूपा गतयो भवन्ति।
शरन्मुखे पश्य सरस्तटीषु खलन्त्यकस्मात् खलु खञ्जरीटाः"॥
(७।५)

अत्र खञ्जरीटदृष्टान्तेन भाविकृष्णमिलनं सूच्यते। अतो नाट्यविडम्वनाया उदाहरणमिदम्।

## नर्म[७]

कदाचिद् नर्मण्यपि वाचिकविडम्वना लभ्यते। उदाहरणमस्य नालिकायां दत्तम्।

---

१. "परिभावोऽद्भुतावेश."—द० रू०–प्रथम प्रकाशः

२. रत्ना०–प्रथमोऽङ्कः

३. "प्रस्तुतार्थसमारम्भ करणं परिचक्षते"—ना० च० (प्र० व्या०)–पृ. ३२.

४. द० रू० ( साव०, चन्द्रकला हिन्दी० ) टीका पृ० २५.

५. रत्ना०–प्रथमोऽङ्कः

६. द० रू० ( साव०–'चन्द्रकला' हिन्दी० पृ–५५

७. "परिहासप्रधानं यद्वचः नर्म तद्विदु"—ना० च० ( प्र० व्या )–पृ० ३८.

कतिपयेषु सन्ध्यन्तरेष्वपि विडम्वना प्राप्यते ।

**स्वप्नः—**

वेणीसंहारे "नकुलस्याहिशतंव्यापादनमिति भानुमत्याः स्वप्नवृत्तान्तो भाविनं कौरवशतव्यापादनं पिशुनयति । स्वप्नवृत्तान्तोऽयं नाट्यविडम्वनाया उत्कृष्टमुदाहरणम् ।

**लेखः**

शाकुन्तले शकुन्तलाया दुष्यन्तं प्रति पत्रलेखनानन्तरं सख्योः समक्षं तत्पठनावसरे दुष्यन्तस्य तद्विषयकज्ञानं नाट्यविडम्वनां स्पृशति ।

**चित्रम्**

उत्तररामचरिते आलेख्यावलोकनावसरे दोहदायाः सीतायाः वनगमनकामना समनन्तरभाविनं सीतापरित्यागं सूचयति । अत्र नाट्यविडम्वना ।

एतदतिरिक्तमपि वक्रोक्ति–समासोक्ति–व्याजस्तुतिश्लेषाप्रस्तुतप्रशंसा–पर्यायोक्ति–विरोधादिष्वलंकारेषु विडम्वना प्राप्यते ।

केचिद् व्यङ्ग्यार्थो विडम्वनेति (irony) मन्यन्ते । सत्यमेवेदं यदुपयुक्तेषु सर्वेषु स्थलेषु व्यञ्जनयैव श्लेषार्थोऽवगम्यते । परन्तु सर्वत्र व्यङ्ग्यार्थो विडम्वना न घटयति । यत्र व्यङ्ग्यार्थो विषयोद्दिष्टो भवति यत्र वा भाविवृत्तान्त सूचयति तत्र 'विडम्वने'ति कथ्यते, अन्यथा "सटायर्" (Satire) भविष्यति । अतः पताकास्थानकगण्डौ विहायान्यत्र श्लेपार्थं उपयुक्तलक्षणं सघटयति चेत्तर्हि विडम्वना भविष्यति ।

अतः संस्कृतरूपकेषु विडम्वनायाः समुचितप्रयोगेण क्वचिद् कार्यव्यापारस्य क्षिप्रता, सहसा नवीनवृत्तस्य परावर्तनम्, भाविव्यापारसूचना, वक्रोक्तिवैचित्र्यं वा रुचिरं साध्यते ।

अनुसन्धाता,
संस्कृत विभागे
विश्वविद्यालयः, सागरम् ।

# सागरविश्वविद्यालयस्य संस्कृतपरिषदः प्राप्यपुस्तकानि

●

| * डॉ० रामजी उपाध्यायेन रचितानि-सम्पादितानि | मूल्यम् |
|---|---|
| १. संस्कृत साहित्य का आलोचनात्मक इतिहास ( प्रथमो भागः ) | रु० १२ ०० |
| २. संस्कृत साहित्य का आलोचनात्मक इतिहास ( द्वितीयो भागः ) | रु० १०.०० |
| ३. मध्यकालीन संस्कृत नाटक, पृ० सं० ५२० | रु० ५०.०० |
| ४. आधुनिक संस्कृत नाटक ( हिन्दी )—भागद्वयस्य | रु० ६०.०० |
| ५. नाट्यशास्त्रीय-प्रयोगविज्ञानम् | रु० २०.०० |
| ६. Sanskrit & Prakrit Mahakavyas (शोधप्रबन्ध) | रु० ५०.०० |
| ७. महाकवि कालिदासः ( संस्कृतम् ), पृ० सं० १६० | रु० २०.०० |
| ८. भारतस्य सांस्कृतिकनिधिः (संस्कृतम्), पृ० सं० ४११ | रु०. २५०० |
| ९. दशरूपक-तत्त्वदर्शनम् पृ० २००, रु० २५.०० विद्यार्थी सं० | रु० १५.०० |
| १०. आधुनिक-संस्कृत-साहित्यानुशीलनम् पृ० स० ३०० | रु० ७.०० |
| ११. सागरिका—१-१९ खण्डाः वस्त्रपटावृताः | रु० ५००.०० |
| १२. दशरूपकम् नान्दी-भाषाटीकासहितं सावलोकम् | रु० १४.०० |
| १३. मध्यकालिकः संस्कृतनाटकालोकः | रु० २५.० |
| १४. नाट्यशास्त्रीय-पारिभाषिकशब्दानुक्रमणिका | रु० १५.०० |
| १५. नाट्यशास्त्रीय-प्रयोगविज्ञानम् | रु० २०.०० |
| *** डॉ० वनमाला भवालकर-रचितानि** | |
| १. महाभारत में नारी-(हिन्दी) शोधप्रबन्धः, पृ० सं० ५२५ | रु० ४०.०० |
| २ पाददण्डम् ( संस्कृतम् ) रूपकम् | रु० २.०० |
| ३. रामवनगमनम् ( संस्कृतम् ) संगीतिका | रु० १.०० |
| ४. पार्वतीपरमेश्वरीयम् ( संस्कृतम् )—संगीतिका | रु० १ ५० |
| ५. पंचमहाकाव्येषु चन्द्रः ( निबन्धः ) | रु० २.०० |
| *** डॉ० राधावल्लभ-त्रिपाठि-विरचितानि-** | |
| १. संस्कृत कवियों के व्यक्तित्व का विकास—शोधग्रन्थः | रु० २५.०० |
| २. वाल्मीकि-विमर्शः | रु० १०.०० |
| ३. मुकुन्दविलासम् | रु० १५.०० |
| ४. नाट्यमण्डपम् | रु० १०.०० |
| ***प्रकीर्णानि** | |
| १. सिद्धान्तसम्राट्—सं० मुरलीधर चतुर्वेदी | रु० १५.०० |
| २. सुसंहतभारतम्—( नाटकम् ) पुल्लेलरामचन्द्रः | रु० ८.०० |
| ३. साहित्यसन्दर्भाः—डॉ० रेवा प्रसाद द्विवेदी | रु० ३.०० |
| ४. रसार्णवसुधाकरः-सिंहभूपाल, सम्पादक-डॉ. रेवाप्रसाद द्विवेदी | रु० ८.०० |
| ५. श्रीहर्षकी नाटिकाओं का अनुशीलन—डा०गोकुल प्रसाद त्रिपाठी | रु०४०.०० |

# सागरिका

•

विंश-वर्षे प्रथमोऽङ्कः

२०३८ विक्रम-संवत्सरे

प्रकाशकः
सागरिका-समितिः, गौरनगर
सागरम् (म० प्र०)

# सागरिका

विंश-वर्षे प्रथमोऽङ्कः

२०३८ विक्रम संवत्सरे

सम्पादकाः

डा० रामजी उपाध्यायः (प्रधानः)

डा० राधावल्लभः त्रिपाठी

डा० रेवा प्रसादः द्विवेदी

डा० रामगोपाल मिश्रः

प्रकाशिका

सागरिका-समितिः

१२/११५, भेलूपुर, वाराणसी

संस्थापिका प्रचारिका च-
सागरिका समितिः
गौरनगरम्, सागरम् ४७०००३ (म० प्र०)

देयम्

| | |
|---|---|
| प्रत्यङ्कम् | ४·०० रूप्यकाणि |
| वार्षिकम् | १५·०० रूप्यकाणि |
| आजीवनग्राहकस्य | २०० ०० रूप्यकाणि |
| प्राचीनाः सर्वेऽङ्काः सवस्त्रपुटबन्धाः (Cloth Bound Vols.) | ५००·०० रूप्यकाणि |
| आजीवन-ग्राहकाणां कृते सर्वेऽङ्काः | २०० ०० रूप्यकाणि |

| | | | |
|---|---|---|---|
| वर्ष १-५ | प्रत्यङ्कम् | ७·०० रूप्यकाणि, वार्षिकाङ्कः | ३५·०० रूप्यकाणि, वार्षिकाङ्काः |
| वर्ष ६-१० | ,, | ६·०० रूप्यकाणि | ३०·०० रूप्यकाणि, वार्षिकाङ्काः |
| वर्ष ११-१५ | ,, | ५·०० रूप्यकाणि | २५ ०० रूप्यकाणि, वार्षिकाङ्काः |
| वर्ष १६-१९ | ,, | ४·०० रूप्यकाणि | २०·०० रूप्यकाणि, वार्षिकाङ्काः |

अङ्कप्रकाशः प्रतिवर्षम् आषाढ़ाश्विन-पौष-चैत्र [जून-सितम्बर-दिसम्बर-मार्च] मासेषु

पत्रव्यवहारः शुल्कप्रेषण च सागरिका-समितिः, गौरनगरम्, सागरम् ४७०००३ इति संकेतेन विधेयम् ।

मुद्रकः :
एकेडमी प्रेस
दारागंज, प्रयाग

# विषय-सूची

संस्कृत साहित्य-वैशिष्ट्यम् १
डॉ० विद्यानिवास मिश्रः

राजचूडामणि दीक्षितस्य महाकाव्य-द्वयम् ६
रामलखन पाण्डेय

संस्कृतरूपकेषु पताकास्थानकम् १४
क्षेत्रवासी पण्डा

सप्तदशशताब्देः संस्कृतमहाकाव्यानि २२
रामलखन पाण्डेय

भट्ट श्रीमथुरानाथ शास्त्रिणो व्यक्तित्वं कृतित्वं च ३७
विन्ध्येश्वरी प्रसाद मिश्रः

सूत्रपूर्वं न्यायशास्त्रम् न्यायसूत्रकारश्च ५०
कु० नवलता

अभिज्ञान शाकुन्तलस्य नाट्यशास्त्रीयमनुशीलनम् ६२
रामजी उपाध्यायः

डॉ० वेङ्कटरामराघवस्योपलब्धयः ६८
आशा सरवटे

भाणेऽभिनयो लास्याङ्गानि च ७६
रामजी उपाध्यायः

विशाखदत्तस्य अर्थशास्त्रोपजीव्यत्वम् ८१
सनत्कुमारः

रसविषये कुन्तकः ८५
परमानन्द मिश्रः

ग्रन्थ समीक्षणम् ८९

---

# संस्कृतसाहित्य-वैशिष्ट्यम्

डॉ० विद्यानिवासमिश्र

संस्कृतसाहित्यं नाम भारतदेशस्य सांस्कृतिकपरम्परायाः मूलम्। तदवगमश्च संस्कृतभाषायास्तद्व्यवहर्तुर्मनुष्यसमाजस्य च सुतरामवगतिमपेक्षते। संस्कृतं नाम वस्तुत संस्कारकेन्द्रितस्य भारतीयजीवनस्योपलक्षणम्। अथ च संस्कारः किल नास्ति कृत्रिमा कापि प्रक्रिया, अपितु जीवनान्तरनुस्यूतस्य प्रयोजनस्य प्रत्यक्षीकरणाय मनुष्यस्य नैसर्गिकी योग्यता एव संस्कार। अद्यापि संस्कृतं नितरांविलसति विशेषत. संस्काराणां भाषारूपेण। संस्कृतभाषिणो मनुष्यसमुदायस्य सन्ति कानिचिद् वैशिष्ट्यानि। तानि च सप्तधा कीर्तितुं शक्यन्ते। तेषु प्रथमं यथा - संस्कृतभाषिणामयं समाजो नासीद् रक्तसम्बन्धे वर्णगुणे वा बद्धादर, आर्य-शब्दस्तत्र गुणे चारित्र्ये वा व्यवहृतः, न जात्यर्थे। तेन च आचरणमेव आर्यत्वबोधकमिति ऊरीकृतम्। पृथिवीसूक्ते समुपवर्णितं मनुष्याणां वचसा धर्माणां च नानात्वमेतस्मिन्नाचरणस्यैक्ये सुगुम्फितं जायते। अपरं वैशिष्ट्यं यथा—अयं समाज एतद्देशैतत्कालवैशिष्ट्यं परिहृत्य देशकालातीतं चिन्तयति स्म। आचरणस्य साधुता एवात्र स्थितिरिति स्वीकृता, अतश्च धर्मस्य भाषाया वा व्यपदेशोऽत्र भौगोलिकं किमपि स्थानं, जातिविशेष वोपजीव्य न विहित। ज्ञानस्यान्वेषणेऽश्रान्तआग्रहोऽस्य समाजस्य तृतीयं वैशिष्ट्यम्। वेदप्रामाण्यवादिनो वेदं ज्ञानरूपं मत्वा तस्मिन् ज्ञानस्य नैरन्तर्यं प्रत्यक्षीचक्रु, परम्परायाः प्रक्रमे सातत्ये च दृढमनुरोधं चक्रुः। ये पुनर्वेदमप्रमाणयन्ति स्म, तेऽपि तर्कं प्रतिष्ठाप्य ज्ञानमन्विष्यन्ति स्म। वाचिकपरम्परायामाप्तवचसि वा विश्वासश्चतुर्थं संस्कृतसमुदायस्य वैशिष्ट्यम्। दैनन्दिने जीवने, चिन्तने साधनायां वा सर्वत्र वाग्देवतायाः विजृम्भणमस्मज्जीवने दरीदृश्यते स्म। जगति सामरस्यदृष्टिर्नाम पञ्चमं वैशिष्ट्यम्। इदं च सामरस्यं नाम न सिद्धं वस्तु, अपितु निरन्तरमेव साधनीयम्; निसर्ग-मनुष्यसृष्ट्योः, नैसर्गिक-सामाजिकस्थित्योर्वा मध्ये सामरस्यस्थापनायै साधनाया अपेक्षा निरन्तरमन्वभूयत। यदि नाम संघर्षस्याप्यवकाशोऽस्मच्चिन्तने विद्यते, सोऽपि न स्यान्निसर्गविरुद्ध संघर्ष, अपितु तदधिकृत्य नेन स्वकीयेनाज्ञेन अल्पज्ञानेन वा विरुध्यतेऽसौ संघर्षं। सामरस्यं नाम तादात्म्य-स्थापनायै भावनात्मक प्रयत्नः। साहित्ये, भक्तिसाधनायां कलासर्जनायां वा एष प्रयत्नो युगलमञ्जुलपरिकल्पनायाम्, अर्धनारीश्वरभावनायां, यग्ममूर्तिषु वाभिव्यज्यते। षष्ठं वैशिष्ट्यं विद्यते—स्वातन्त्र्यावधारणा

नाम । स्वातन्त्र्येण न व्यक्तेरभ्युदयेन परस्याभिभव इति तात्पर्यमत्र ग्राह्यम्, अपितु समेषामेव साकल्येन समुन्नतिर्नाम स्वातन्त्र्यम् । स्वात्मायतनविश्रान्त-, प्रातिभज्योतिष- प्रस्फुटनस्यकामनैव स्वातन्त्र्यम्, न पुनर्बौद्धिकलाटस्थ्यकामना । अन्ततश्च—परोक्षप्रियता 'नाम परमं वैशिष्ट्यं' संस्कृत-संहृते । ब्राह्मणेषु देवा परोक्षप्रिया इति निगदितम् । यथा यज्ञीयं पुष्करपर्ण नास्ति स्थूल-वनस्पतिजगत. पुष्करपर्णम्, तथैव भारतीयकलासर्जनासु गोचरीकृतं मनोज्ञं कमलपुष्पमपि नास्ति इन्द्रियानुभवगम्यं कमलम् । अवितथमाह विपश्चिदपश्चिम. श्रीकुमारस्वामी यदिद कमलं नाम अधिदैवतमिति वक्तुं शक्यते, नेदं प्रत्यक्षप्रमाणविषय । एवं च परोक्षप्रियतायाः समुल्लासभूतमिदं प्रतीकतत्त्वं संस्कृतकाव्यमन्दिरे वागर्थद्वारं निर्मिमीते, तथापि साहित्यजीवातुभूतमिदं प्रतीकतत्त्वं न स्वात्मनि विश्रान्तं साध्यं वा विद्यते, अपितु साधनमेव ।

एतादृशस्य विरलवैशिष्ट्यसंवलितस्य मनुष्यसमुदायस्य स्वात्मावबोधो । संस्कृतसाहित्यम् । अस्य समुदायस्य समुदारा कल्पा 'भूमा वै सुख' ।मति भावना जीवनस्य शाश्वतादर्शश्चाविष्चक्र् । यदर्थं च भारतीयाना समग्रताया एकतायाश्चाद्यापि पृथिव्या मानदण्ड इवैतत् साहित्यं राजते । अस्य साहित्यस्य मानदण्डा एव विजातीयप्रभावैर्विकृतिमापन्नस्यापि समग्रभारतीयसाहित्यस्याधारस्तम्भा सन्ति ।

संस्कृतसाहित्यस्य मूलाधारा. पञ्चधा विभज्य विवेक्तुं शक्यन्ते । तत्र प्रथमो नाम-एतज्जगदधिकृत्य सम्पृक्तापि विश्लिष्टा विशिष्टा दृष्टि. । संस्कृतसाहित्ये वस्तुजगतो दर्शन सङ्कीर्णदृष्ट्या न करणीयम् । वस्तुजगतो यादृगपि स्वानुभवभावितं रूपं कविप्रजापते. सहृदयस्य च सचेतसश्चेतसि लसति, तत् तादृगेव काव्यसंसारे निरूप्यते, अतश्च स्थावरजङ्गमात्मकं वस्तुजातमिदमित्थन्तया नानुक्रियते । अतश्च साहित्यजगत् न भवति सर्वथा काल्पनिकं न वा वास्तविकम्, तत् तु आनुभविकमेवेति वक्तुं शक्यते । अनुभविता यदा जगदधितिष्ठति, तदा आनुभविकं जगदिदं भासते । एतदेव कारणं यत् संस्कृतसाहित्ये निरूपितं जगत् क्वचित् गणितात्मकमिति प्रतीयते, तद्गतानि सौन्दर्यवर्णनानि च पूर्वतोऽनुवृत्तानीव प्रतीयन्ते, किन्तु साहित्यस्यास्य सम्यक् परिशीलनेन विशदीभवति तथ्यमिदं यदेतादृशानि वर्णनानि अनिर्वचनीयानुभवविश्रान्तसंविदोऽनुभवितुर्भावस्याभिव्यक्तेः साधनान्येव सन्ति ।

दिक्कालानवच्छिन्नोऽवबोधः साहित्यस्यास्य द्वितीय आधारः । पाश्चात्यसाहित्ये कालावच्छिन्नत्वं प्रत्याग्रहानुबन्धो देशवैशिष्ट्यं प्रति च सावधानता दरीदृश्यते । संस्कृतसाहित्यं तु दिक्कालपरिधिमतिक्रामन् भूमानं

स्पृशति। अत एवात्र 'पुराकथा,' 'इतिहास'श्चेति शब्दौ समानार्थकतया प्रयुक्तौ। साहित्यस्याराध्या देवा. तथाकथितस्य इतिहासस्य शृङ्खलाभिर्निगडिता न सन्ति। य खलु वाल्मीकेः श्रीराम, यश्च भवभूते श्रीराम, तावुभौ परस्परेण न विरुध्येते, यत उभावपि अनुभवगोचरे सत्यस्वरूपेऽवस्थितौ। इत्थं संस्कृतसाहित्यं क्षणिकसत्तासु न प्रत्ययमाधत्ते, कालप्रवाहस्य नैरन्तर्ये प्रतीतिं प्रकटयति। कमल-हंसयुगल-मृगमिथुनादीना प्रतिमानेन कलासु, जनान्तरेष्वपि पुन. पुर्नमिलितयो नायकयोः कथाभि. साहित्ये च दीपाद् दीपं प्रज्ज्वाल्येव परम्पराया सातत्यं संरक्ष्यते। साहित्येऽस्मिन् युग-शब्दो न कालविशेषावबोधक., परं वृत्तिबोधक.। अतश्च दिक्कालबन्धनानि निराकृत्यापि खरतरकालप्रवाहस्य प्रखराभिव्यञ्जना संस्कृतसाहित्ये समुन्मिषति। एष एव कालचक्र. साहित्ये ऋतुचक्र इति संवत्सर इति जीवनयज्ञो वेत्यभिहित। बौद्धेषु चैप एव धर्मचक्रता धारयति। दिक्कालयो. परिमितावबोधस्याभावात् समुन्मिषितापरिमितभावेऽस्मिन् साहित्ये निसर्गरामणीयकं सर्वत्रानुस्यूतम्। तथैव भारतीयकलास्वपि नैसर्गिक-दृश्यपटी शीर्षस्था सती एव कलाकृतिं मण्डयति। तेन दिक्कालसीमानमतिक्रम्य विराजमानं विश्वस्वरूपमभिव्यज्यते। अतएव हिमालयो नाम न देशविशेषस्य मानदण्डोऽपितु पृथिव्या मानदण्डः। गङ्गा नास्ति केवलमुत्तरभारते प्रवहमाणा नदी, सा विद्यते त्रिभुवन पुण्यसलिलैराप्लावयन्ती तप.पूता भागीरथी। भारतवर्षस्यापि सीमानिर्धारणं महाकविभिमहनीयतयैव कृतं, यतस्तदीये क्रोडे वन-पर्वत-नदी-निकुञ्जादय देव-सिद्ध-विद्याधर-किन्नर-गन्धर्वा तिर्यञ्चश्चापि मनुष्या इव समानया आकूत्या अवस्थिता। अत एव भारतवर्षं नास्ति भौगोलिकक्षेत्रमात्रम्, इदं च तपःपूताना कर्मयोगिना सुविपुला भूमिः, जाज्ज्वल्यमान—यज्ञवेदिकेव च विराजते।

संस्कृतसाहित्यस्य तृतीय आधार. पुरुषवादो विद्यते। पुरुषोऽत्र न मनुष्यमात्रम्, अपितु चैतन्याप्लुतः पिण्ड। 'यत्पिण्डे तद् ब्रह्माण्ड' इति सिद्धान्तात् संस्कृतसाहित्यनिरूपित. पुरुषार्थः पिण्डमात्रेऽखण्डचैतन्यप्रवाहं प्रकटयति। इत्थ पुरुषवादो लोकमर्नास लोकातीतं विराट्पुरुषं प्रतिष्ठापयति। इदं च पिण्ड-चैतन्ययोरद्वैतं शैवे. प्रमातृ-प्रमेय-प्रमाणानामेकाकारत्वेनोपास्यते। अद्यत्वे उदीयमानो मानववादोऽस्य पुरुषार्थवादस्य वामनमेव रूप, तच्चास्माकमहङ्कृते. प्रवञ्चनामेव प्रकटयति। संस्कृतमहाकवीना प्रतिभा तु साक्षादाह्लादिनी संघिनी शक्तिर्वेति विलसति। इय च शक्ति अपूर्णे पूर्णत्व साधके शिवत्वं चादधाति।

चतुर्थ आधारोऽस्य चकास्ति संस्कृतसाहित्ये 'समुन्मिषन्ती शिवदृष्टि.।

अस्याश्च दृष्टेः प्रसारः क्वचिन्निषेधमुखेन शिवेतरक्षतिं कामयद्भिः, क्वचिच्च विधिमुखेन लोकमाङ्गल्यं मार्गमाणैर्महाकविभिर्दर्शितः। एवं तैस्तैः रूपैरियं शिवदृष्टिः सर्वत्र संस्कृतकाव्यपरम्परायामनुस्यूता। तयैव दृष्ट्या आलोकनान्मानवदेहोऽपि शिवस्याधिष्ठानमित्यूरीकृतः। शवे शिवत्वमादधानाया अस्या दृष्टेः कारणात् संस्कृतपरम्परायां पाश्चात्त्यानामिव न दृश्यते धार्मिकान्दोलनानामाडम्बरः, यतो हि मनसि वचसि काये श्रुतौ दृष्टौ च प्रतिष्ठितः शिवोऽन्यत्रानुसन्धानं नापेक्षते। एतदर्थं च शोकान्तिकानामप्यभावो विद्यते संस्कृतकाव्यपरम्परायाम्। यत्र देहस्य दृश्यमानजगतो वा परमार्थतः प्रतिकूला अवाञ्छनीया परिणतिः संभाव्यते, तत्रैव शोकान्तिकाया उदयः स्यात्। किन्तु संस्कृतसाहित्ये शोकान्तिकाया अभावात् कारुण्यबोधोऽपि न विद्यत इति शङ्का न कार्या। अत्र कारुण्यभावना भूयसा विभाव्यते शिवेन समन्विता। यथा शिवेतरः शिवस्य प्रतिषेधेऽक्षमस्तथैव शिवेतरक्षत्यापि शिवप्रच्छादिकायाः शक्त्या नाश एव गम्यते, न तिरोभावः। एतस्याश्च शिवदृष्टेः संवलितत्वात् संस्कृतसाहित्ये तपसः तपोवनस्य च शक्तिः, तितिक्षात्यागादयो गुणाः, अखण्डजीवनबोधः परहितसाधना च समाहात्म्यमन्विष्यन्ते परिचीयन्ते निरूप्यन्ते च।

परमार्थसत्ताया व्यावहारिकसत्तायाश्च सम्यगवगत्या मानवचेतनायां परिपूर्णविवेकस्योदयो नाम चरमः परमश्च आधारः संस्कृतसाहित्यस्य। ये संस्कृतसाहित्ये भौतिकविलासं वा शृङ्गारितस्यातिरेकं वा प्रणयलीलापरायणतामेव वा केवलं पश्यन्ति, विदाङ्कुर्वन्तु ते यत् पुण्यपापयोरपचयायैव प्रेम्ण उत्कटताया स्तीव्रतायाश्च निरूपणं मनीषिभिः कविभिः संस्कृतकाव्येषु विहितम्। तच्च यथा—

> दुःसहप्रेष्ठविरहतीव्रतापधुताशुभाः
> ध्यानप्राप्ताच्युताश्लेषनिर्वृत्या क्षीणमङ्गलाः।
> तमेव परमात्मानं जारबुद्ध्यापि सङ्गताः
> जहुर्गुणमयं देहं सद्यः प्रक्षीणबन्धनाः॥[१]

१. पद्यमिदं विष्णुपुराणगत-युग्मकेनानेन तुलनीयम्—

> तद्प्राप्तिमहादुःखविलीनाशेषपातका।
> तच्चिन्ताविपुलाह्लादक्षीणपुण्यचया तथा।
> चिन्तयन्ती जगत्सूतिं परब्रह्मस्वरूपिणम्।
> निरुच्छ्वासतया मुक्तिं गतान्या गोपकन्यका।

—(सम्पादकः)

दुस्सह-स्मर-सन्तापेन पापक्षयस्य अच्युताश्लेषस्मरणेन पुण्यफलभोग-नाशस्य च विधिं संस्कृतसाहित्यं निर्दिशति, येन जीवः परमात्मना सङ्गच्छते। एतत्साहित्यं सदसतोर्धर्माधर्मयोरन्तर्द्वन्द्वस्य समाधानं विवेकेन कारयति। स च विवेक आत्मानात्मनोः कार्यं। कालिदासीये काव्ये 'हृदयेन रूपं निन्दन्ती' 'पर्याप्तसन्ध्येव शरत्त्रियामा' पार्वती प्रेम्ण पवित्रताया अनवद्यतायाः शुभ्रतायाश्च साकारता भजते, भवभूते सीतायाश्च स्नेहनिष्यन्दिनी धवलमधुर-मुग्धा दुग्धकुल्येव दृष्टिः हृदयेशं स्नपयन्ती तदीयहृदि गतं सन्तर्पणममृत-रसायनं च्यावयति। तथैव बाणभट्टस्य कादम्बर्या, श्रीहर्षस्य दमयन्त्याः प्रेम्णि निहिता तद्गतैकतानतापि न जातु विवेकविश्रान्तं क्वचित् प्रसरति।

विवेक-समुदयानुशीलनात् संस्कृतसाहित्ये उत्तमो नायको न धीर-प्रशान्तो न धीरोद्धतो नापि वा धीरललितोऽपितु धीरोदात्त एव मतः। कामस्य भस्मसात्करणं, तपोभिः समाधिमास्थाय रूपस्य अवन्ध्यतासम्पादनं चैतादृशविवेकस्योदयादेव परिभाव्येते। अतश्च उच्छृङ्खलप्रणयलीलापराय-णत्वं नाम संस्कृतसाहित्येऽदर्शनं प्रापितं, स्वच्छन्द-प्रणय-कथायाः सङ्कुचिता प्रवृत्तिर्विवेकस्य प्रसृते प्रवाहे निमज्ज्य निलीयते। समुपस्थिते देवैः सहापि सङ्ग्रामे एष विवेक एव मानवानां शिरो देवानामपि समक्षं समुन्नामयति, तस्मादेव च रघ्वर्जुन-नल-रामादयः प्रकर्षशालिनो नायका मनुष्यस्य सर्वोच्च-विकासं निर्दिशन्तस्तत्प्रतिमानतया अवस्थिता। परन्तु नायं विवेकस्ताटस्थ्य-जनितोऽपितु तादात्म्यावह एव। न चायं मनुष्यमानसे बलादारोप्यतेऽपित्वन्तः-करणस्य सहज विवर्तनादेवोज्जृम्भते। अतश्चायं पाश्चात्यानां निर्ममताटस्थ्या-वबोधशालिबौद्धिकभावेन चीनदेशीयानां च निश्चिन्तभावनया विभिद्यते।

एवं च संस्कृतसाहित्यस्याधारभूमौ भारतीया जीवनदृष्टिरधुनाप्यव-स्थिता वरीवर्तीति निश्चप्रचम्। भाषासु विभिन्नाभिः सरणिभिः समुत्पद्यमान-घातप्रतिघातव्रातं वहन्त्या अखण्डचेतनयोद्भासिता प्रतिसाहित्ये अद्वैत-मादधाना या शक्तिः सापि संस्कृते तत्र निधापिते सांस्कृतिकरिक्थे ए-सर्वात्मना गोचरीक्रियत इत्यपि सुस्पष्टमेवेति दिक्।

निर्देशकः, क० मा० मुंशी
शोधसस्थानम्, आगरा।

# राजचूडामणिदीक्षितस्य महाकाव्यद्वयम्

रामलखनपाण्डेयः

## रुक्मिणीकल्याणमहाकाव्यम्

रुक्मिणीकल्याणमहाकाव्यस्य रचयिता राजचूडामणिदीक्षितः प्रख्यातो दाक्षिणात्यः कविः। अस्य पिता रत्नखेटोपनामा श्रीनिवासदीक्षितोऽपि ज्ञानातिशयोद्भावकत्वाद् 'दन्तिद्योतिदिवाप्रदीप' इत्यादिभिर्विरुदैर्विख्यापितो बभूव। शतार्धादधिकं ग्रन्थानपि पितायं व्यधादिति श्रूयते। तदेतस्य बहुमानितस्य श्रीनिवासदीक्षितस्य कामाक्षीनाम्न्याः पत्न्या गर्भे कविरसौ राजचूडामणिः प्रासूत।[1] वैमात्रेय. केशवदीक्षितः सोदर्योऽर्धनारीश्वरश्चास्य अग्रजौ बभूवतुः। अल्पीयसि एव वयसि पित्रो. दिवङ्गमनादर्धनारीश्वरेण नामाग्रजेन पाल्यमानः शिक्षादिभि· संस्कार्यमाणश्चायं राजचूडामणिः सप्तवर्षदेशीय एव कविकर्म प्रारब्धवान्। अमुमग्रजं कविरात्मनो विद्यागुरुं निर्दिशति। गोविन्ददीक्षितात्मजो वेङ्कटेश्वरमखी अप्यस्य कवे. समर्थो गुरुराख्यायते।

श्रीनिवासदीक्षितः १५८८ ख्रीष्टवर्षे भावनापुरुषोत्तमं नाम स्वग्रन्थमरचयदिति तत्पुत्रत्वादयं सप्तदशशताब्दिको ध्रुवं युज्यते। स्वयमसौ राजचूडामणिरपि स्वस्य तन्त्रशिखामणिग्रन्थस्य रचनाकालं १६३६ ख्रीष्टाब्दं निर्दिशति। नैकेनान्येनाप्यन्त साक्ष्येण बहि.साक्ष्येण चास्य स्थितिकाल सप्तदशशताब्देः पूर्वार्धो निश्चीयते। रघुनाथनायकशासने तद्राजकविरेष तञ्जापुरी नाम नगरीमध्यास्य स्वकाव्यानि प्रणिनाय इत्यपि कवि· स्वयमेव स्वकाव्येषु सूचयति।[2] काव्यदर्पणे नाम स्वग्रन्थे कविरयं स्वरचितग्रन्थानां नामान्यचर्चयत्। तद्वंशजो बालयज्ञेश्वरश्च रुक्मिणीकल्याणे मौक्तिकमालिकाख्यटीकामारभमाणस्तदीयकृतीनां नामोल्लेख विदधाति। तदुभयस्मादेताः प्रमीयन्तेऽस्य कृतयः—

१. रुक्मिणीकल्याणम्, २. शङ्कराभ्युदयम्, ३. आनन्दराघवनाटकम्, ४. कमलिनीकलहंसनाटिका, ५. तन्त्रशिखामणि·, ६. अलङ्कारचूडामणिः, ७. युद्धकाण्डचम्पूः, ८. भारतचम्पूः, ९. राघवकृष्णपाण्डवीयम्, १०. रत्न-

१. आड्यारपुस्तकालयेन प्रकाशिते रुक्मिणीकल्याणमहाकाव्ये टी० आर० चिन्तामणेराङ्ग्लभूमिका कविपरिचयार्थमनुसन्धेया।

२. रुक्मिणीकल्याणम् १५३।

खेटविजयम्, ११. मणिदर्पणम्, १२. काव्यदर्पणम्, १३ साहित्यसाम्राज्यम्, १४. रघुनाथभूपविजयम्, १५. कान्तिमतीपरिणयम्, १६. शृङ्गारसर्वस्वम्, १७. शङ्कराचार्यतारावली, १८ संकर्षमुक्तावली, १९ शास्त्रदीपिकाव्याख्या, २०. यजुर्वेदव्याख्या, २१ उपनिषद्व्याख्या, २२. वृत्ततारावली, २३ प्रायश्चित्तप्रदीपिका, २४. न्यायचूडामणि, (रुचिदत्तवृत्ति) २५. कंसध्वंसनम्, २६ चित्रमञ्जरी, २७ रामकथा।

तत्राद्योपलभ्यमानेषु रुक्मिणीकल्याणम्,[१] शङ्कराभ्युदयं चेति द्वे महाकाव्ये स्त। रुक्मिणीकल्याणमहाकाव्यस्य दशसु सर्गेषु ७२४ पद्यानि लसन्ति। तत्र श्रीकृष्णस्य रुक्मिण्याश्च परिणयः प्रपञ्चितः। परं परिणयप्रपञ्चनमिदं कथावस्तुनोऽवलम्बनमात्रजीवितम्। कथावस्तु चात्र नितान्तं लघुतामावहति। तथापि तदेव स्वल्पतरं वस्तु समवलम्ब्य कविरत्र तादृशीं भावभूमिं विनिर्माति यत्र सर्वमपि जगज्जातं स्नेहस्नातमिव परस्परं परिरम्यमाणं ब्रह्मणश्चरमं मर्म दर्शयदस्महिमकया स्वकं सौन्दर्यमयं स्वरूपं नित्यानन्दमन्दिरे प्रतिष्ठापयितुं चेष्टते। मन्ये कदर्वाक्यमिदं प्रकृतकाव्यसरणिमेव प्रकाशयति—

क्षुण्णेऽपि साहित्यपथे कवीन्द्रैः पुण्येन जायेत नवार्थसृष्टिः।
किं पद्मनाभाहृतकौस्तुभेऽपि चिन्तामणिं सिन्धुरसौ न जातः॥[२]

'पूर्वानुरागरञ्जितः श्रीकृष्णः सन्देशवाहकस्य शुकस्य मुखाद्रुक्मिण्याः प्रणयनिवेदनं श्रुत्वा तमेव शुकमारुह्य कुण्डिनपुरमुपागमत्। तत्र च गौरीं सम्पूज्य निवर्तमाना रुक्मिणीं स्वाङ्के निधाय पूर्वोक्तमेव कीरमारुह्य स्वपुरीं प्रत्यागमत्। पश्चाद् वाह्निकं कर्म सम्पाद्य प्रियया सह मदनगृहं विवेश।' इत्येतावन्मात्रं कतिपयाङ्गुलिगणितैः पद्यैरङ्कितं कथावस्तु नितरामनुपङ्गतो महाकाव्यगतं धारयति। स्वल्पस्यापि कथावस्तुनस्तदिदं गौणत्वं कीरवाहनत्वाभिधानेन परिणीतिसम्बन्धिनैकाव्यघटनापरित्यागेन च कविर्व्यञ्जयत्येव। प्रधानतश्च यदस्ति कवेर्वक्तव्यं तत्र परमोपकारकत्वेन चरमं प्रेमानुबन्धनं सूचयितुमेव तथाख्यातः श्रीकृष्णगतं वस्त्वत्र सर्वथा युक्तं भाति। मुख्यं वक्तव्यं चात्र दैहिकप्रेम्णः परिपाकधारम्पर्येणात्मिकत्वाधिगमनमेवास्ति।

---

१ रुक्मिणीकल्याणमहाकाव्यं सर्वप्रथमं श्रीवाणीविलाससमुद्रणालयस्य सम्स्कृतसीरिजः नवमेऽङ्के पूर्णतया मूलमात्रं प्रकाशितं सम्प्रति दुर्लभप्रायम्। आड्यारपुस्तकालये तस्यैका प्रतिरुपलभ्यते। बालयज्ञेश्वरकृतया मौक्तिकमालिकया टीकया समन्वितं सर्गद्वयात्मकं आड्यारतः १९२९ ईसवीयवर्षे प्रकाशितं बहुत्र लभ्यम्।

२ रु० क० १.३३।

षष्ठे सर्गे प्रथमं द्वयोरनयोर्विवाहः प्रपञ्चितः। पश्चात्तयोर्मदनगृहगतं प्राथमिकं किमपि वस्तु व्यक्तीकृतम्—

प्रापितापि रुचिरं प्रियस्य सा गन्तुमैहत सखीजनैः समम्।
वीक्षिताप्ययतत दृष्टिमन्यतो भाषिताप्यकृत मौनमुत्तरम् ॥८४॥
कंचुकं व्यपनयत्यथ प्रिये स्वस्तिकं समतनिष्ट भामिनी।
सस्पृहं प्रियतमोऽपि सस्वजे वञ्चितोरुकुचमर्दनं बहिः ॥८७॥
रत्नदीपवितथासु फूत्क्रियास्वङ्गना मुकुलितेक्षणा स्वयम्।
अंशुकं हरति वल्लभे बलात्सस्वजे तदवलोकलज्जया ॥८८॥

सप्तमसर्गादारभ्य ग्रन्थान्तं यावत्कविः श्रीकृष्णरुक्मिण्योः संगमनोद्भावितं किमप्यलक्ष्यमनिर्वचनीयमपि परमलक्ष्यभूतमानन्दैकस्वरूपं स्वान्तस्तत्त्वमेव नैकधा समुद्भावयितुं चेष्टते। तथाविध रत्युद्भेदपरिवेशमाविष्कर्तुमत्र परःशताः प्रकृतयः प्रचीयन्ते सर्वतश्च शुचि रूप्यन्ते। अत्र कवेः शृङ्गारभावना तादृशीमुदात्तभूमिमवस्थाय विलसतितरां यत्र सर्वमपि जगदिदं प्रेमाश्लिष्टं भवदनेक्येऽप्यैक्यं प्रमाणयति। कथावस्तुहीनमपीदं सर्गत्रयं सुतरां साधयति खलु महाकाव्यस्यास्य सार्वत्रिकमभ्युदयम्। एवंविधमृतुवर्णनकौशलं प्रकृतिचित्रणचातुर्यं वा विरलं विलोक्यते।

तदेव कवित्वखचितं महाकाव्यमिदं स्वकविं राजचूडामणिं कविचूडामणिपदेऽपि प्रतिष्ठापयति। पदप्रयोगचातुरी शब्दार्थादिगतमाधुरीं मन्दमान्दोलयन्ती काममप्यभिनवां रीतिं पुष्णाति। अत्रत्या कविता स्वशोभां वर्धयितुं नैव क्वचिदप्यलंकारं समवलम्बतेऽपितु काव्यगतस्वाभाविकालौकिकलावण्ये स्वयमेवालंकाराः समुत्पादिता भवन्ति। पुराणादिगतवस्तुन्युपलब्धमप्यथ महाकाव्यलक्षणेष्वादत्तव्यस्तविनिवेशितमपि प्रकृतपरिणयगत-युद्धादिकं परित्यज्य मन्ये कविरधिकमेवात्र महाकाव्यत्वं सम्पादयतीति।

## शङ्कराभ्युदयमहाकाव्यम्

ब्राह्ममुहूर्ते कविरयं स्वप्ने कदाचिदादिशङ्कराचार्यं प्रत्यक्षीकृत्य तत्प्रेरणयैव तदीयजीवनगतानुकीर्तनपरं शङ्कराभ्युदयं व्यरचयत्।[१] शङ्कराचार्यमधिकृत्य नैकेष्वन्येष्वपि काव्येषु काव्यमेतदवश्यं स्वस्थानमतिशायित विदध्यादेव निजाभिव्यक्तिगुणगौरवेण। दशसु सर्गेषूपनिबद्धं महाकाव्यमिदं अष्टमसर्गपर्यन्तं सहृदया—पत्रिकायां प्रकाशितं मयावलोकितम्।[२]

---

१. अत्र द्रष्टव्यानि शङ्कराभ्युदयस्यादिमानि कविपरिचयात्मकपद्यानि।

२. महाकाव्यमेतदष्टसर्गपर्यन्तमपूर्णं सहृदयाया संस्कृतपत्रिकाया न्यू सीरिज् वाल्यूम् V तथा VI इत्यत्र प्रकाशितम्। अन्तिमस्य सर्गद्वयस्य पदपाठोऽनेकत्र त्रुटितो वर्तते।

कथावस्तु

केरलेषु कालदिनामकेऽग्रहारे विद्याधिराजस्यात्मजः शिवगुरुर्वसति स्म। सपत्नीकः स पुत्रप्राप्त्यै शिवमानर्च। प्रसन्नात्मा शिवः साक्षादागत्य वरं दातुमैहत। सर्वज्ञमेकमल्पायुषं मूढमनेकचिरायुषं वा याचस्व इति। विप्रो विचार्य सर्वज्ञमेकं समयाचत। प्राप्तकाले तद्गृहे शङ्कराचार्यनाम्ना स्वयं शङ्करोऽवातरत्। बाल्य एव तत्पितरि दिष्टगतिं गते बन्धुभिरुपनीतः स सर्वमधीत्य सर्वज्ञपदवी लेभे। कदाचिद्राजशेखरनाम्ना नृपेण दत्तं द्रविणमसौ दृशापि नास्पृशत्। एकदा स्नानाय निम्नगां गन्तुमक्षमां मातरं विलोक्यायं स्वयोगशक्त्या निष्कुटेऽम्बाभिधा नदी निर्ममे। अथ कदाचिददूरस्थितायां मातरि शुद्धाष्टम्यामेष नदीजले ग्राहेण गृहीतचरणो जननीमवोचत्। भगवता तुभ्यमष्टवर्षैकजीवित एव दत्तोऽहं सम्प्रति गच्छामीति। माता उच्चकै रुरोद। जन्मान्तरतया चतुर्थमाश्रमं प्राप्य पुनरष्टौ वर्षाण्यहं जीवामीति जननीमाश्वास्य खल्वेष सन्न्यस्तोऽभवत्। गोविन्दभगवत्पादं च स्वगुरुं विधाय संन्यासगृह्यविहितं समाचरत्। शेषावतारस्य गुरोराज्ञया विष्णुसहस्रनामस्योपनिषदां च भाष्यं व्यतानीत्। प्रपञ्चसार सौन्दर्यलहरीत्यादिकं चारचयत्। तैर्थिकजनैः सह तीर्थपादैश्च बदरिकाश्रमं गत्वा तत्र ब्रह्मसूत्रस्य भाष्यं कुर्वंश्चिरमुवास। विशालायां बदरिकायां शङ्कराचार्यो व्यासमुनिं द्रष्टुमैच्छत्। तदीहासमकालं शुकसेव्यमानो मुनिर्व्यासः साक्षादभूत्। ब्रह्मसूत्रभाष्यं विलोक्य स परमां प्रीतिमवाप समाशिषच्च शङ्कराचार्यम् पूर्वत एव षोडशवर्षावधिजीवितस्त्वं भूयोऽपि भवाज्ञया षोडशवर्षायुषं लभस्व इति। अथ पर्यवसितेऽल्पकाले शङ्कराचार्यः स्वकीयभाष्यं कुमारिलभट्टेन सवार्तिकं कारयितुं मनोऽधत्त। भट्टोऽसौ प्रयागसमीपे गङ्गातटे वसति स्म। मार्गे सुरनदीं स्तुवन् शंकरः स्वयोगबलेन झटिति तदीयस्थानमवाप। अन्तर्विवेकिनोरनयोर्मिलनमनन्तादिकालपरिचितिं व्यञ्जयति स्म। सौगतं बलं निहन्तुं कार्तिकेयभिन्नतनुस्त्वं मदीयभाष्ये वार्तिकं विलिख इत्याह शंकरमुनिः। कुमारिलस्तत्र स्वकीयमसामर्थ्यं निवेद्य मगधसीम्नि वसन्तं विश्वरूपनामकं पण्डितधुरीणं शास्त्रार्थे विजित्य तेनैव भाष्यवार्तिकं कारयितुं न्यवेदयत्। चार्वाकदर्शनाध्ययनवशाद्विधातृशापवशङ्कतो विश्वरूपनामधेयः पण्डितोऽसौ भिन्नतनुरिन्द्र एवासीत्। शङ्कराचार्यस्तद्देशं त्वरितमुपगम्य भिक्षायां तद्गृहे शास्त्रार्थं समयाचत। भ्रष्टत्वमालोक्य विधात्रा परिशप्ता सरस्वती उम्बाभिधामुपेत्य विश्वरूपस्य पत्नी संजाता इति सैवात्र शास्त्रार्थविधौ साक्षित्वेन नियोजिता। शास्त्रार्थस्य सप्तमेऽह्नि विश्वरूपं पराजितं निर्णीय उम्बा शापमुक्ता बभूव। विश्वरूपस्तु शङ्करमुनिं स्वगुरुं चकार। परं भाष्यस्य वार्तिकनिर्माणे अयमपि स्वस्याशक्तिं प्राकटयत्। गुरोराज्ञया पुनरसौ नैष्कर्म्यसिद्धिं नाम स्वकृतिं व्यधात्।

प्रसन्नस्य गुरोर्भूयोऽनुज्ञया भाष्यस्योपटीकं वार्तिकमपि ततान। प्राप्तकाले वाचस्पतित्वमधिगत्य भवान् मदीयभाष्यटीकामपि विधास्यतीति गुरुस्तमाशिषत्।

जरातुरां मातरं मरणशय्यागतां विज्ञाय शङ्कराचार्यः स्वयोगेन शीघ्रं कालटि नामाग्रहारं गतवान्। तत्र चासौ जनन्यै नित्याद्वैतं तत्त्वमुपदिदेश। निर्गुणे तद्गतिर्नास्तीति सगुणं नारायणमपि समदर्शयत्। त्यक्तजीविताया तस्यां स्वयमेव तदीयं चरमं कर्म कर्तुं प्रस्तुतममुं बान्धवो नाधिकारित्वेन संन्यस्तरीत्या निनिन्दुः। इयं बन्धुता नैवाग्निकणमपि दातुमक्षमत। शङ्करश्च स्वयोगानलेन मातुरग्निसंस्कारं कृतवान्। तदेवं मातृवियुक्तो बन्धुभिर्निन्दितश्चासौ चिरं केरलेष्वभ्रमत। अथ कदाचिदुपागतैः पूर्वशिष्यैर्गुरुरयं प्रबोधितोऽभूत्। परस्परं कुशलानुगता वार्ता प्रचलिता। तदनुसारं पद्मपादस्य भाष्यटीका लौकेर्ज्वालिता। भैक्षे मतिमान्द्यकरं गरं चादत्त। मुनिवरेण सान्त्वितोऽसौ शिष्यवरः पञ्चपादिकामरचयत्। तदनन्तरं सशिष्यगणः शंकरो राजशेखरं राजानममिलत्। तोटकार्यं नीरोगं चकार। शिवबल्लीं नाम नगरीं चोषित्वा तत्रैकं मेधाविनं विप्रबालकं हस्तामलकनाम्ना दीक्षयामास।

अथ शिष्यैः सह तीर्थानि सेवमानोऽयं गोकर्णनाथमस्तुत। हरिशंकराख्यं तीर्थस्थलं च गत्वा द्व्यर्थाभिः स्तुतिभिस्तत्र हरिं शङ्करं चापूजयत्। ततो मूकाम्बिकाया मन्दिरं प्रतस्थे। मार्गे द्विजदम्पत्योरेकमात्रं पुत्रं मृतमपि स्वयोगबलेन पुनरुज्जीवयामास। अथाग्रे वनपथे मरुगं नाम नृपं मृतशरीरं व्यलोकयत्। सर्वज्ञत्वाय स तदीयशरीरं प्रविश्य कामशास्त्रज्ञो बभूव। तद्राज्ये च राजकुमारमभिषिच्य दिनत्रयानन्तरं पुनः स्वशरीरमाप। पश्चान्मूकाम्बिकायाः सिद्धस्थलमुपगम्य तां तन्त्रदेवीं प्रार्थयत। तत्र एकान्तं सेवमानममुं कश्चित्कापालिकः स्वकपटबलेन हन्तुमैहत। तदैव सौभाग्यात्समागतः सनन्दनाख्यः शङ्करशिष्यः प्रकृतविपत्तिवारणाय प्रह्लाद इव नृसिंहं सकरुणमाह्वयत्। नृसिंहश्च प्रकटीभूय साट्टहासं कापालिकं ममार। शङ्करस्तममुं प्रार्थयत।

अथ पञ्चमसर्गादारभ्याष्टमसर्गपर्यन्तं शङ्कराचार्यस्य तीर्थाटनमेव प्रपञ्चितम्। तदस्मिन् प्रकरणे नैकाः स्तुतयः विलसन्ति। अनन्तशयनस्थले शेषशायिनं नारायणम्, मधुरायां (मदुरई) शशिखण्डमण्डनं शिवम्, तत्रैव देवीं मीनाक्षीम्, सेतुबन्धतीर्थे रामेश्वरं तथा श्रीरामम्, वृषाचले सुन्दरेश्वरम्, श्रीरङ्गनगरे रङ्गनायकम्, द्वारवत्यां राजगोपालम्, कम्पातीर्थे कामेश्वरीम्, तदन्यानेकत्र नैकदेवतां स्तुवन् सशिष्य शङ्कराचार्यो महतीं प्रीतिमवाप। अत्रैकैकदेवदर्शने मुनिमुखादुपस्थापिताः स्तुतयश्चेतोहरा भान्ति। अनुपलब्धे ग्रन्थस्यान्तिमे सर्गद्वये शङ्कराचार्यस्यावशिष्टं जीवनं वर्णितं भवेत्।

काव्यकला

रुक्मिणीकल्याण इवास्मिन्नपि महाकाव्ये कविवरस्य पदप्रयोगचातुरी प्रमुज्जृम्भते । अन्यूनानतिरिक्तपदप्रयोगैरपि नैवावलोक्यते क्वचिदपि क्लिष्टता—

द्वैतवाद कुचद्वन्द्वे मध्ये माध्यमिकं मतम् ।
गर्भस्थ एव पृथुको गर्हयामास सुभ्रुव ॥१२५॥

पद्भ्यां संताडयन्नेव पर्यङ्कफलकं शनैः ।
बिभेद शतधा सद्यो भेदवादिमनोरथम् ॥१३२॥

द्वित्रान्वर्णान् वदत्यस्मिन् द्वैतिनो मौनिनोऽभवन् ।
पद्भ्या सञ्चरमाणे तु पलायन्त दिशो दश ॥१.३३॥

क्वचित्समासभूयस्कतामधिकृत्यापि कविस्तत्र माधुर्यमेव विलासयति । तद्यथा शेषशायिनः स्तुतिगतम्—

रसनाग्रजाग्रदरविन्दभूवघूनवमौक्तिकाभरणदन्तपंक्तिकम् ।
कलशाम्बुराशितनयोष्ठमाधुरीगरिमैकसाक्षिरसनाग्रवल्लभम् ॥५७॥

वदनारविन्दरमणीयतासुधाजलराशिविद्रुमलतायिताधरम् ।
रमणीयगण्डतलकान्तिवीचिकाविहरन्मणीमकरकुण्डलोज्ज्वलम् ॥५८॥

अधिकत्र पृथक्पदत्वमेवाश्रयति कविः—

विविधेषु जलाशयेषु सोऽयं सवितेव प्रतिबिम्बितस्वभाव ।
अनुरूपमिदं प्रविश्य विश्वं स्वयमेकोऽपि भवान् विभात्यनेकः ॥३२१॥

कविरेष राजचूडामणिर्विषयविरक्तस्यापि शंकराचार्यस्य चरितमत्र यथा चारुतया सरसया पदावल्या चित्रयति यद्वशान्नूनमस्य कवित्वं धन्यतामुपैति । आनन्दसीमानमवस्थाय कवयितुरस्य हृद्गतं स्वानुभूतमेवात्र पद्ये प्रकाशितं भवति—

प्रसभं स विलिख्य पञ्चपादीं परमानन्दभरेण पद्मपादः ।
उदतिष्ठदतिष्ठदभ्यरोदीदुदगायद्धसति स्म नृत्यति स्म ॥३३४॥

—शोधच्छात्र
सागरविश्वविद्यालये

# संस्कृतरूपकेषु पताकास्थानकम्

क्षेत्रवासी पण्डा

कथावस्तुनो भाविकार्यव्यापाराणां सूचनार्थे नाटकीयकथावस्तुनो विकासाय चोपयुज्यमानं पताकास्थानकं नाम नाटकीययुक्तिषु अन्यतमम्। अस्य लक्षणं नाट्यशास्त्रे यथा—

यत्रान्यस्मिंश्चिन्त्यमाने तल्लिङ्गोऽन्यः प्रयुज्यते।
आगन्तुकेन भावेन पताकास्थानकं तु तत्॥
(का० मा० सं०१९.३१)

भावप्रकाशने च—

आगन्तुकेन भावेन यदभिव्यक्तिकारणम्।
वस्तुनो भाव्यवस्थस्य पताकास्थानकं तु तत्॥
भा० प्र०—(G. O. S)—पृ० २०२

सर्वैरालङ्कारिकैर्लक्षणमिदं स्वीकृतम्।

अत्र आगन्तुकभावस्यार्थस्तु व्यभिचारिभाव इति सगरनन्दिनो मतम्। तन्मतानुसारेण—यत्रान्यस्मिंश्चिन्त्यमाने तल्लिङ्गमागन्तुकेन व्यभिचारिणा जातं तत् पताकास्थानकम्। यथा दशरथाङ्के—दशरथो रामस्य राज्ये चिन्त्यमाने भरतस्य राज्यं तल्लिङ्गजातमिति विषादेनागन्तुकेन व्यभिचारिणा भावेन गृहीतः पठति—रामोऽपि गच्छतु वनमित्यादि।[1]

कथावस्तुनो क्रमिकविकासाय पताकास्थानकं प्रयोक्तव्यमिति सर्वैर्नाट्यशास्त्राचार्यैरूरीकृतम्। नाट्ये पताकास्थानकं नाम किमप्यतितरां चमत्काराधायकं तत्त्वं, येन प्रेक्षकाणां कुतूहलवृद्धिः कथानके च प्रकर्षः साध्यते।

नाट्यशास्त्रे पताकास्थानकस्य चातुर्विध्यं वर्णितम्।[2] मतमिदं दशरूपककारं विहाय अन्यैराचार्यैः स्वीकृतम्। पताकास्थानकं द्विविधमिति दशरूपके धनञ्जयः प्रतिपादयति। तन्मतानुसारेण भावी अर्थो यत्रान्योक्त्या सूच्यते तत् प्रथमं पताकास्थानकं—तुल्यसंविधानकमिति, यत्तु समासोक्त्या प्रतिपाद्यते तत् द्वितीयं पताकास्थानकं—तुल्य-विशेषणमिति।[3] भावप्रकाशने

---

१. ना० ल० र० को० (प्रभाव्याख्योपेत) पृ० १०१

२. ना० शा० (का० मा० स) –१९ ३२-३५

३. तच्च तुल्येतिवृत्ततया तुल्यविशेषणतया च द्विप्रकारं च—अन्योक्तिसमासोक्तिभेदात्। [दशरूपकम्—(सावलोकम्)—पृ० ९]

शारदातनयेन यद्यपि सिद्धान्तोऽयं स्वीकृत. तथापि नाट्यशास्त्रस्य चतुर्विधं पताकास्थानकं समर्थयता तेन प्रतिपादित यत् आद्यं तुल्यसंविधानरूपं त्रिविधं, तुल्यविशेषणरूपं चैकविधं, एवं चतुर्विधं पताकास्थानकम्।[1] सिहभूपालोऽपि रसार्णवसुधाकरे मतमिदं द्रढयति। अत पताकास्थानकस्य चतुर्विधत्वं सर्व-सम्मतम्। पताकास्थानकनिरूपणे दशरूपके तु महती विसंगतिर्विलोक्यते, यतस्तत्र नाट्यशास्त्रीया स्थापना तत्परम्परा चानुचितमुल्लंघिता।

प्रथमं पताकास्थानकम्—यत्र सहसैव अभीष्टार्थः समायाति, तत् प्रथमं पताकास्थानकम्।

सामान्येनोच्यते—

सहसैवार्थसम्पत्ति गुणवत्युपचारत:।
पताकास्थानकमिद प्रथम परिकीर्तितम्॥[2]

यथा रत्नावल्यां—लतापाशाबद्धा वासवदत्तारूपभूता सागरिकां दृष्ट्वा वासवदत्तेयमिति मन्यमानो राजा यदा पाशं मोचयति, तदा सागरिका प्रत्यभिज्ञाय कथयति—"कथं प्रिया मे सागरिका। अलमलमित्यादि।" अत्र राज्ञ. प्रयोजनसिद्धिर्भवति।

नागानन्दे च—

वासोयुगमिदं रक्तं प्राप्ते काले समागतम्।
महतीं प्रीतिमाधत्ते परार्थे देहमुज्झत:॥

परार्थे प्राणांस्त्यक्तुकामाय जीमूतवाहनाय अदत्तं वध्यचिह्नं तद् व्याकुलाय तस्मै कञ्चुकिनानीय मित्रावसुजनन्याप्रहितं रक्तवासोयुगलं दत्तम्। अन्यस्मिन्नुपाये चिन्तिते सहसोपायान्तरप्राप्ते उदाहरणमिदम्।

शाकुन्तले—सख्यौ—इमं जीवितसर्वस्वेनाप्यतिथिविशेषं कृतार्थं करिष्यति।[3] अत्र 'जीवितसर्वस्वेति पदेन सहसैव शकुन्तलाया. ज्ञानं भवति।

ललितमाधवे—राधिका—(परिक्रम्य पीतोत्तरीयाञ्चलं गृह्णती सकम्पम्)

दग्ध हन्त दधानया वपुरिदं यस्यावलोकाशया
सोढा मर्मविपाटने पटुरियं पीडातिवृष्टिर्मया।

१. भा० प्र० (G. O S) सप्तमोऽधिकार—पृ० २०३

२. ना० शा० (का० मा० म०)—१९.३२

३. अ० शा०—प्रथमोऽङ्क

कालिन्दीयतटीकुटीरकुहरक्रीडाभिसारव्रती
सोऽयं जीवितबन्धुरिन्दुवदने भूय समासादित ॥ (७.१८)

अत्र सोऽयं जीवितबन्धुरिति उपचारप्रयोगेण भाविनः कृष्णमिलनस्य सूचनात् सहसार्थसम्पत्तिरूपमिदं पताकास्थानकम् ।

मालविकाग्निमित्रे — विदूषकः — (अपवार्य) उपट्ठिदं णअणमहु । सण्णिहिअमक्खिअं अ । ता अप्पमत्तो दाणि पेक्खदु भवम् । (द्वितीयोऽङ्कः) अत्र नयनमध्वोः (णअणमहु) मालविकाया माक्षिकमिति पदेन धारिण्याः ज्ञानं भवति । सहसार्थसम्पत्तिरूपमिदं पताकास्थानकम् ।

विक्रमोर्वशीये—चित्रलेखा—

'ननु प्रथमं मेघराजिर्दृश्यते, पश्चाद्विद्युल्लता' । (द्वितीयोऽङ्कः) अत्र 'मेघराजि' रिति पदेन चित्रलेखा 'विद्युल्लता' इति पदेन उर्वशी च सूच्येते । सहसार्थसम्पत्तिरूपमिदं पताकास्थानकम् ।

द्वितीयं पताकास्थानकम्—अतिशयोक्त्यलंकारमवलम्ब्य यत् संश्लिष्टं कथ्यते, तत् द्वितीयं पताकास्थानकम् ।

सामान्येनोच्यते—

वच सातिशयं श्लिष्टं काव्यबन्धसमाश्रयम् ।
पताकास्थानकमिदं द्वितीयं परिकीर्तितम् ।.[१]

यथा वेणीसंहारे—सूत्रधार.—

निर्वाणवैरदहना. प्रशमादरीणा
नन्दन्तु पाण्डुतनया सह माधवेन ।
रक्तप्रसाधितभुव. क्षतविग्रहाश्च
स्वस्था भवन्तु कुरुराजसुता. समृत्या ॥ (१.७)

अत्र रक्तप्रसाधितक्षतविग्रहाद्यनेक श्लिष्टवचसः सत्त्वात् द्वितीयं पताकास्थानकम्, अत्र श्लिष्टैः पदैः कौरवाणा विनाश पाण्डवाना विजयश्च सूच्यते ।

ललितमाधवे—कृष्णः—

स्मररोधनानुबन्धी क्रमविस्तारितकलाविलासभव. ।
क्षणदापतिरिव दृष्टः क्षणदायी राधिकासङ्ग ॥ (२ १७)

---

१. ना० शा० (का० मा० सं) —१६ ३३

(नेपथ्ये) दुर्लभ. पुण्डरीकाक्ष वृत्तस्ते विप्रकर्षत ।
कृष्णः – (सव्ययमुच्चैः) भो· कोऽय दुर्लभः ?
(पुनर्नेपथ्ये) यत्नादन्विष्यमाणोऽपि वल्लवै पशुमण्डलः ॥ (२ १८)

अत्र भविष्यतो राधासङ्गमदुर्लभत्वस्य सूचनादिदं श्लिष्टं नाम द्वितीयं पताकास्थानकम् ।

शाकुन्तले (नेपथ्ये)

चक्रवाकवधुके आमन्त्रयस्व सहचरम् । उपस्थिता रजनी ।[१]

अत्र गौतम्या आगमनं सूचनादिदं द्वितीयं पताकास्थानकम् ।

मालविकाग्निमित्रे—विदूषक·—(दृष्ट्वा)

ही ही इयं खलु शीधुपानोद्वेजितस्य मत्स्यण्डिका उपनता ।[२]

अत्र शीधुपानोद्वेजितस्येतिपदेन राज्ञः तथा मत्स्यण्डिकेति पदेन मालविकायाः ज्ञानं भवति ।

रत्नावल्याम्—

यातोऽस्मि पद्मनयने समयो ममैष
सुप्ता मयैव भवती प्रतिबोधनीया ।
प्रत्यायनामयमितीव सरोरुहिण्या·
सूर्योऽस्तमस्तकनिविष्टकर. करोति ॥ (३.६)

अत्र सूर्यपद्मिनी वर्णनेन भाविनो उदयन-रत्नावली-रूपवृत्तान्तस्य सूचनादिदं द्वितीयं पताकास्थानकम् ।

तृतीयं पताकास्थानकम्—यदा किञ्चिद् भाविवृत्तं अस्फुटरूपेण सूच्यं भवति तत् तृतीयं पताकास्थानकम् । सूच्यवृत्तमिदं श्लिष्टप्रश्नोत्तरैर्भवति ।

सामान्येनोच्यते—

अर्थोपक्षेपणं यत्तु लीनं सविनय भवेद् ।
श्लिष्टप्रत्युत्तरोपेतं तृतीयमिदमिष्यते ॥[३]

यथा वेणीसंहारे—दुर्योधनः भानुमती कथयति – 'पर्याप्तमेव करभोरु ममोरुयुग्मम्' ।[४] तदानी कञ्चुकी प्रविश्य कथयति 'देव भग्नम्' दुर्योधन.—'केन', कञ्चुकी – 'भीमेन'

१. अ० शा० —तृतीयोऽङ्कः
२ मालविका० —तृतीयोऽङ्कः
३. ना० शा० (का० मा० सं०)—१९ ३४
४. वे० सं०—२.२३

अत्र श्लिष्टप्रत्युत्तरः भाविनं दुर्योधनस्य विनाशं पिशुनयति।

उत्तररामचरिते—प्रथमाङ्के सीतां सस्नेहं परामृशन् श्रीरामः परामृशति—

इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयो—
रसावस्यथाः स्पर्शो वपुषि बहुलश्चन्दनरसः।
अयं बाहुः कण्ठे शिशिरमसृणो मौक्तिकसरः
किमस्या न प्रेयो यदि परमसह्यस्तु विरहः॥ (१.३८)

प्रतीहारी (प्रविश्य)—देव ! उपस्थितः"।

अत्र 'दुर्मुख उपस्थित' इति प्रतीहार्यास्तात्पर्य-विषयेऽपि रामोक्तस्य पुश्लोकस्य 'यदि परमसह्यस्तु विरहः' इत्यनेन पादेनान्वयात् समनन्तरभावी सीताविरहो गम्यते।

ललितमाधवे—श्रीकृष्णः—(सर्वतः प्रेक्ष्य)—

प्रियवयस्य ! कियद्दूरे सा वृन्दाटवी ?

मधुमङ्गल.—

स्फुटच्चटुलचम्पकप्रकररोचिरुल्लासिनी
मदोत्तरलकोकिलावलिकलस्वरालापिनी।
मरालगतिशालिनी कलय कृष्णसाराधिका॥

(इत्यर्द्धोक्ते) कृष्णः (ससम्भ्रमौत्सुक्यम्)—वत्स ! क्वासौ ?

मधुमङ्गल. (अङ्गुल्या दर्शयन्)—पुरः स्फुरति वल्लभा तव—

कृष्ण. (सव्यग्रम्)—वयस्य ! नाहं पश्यामि। तदाशु दर्शय क्व सा राधिका ?

मधुमङ्गलः—मुकुन्द वृन्दाटवी। (७.२७)

अत्र मधुमङ्गलवाक्येन भाविनो राधादर्शनस्य सूचनाच्छ्लिष्टोक्तं नाम तृतीयं पताकास्थानकम्।

मुद्राराक्षसे—चाणक्यः (चिन्तां नाटयति आत्मगतम्)—

अपि नाम दुरात्मा राक्षसो गृह्येत।

सिद्धार्थकः—अज्ज गहीदो। (प्रथमोऽङ्कः)

अत्र सिद्धार्थकस्य श्लिष्टप्रत्युत्तरः भाविनं राक्षसस्यात्मसमर्पणं सूचयति।

शाकुन्तले—राजा (निमित्तं सूचयित्वा)—

मनोरथाय नाशंसे किं बाहो ! स्पन्दसे मुधा ।
पूर्वावधीरितं श्रेयो दुःखं हि परिवर्तते ।। (७ १३)

(नेपथ्ये) मा खलु चपलतां कुरु । (सप्तमोऽङ्कः)

अत्र शकुन्तलाप्राप्तौ परित्यक्ताशस्य राज्ञो 'मनोरथाये'ति भाषणस्य 'मा खलुचपलतां कुरु' इति प्रत्युत्तरीभूतं सूच्यते, तेन तृतीयं पताकास्थानकम् ।

चतुर्थं पताकास्थानकम्—चतुर्थपताकास्थानके द्व्यर्थको वचनविन्यासो वर्त्तते । श्लेषेण द्वितीयोऽर्थो भाविकर्तव्यविधानं प्रकटयति ।

सामान्येनोच्यते—

द्व्यर्थो वचनविन्यासो सुश्लिष्टः काव्ययोजितः ।
उपपन्यायुतं यत्तच्चतुर्थमुदाहृतम् ।।[१]

यथा ललितमाधवे—सुपर्णः—

नभसि रभसवद्भिः श्लाघमाना मुनीन्द्रैः—
संहितकुवलयाक्षी कीर्तिशुभ्रांशुवक्त्रा ।
नृपकुलमिह हित्वा चेदिराजप्रधानं
मुरदमन गमिष्यत्युत्सुकां त्वां जयश्रीः ।।[२]

अत्र सुपर्णस्य द्व्यर्थवचनेन चन्द्रावलीप्राप्तिसूचनाच्चतुर्थं पताकास्थानकम् ।

शाकुन्तले—(नेपथ्ये गीयते)

अभिनवमधुलोभभावितस्तथा परिचुम्ब्य चूतमञ्जरीम् ।
कमलवसतिमात्रनिर्वृतो मधुकर ! विस्मृतोऽस्येनां कथम् ।। (५.८)

अत्र 'दुष्यन्तेन हंसवती उपेक्षिता' इति सूच्यते । अतः चतुर्थं पताकास्थानकमिदम् । कदाचित् रहसि राज्ञा सकृदुपभुक्ता अन्यस्या देव्या. भयेन पुनरुपेक्षिता सती हंसवती समानावस्थमधुकरोपालम्भोपदेशेन राजानमुपालभते—अभिनवेति । अत्रापि 'मधुकर' इति पदेन दुष्यन्तस्य, 'चूतमञ्जरी' मिति पदेन शकुन्तलायाश्च ज्ञान भवति ।

जानकीराघवे—सीतां प्रति रामः—

लङ्कासमृद्धिमापन्न क्रीडारण्ये सपुष्पक ।
कच्चिल्लोहितपत्रस्त्वामशोकोऽसौ हरिष्यति ।।

---

१. ना० शा० (का० म० सं०)—१९ ३५

२. ल० मा०—५ २८

अत्र रामस्य द्व्यर्थवचने सीताहरणसूचनाच्चतुर्थं पताकास्थानकम् ।

रत्नावल्याम्—(नेपथ्ये वैतालिकः पठति)

> अस्तापास्तसमस्तभासि नभसः पारं प्रयाते रवा—
> वास्थानी समये समं नृपजनः सायतने सम्पतन् ।
> संप्रत्येष सरोरुहद्युतिमुषः पादांस्तवासेवितुं
> प्रीत्युत्कर्षकृतो दृशामुदयनस्येन्दोरिवोद्वीक्षते ॥ (१.२३)

अत्र द्व्यर्थवचनेन उदयनसूचनं सागरिकागतमुत्क्षिपति—'कधं अअं सो राआ उदअणो जस्स अहं तादेण दिण्णा' इति तस्य वचनात् ।

चतुर्थपताकास्थानकमधिकृत्य दशरूपके धनिकेन 'उद्यमोत्कलिका' मित्यादि तुल्यविशेषणात्मक-पताकास्थानकस्योदाहरण प्रतिपादितम् । शृङ्गार-प्रकाशे रसार्णवसुधाकरे भावप्रकाशने साहित्यदर्पणेऽपि प्रकटितमिदम् । अभिनव गुप्तानुसारमेतत्तु वीथ्यङ्गस्य व्याहारस्यैवोदाहरणम् ।

पताका प्रकरी पताकास्थानक, त्रिविधं प्रासङ्गिकवृत्तमिति डॉ० एस० एन० शास्त्रिमहोदयेन प्रतिपादितम् ।[१] तस्यैव मत भावप्रकाशनमनुवर्तते ।[२] शारदातनय-शास्त्रिमहोदययोरिद मत भारतीयनाट्यशास्त्रं वाभिनवभारती वा नानुहरति । पताकास्थानकन्तु काव्यस्यालङ्कारभूतम् । नाटकलक्षणरत्न-कोषे सागरनन्दिना प्रतिपादितम्—पताकास्थानकानि काव्यस्यालङ्कार-भूतानि शोभाहेतूनि च ।[३] अत पताकास्थानकमिद प्रासङ्गिकवृत्त भवितुं नार्हति ।

पताकास्थानकानि आमुखसन्धे सन्धिचतुष्टये प्रयोज्यानीति नाटक लक्षणरत्नकोषे प्रतिपादितम् ।[४] एतत्तु चिन्त्यम् । युक्तमेतद्यत् कथावस्तुन अन्तिमप्रयोजन निर्वहणसन्धौ सम्पादितं भवति । अतः भाविकार्यव्यापारस्य सूचनायै पताकास्थानकस्य तत्र नास्त्यवकाशः । अन्ये नाट्याचार्यास्तु अत्र विप्रतिपद्यन्ते । एषांमतेन प्रयोगेषु पताकास्थानकविषये न कोऽपि नियम।

---

१ Laws and Practice of Sanskrit Drama—P 72

२. प्रासङ्गिकाभिधं वस्तु नाटके भवति त्रिधा ।
पताकाप्रकरीयुक्तपताकास्थानकक्रमात् ॥
भा० प्र० सप्तमोऽधिकारः—पृ०. २०१

३. ना० ल० र० को० ('प्रभा'-व्याख्योपेतः)—पृ० १००.

४. पताकास्थानानि निर्वहणसन्धिवर्ज्यं कार्याणि ।
ना० ल० र० को० (प्रभा) पृ०—१००

भवितुमर्हति काव्यस्यालङ्कारभूतत्वात् । साहित्यदर्पणे विश्वनाथोऽपि प्रतिपादयति—'एतानि चत्वारि पताकास्थानकानि क्वचिन्मङ्गलार्थं सर्वसन्धिषु भवन्ति । काव्यकर्तुरिच्छावशाद् भूयोऽपि भवन्ति । यत्पुनः केनचिदुक्तम्—'मुखसन्धिमारभ्य सन्धिचतुष्टये क्रमेण भवन्ति' इति, तदन्ये न मन्यन्ते । एषामत्यन्तमुपादेयानामनियमेन सर्वत्रापि सर्वेषामपि भवितुं युक्तत्वात् ।[1]

**पताका पताकास्थानकं च**

पताकास्थानक पताकावत् प्रधाननायकस्य फलप्राप्तौ आनुकूल्य साधयति । अतः तत् पताकास्थानकमुच्यते । तथापि पताकास्थानक पताकाया. भिन्नमेव । पताका प्रासङ्गिककथा भवति पताकास्थानक तु वृत्तमात्रमेव तथा काव्यस्यालङ्कारभूतम् । पताकायां कश्चिद् पुरुषविशेषो नायको भवति यः प्रधाननायकस्य साह्यमाचरति, परन्तु पताकास्थानकस्य नास्ति कश्चिदपरो नायक ।

इत्थ च पताकास्थानकस्य सैद्धान्तिक प्रायोगिकश्च पक्षो अत्र परामृष्टौ । तच्चेदं पताकास्थानकं पाश्चात्त्यनाट्यचिन्तने 'नाट्यविडम्बनेति (Dramatic Irony) संज्ञप्तेन तत्त्वेन क्वचित् संवदति । पाश्चात्त्यनाट्यपरम्परायां च विडम्बनाया विजृम्भणं विलसित च सर्वथा प्रकर्षमातनोति । तथैव संस्कृतरूपकेष्वपि पताकास्थानकस्य समुचितप्रयोगेण कार्यव्यापारस्य क्षिप्रता, सहसा नवीनवृत्तस्य परापतनं, भाविव्यापार-सूचना, वक्रोक्ति-वैचित्र्यं वा रुचिरं साध्यते इति पताकास्थानकं रूपकाणा रम्यनिर्माणशालित्वं सर्वथा समेधयतीति दिक् ।

सस्कृतविभागे
विश्वविद्यालय, सागरम् ।

— — —

१. सा० द०—षष्ठ परिच्छेद.

# सप्तदशशताब्दे: संस्कृतमहाकाव्यानि

रामलखनपाण्डेयः

क्रमशः

## पतञ्जलिचरितम्

पतञ्जलिचरितमिति महाकाव्यस्य रचयिता रामभद्रदीक्षितो नाम कविश्चतुर्वेदयाजिविप्रकुले समुत्पन्नस्य यज्ञरामदीक्षितस्यात्मज आसीत्। बाल्ये पितुः सकाशमेवायं कुम्भकोणमिति नगरान्नातिदूरे करण्डमाणिक्काभिधानेऽग्रहारे वसति स्म। नीलकण्ठ दीक्षित· चोक्कनाथमखीन्द्रः बालकृष्णभगवत्पादश्चेति त्रयोऽस्य गुरवः ख्याताः। चोक्कनाथमखी कवेरस्य श्वसुरोऽप्यभूत्। कवेः स्थितिकालः सप्तदशशताब्दीस्वरूप एवेति तस्य नीलकण्ठदीक्षितशिष्यत्वात् तञ्जौरनृपतेः शहजिराजस्य समकालिकत्वाच्च निर्णीयते। यतो नीलकण्ठः १६३८ खिष्टाब्दे नीलकण्ठविजय नाम चम्पूकाव्यमलिखत्।[१] शहजिराजस्य च शासनकालः १६८४ ई० वर्षादारभ्य १७११ ई० वर्षपरिमितो वर्तते। शहजिराजः कुम्भकोणनगरात् क्रोशद्वयमात्रदूरे कावेरीतीरे शहजिराजपुरसंज्ञकं विस्तृतमग्रहारमेकं सम्मान्यविद्वद्भ्यो व्यतरत्। तेषु च विद्वत्सु रामभद्रदीक्षितोऽप्येकतरः ख्यातः। वार्धक्येऽसावत्रैव शहजिराजपुरे न्यवसत्। पतञ्जलिचरितम्, जानकीपरिणयम्, शृङ्गारतिलकभाणः पर्यायोक्तिनिष्यन्दः, बाणस्तवः, चापस्तवः, प्रसादस्तव., विश्वगर्भस्तवः, अष्टप्रासश्चेति रामभद्रकवेः कृतयः सन्ति।

तत्र पतञ्जलिचरितमित्यष्टसर्गात्मकं महाकाव्यं नाम्नैव स्वकथानकं व्याकरोति।[२] वैयाकरणमहाभाष्यकर्त्ता एवात्र पतञ्जलिः। तस्यैव जीवनजातं मुख्यं वस्तु काव्येऽस्मिन्निबद्धम्। तद्यथा—

---

१. तथोक्तं नीलकण्ठविजये—

अष्टत्रिंशदुपस्कृतसप्तशताधिकचतुःसहस्रेषु।

कल्यब्देषु गतेषु ग्रथितः किल नीलकण्ठविजयोऽयम्॥

२. एतन्महाकाव्यं काव्यमालायामेकपञ्चाशत्तमेऽङ्के प्रकाशितम्।

क्षीरसागरे शेषशय्यामधिशयानो हरिर्योगनिद्रागत. कदाचित्तादृशम-भूतपूर्वं स्ववपुर्गौरवं दधान् यदसहमान: पन्नगेन्द्रश्चचाल किञ्चित्। उत्थिते च हरौ तथाविधवपुर्गरिम्णः कारणमपृच्छत्। योगस्थितौ शिवस्यानन्दनृत्त-दर्शनेन तथाभूदिति विज्ञाय स्वयमपि तदीयनर्तनदर्शनेच्छया हरिं प्रार्थयत। प्रसन्नश्च हरिस्तं पाणिनेरष्टाध्यायीनिर्माणं, तदधिकृत्य कात्यायनस्य वार्तिक-निबन्धनं, पारस्परिकशापान्मुनिद्वयस्य मरणं चेति कथा विज्ञाप्य एतदप्युक्त-वान् यदधुना पाणिनीयसूत्राणां तद्वार्तिकाना च विद्वज्जनदुर्ग्रहत्वात् तदवलम्ब्य भाष्यं रचयितुं शङ्करेण नियोज्यमानस्त्वमचिरेणैव चिदम्बरक्षेत्रे विहितावतार: सन्नर्तनविलोकनमनु शिवस्य समीहितं साधयेति। अथ भूतलेऽवतरितुं जनन-योग्यं कुलमन्वेषणपर: पन्नगेन्द्रस्तपोवने गोणिका नाम मुनिकन्यां व्यलोकयत्। सा हि पुत्रनिमित्तेन दारुणेन तपसा दिनानि यापयति स्म। तामसौ मनसा स्वमातरं निरणैषीत्। यदा सा नयने निमील्य तनयं याचमाना भगवते भास्कराय जलाञ्जलिमर्पयितुं बभूव तदायमर्कनियुक्तस्तस्या अञ्जलिगर्भं प्राविशत्। विस्मिता मुदिता च गोणिका रहस्यं विज्ञाय जननघटनोचितं तस्य पतञ्जलिरित्यभिधानमकरोत्। पतञ्जलिस्तपसा शिवं प्रसन्नं विधाय तस्मान्न-र्तनदर्शनपरं भाष्यनिर्मितिपरं चेति वरद्वयमवाप। तदाज्ञयैव पुनश्चिदम्बरा-भिधं पुरं प्रति प्रस्थितो मार्गे प्रकृति-पशु-पतत्रि-प्रभृतिभि सत्कृतो बभूव। चिदम्बरस्य शिवभक्तिभावितं नागरं सौन्दर्यमास्वाद्य स व्याघ्रपदा नाम केन-चित्तपस्विना मैत्री विधाय तेन सह कनकसभां प्राविशत्। कनकसभा स्वसौ-न्दर्येण स्वर्लोकमपि धूलीकरोति स्म। शिवस्यानन्दनर्तनमवलोकयितुमत्र विपुलजनसमुदायेन सह मुनय: सुरा सुराङ्गनाश्च समाययु। समनन्तरमेव पञ्चविंशतिवर्षवयसा दिवौकसां मध्यङ्गतो महेशोऽप्याकाशादवातरत्। स सर्वस्मै दिव्यं चक्षु प्रदाय स्वकं विविधमद्भुतं नृत्यं प्रदर्शयामास। अन्ते च पतञ्जलिं भाष्यं रचयितुमादिश्य तिरोऽभवत्।

अथ महात्मा पतञ्जलिरचिरेणैव कालेन पदशास्त्रवार्तिकानां महाभाष्यं व्यरचयत्। तत्पठितुं च सद्य एव पण्डितानां साहस्रं समागमत्। मध्ये यवनिकां वितत्य, तद्रूपस्य विलोकयितुं सर्वथा निषिद्ध्य चासौ फणिपतिरूपमवधृत्य मुखसहस्रद्वारेण पाठनमारभत। कथं कियद्भिराननैर्वायं प्रतिपुरुषमेवं पाठय-तीति विस्मयमपाकर्तुं कदाचिद्विद्यार्थिनस्तिरस्करिणीमपनिन्युः फणीन्द्रल-क्षितेन च भस्मतामुपजग्मुः। अत्रान्तरे लघु शङ्कितुं बहिर्गतो विद्वानेक समा-गत्य तद् दृश्यं चावेक्ष्य सभयं फणिपतिं प्रास्तौत्। पाठमध्ये बहिर्गतोऽसीति क्रुद्धो गुरुरमुं राक्षसो भवेति शशाप। कथञ्जन प्रसन्नश्च शापमपाकरणोपायं प्राह "पचेर्निष्ठाया किं रूपमिति बुधान् पृच्छन् पक्वमिति यो शुद्धं वदेत्तं

मत्कृतिमध्याप्य शापमुक्तो भवे" ति। तदनन्तरं योगसूत्राणि वैद्यकवार्तिकानि च विरच्य पतञ्जलिर्जनन्यां त्रिदिवगतायां स तत्रैव गोनर्दाख्ये देशे न्यवसत्। इतो राक्षसः स कमपि वरमारुह्य पचेर्निष्ठायां रूपं पृच्छन् पचितमित्यशुद्ध-वादिनो भक्षयन् बहुकालं व्यापयत्। कदाचिदुज्जयिनीतः समागतश्चन्द्रगुप्ता-भिधो ब्राह्मणः पक्वमिति शुद्धमुदतरत्। तमसौ मासद्वयेन महाभाष्यमध्याप्य दिव्यविग्रहोऽभूत्। शास्त्रमिदं प्रचारयितुमादिष्टश्चन्द्रगुप्तश्च पठनकाले वटदलेषु नखलिखितं पतञ्जलिप्रबन्धमुत्तरीये निबद्ध्य गृहं प्रत्यचलत्। मार्गे स एकं सरोवरमालोक्य तज्जलं च निपीय तटद्रुमूले निद्रामभजत। अत्रान्तरे कश्चिद् वत्स आगत्य तद्वटदलचयमाचकर्ष। विप्रश्चोत्थाय दन्तक्षतलिपि पत्रचयं तन्मुखादवाक्षिपत्। तदैव नवनीतहस्ता शूद्रवर्णा काचिदङ्गना तत्रा-गत्य तमिदं न्यवेदयत् "पातञ्जलमहाभाष्यमधीत्य समागत इह कश्चन विप्रस्ते पतिर्भविष्यतीति बुधैरुक्ताहं तमेव महात्मानं प्रतीक्षमाणा भवन्तं परिचेतुमुपगतास्मी" ति। "पतञ्जलिरेव शरीरभेदेन स द्विजोऽभू" दिति विद्वद्वाणीमपि विज्ञापयन्ती सा नवनीतं पर्यवेषयत्। क्षुधां निवार्य गतक्लमः स चन्द्रगुप्त पूर्वत एव ब्राह्मण-क्षत्रिय-वैश्य-वर्णजाभिस्तिसृभिः परिणीतोऽपि प्रस्तुतामिमां चतुर्थपत्नीत्वेनाङ्गीचकार। उज्जयिन्यां वसतस्तस्य ब्राह्मण-क्षत्रिय वैश्य-शूद्र-वर्णजाश्च क्रमेण वररुचिविक्रमार्क-भट्टि-भर्तृहरि-नामधेया-श्चत्वारस्तनया जनिं लेभिरे। शूद्रजात्वेन भ्रातृभिः शास्त्राध्ययनाद्विनिवारितो भर्तृहरि: कदाचिद्रहसि पितरमुपगम्य भ्रातृकृतं सर्वं प्रतिवेदयन् महाभाष्य-पठनपरां स्वीयामुत्कटसमीहामावेदयत्। पिता चास्य शास्त्राधिकारं समर्थयन् क्षितिगर्भमन्दिरेऽमुं महाभाष्यमपाठयत्। अथ स्वसुतचतुष्कमपि दारकर्मणि नियोज्य चन्द्रगुप्त स्वयं काशीमसेवत। पुत्रेष्वस्य वररुचिर्नामाग्रजो गणित-विषयान् ग्रन्थान् जग्रन्थ। विक्रमार्कः शासनमकरोत्। भट्टिस्तस्य सचिवो बभूव। बुद्ध्याग्रिमोऽपि जनुषा चरम कनीयान् भर्तृहरिरग्रजस्य नाम्ना भट्टिकाव्यं प्रणीतवान्। स एव वाक्यपदीयं शतकत्रयं च प्रणीय महाभाष्यस्य विवरणाभिधां टीकामाटीकत। तात्पता पुनर्बदरिकाश्रमं प्राप्य गोविन्द-देशिकत्वेन प्रसिद्धिं जगाम। शंकराचार्यस्तमुपास्य काञ्चीपुरे वसतिं चकार।

व्याकरणभूमिकामधिकृत्य महाकाव्यपरम्परायां प्रणीतं काव्यमिदं कवेः पदशास्त्रप्रियत्वं तत्र पारङ्गत्वं च द्योतयति। अस्याष्टसर्गेषु विलसितानि ५३८ पद्यानि स्वकर्तारं कुशलं कविं प्रख्यापयन्ति। प्रधानकथावस्त्वनुरोधा-द्विहितानि सन्ध्यासूर्येन्दुनगरर्तुसागरादिवर्णनानि कथाप्रवाहं रञ्जयन्त्येव, नावरोधमुत्पादयन्ति। विविधघटनाघटितानि वस्तून्यपि नाधिकं विस्तार्य सौष्ठवधिया समर्थगिरा चोपस्थापितानि। चन्द्रगुप्तरूपेण पतञ्जलेरग्रेतनं

जन्म प्रकल्प्य तच्चरितवर्णनमुखेन कृत. वस्तुविस्तार. सर्वथा औचित्यमावहति। पतञ्जलिपर्यायश्चन्द्रगुप्तनामा ब्राह्मण. शूद्रां परिणीय तज्जन्मानं भर्तृहरि शास्त्रपठनाधिकारिणं ख्यापयतीति कवि सनातनधर्मधुरीणोऽपि तत्रत्यरूढिजातमुन्मूलयितुमिच्छति। शूद्रजां सन्तति सर्वोत्कृष्टवैदुष्येण विभूष्य स गुणानां जात्यनपेक्षत्वं व्यञ्जयति।

शान्तरसप्रधानेऽत्र महाकाव्ये युद्धं तपोमुखं प्रतिपादितम्। उत्प्रेक्षाप्रमुखा अर्थालकाराः काव्यकलां प्रगुणयन्ति। शब्दालङ्कारं कविर्नाद्रियते। काव्यशैली संयतपदा कुलाङ्गनेव भाति। भाषासारल्यं काव्यमाद्यन्तमुपकरोति। कानिचिदुदाहरणानि यथा—

प्रकम्पितोऽङ्गं परिवर्तिताक्षं पादक्रमन्यञ्चितभूमिभागम्।
तमाश्रमं पाणिनिराजगाम कात्यायनस्तिष्ठति यत्र योगी ॥१.५५॥

तमापतन्तं कुपित मुनीन्द्रं दृष्ट्वा सुसज्जीकृतपाद्यपात्र·।
कात्यायन प्रत्युदगान्न यावत्तं पाणिनिस्तावदथो शशाप ॥१ ५६॥

अप्सरसां गण पतञ्जलेस्तपो नैव चालयितुं शशाकेति—

काचिदेत्य तदनु प्रमदानामालिलिङ्ग तमुरोजयुगेन।
कानने कलभकुम्भनिकाशादस्य किंचिदधिकं न ततोऽभूत् ॥२.५५॥

कापि वक्त्रकमलेन मृगाक्षी तत्कपोलमथ चारु चुचुम्ब।
न व्यकारि स ततोऽपि तपस्वी लेहनादिव कुरङ्गशिशूनाम् ॥२.५७॥

पतञ्जलेश्चिदम्बरगमनकाले मार्गजातम्—

कपयस्तदवेक्षणे तरून्व्यथयामासुरसाधुभि. पदै.।
पदशास्त्र इवानधीतिन कवयः कर्णपयान्विपश्चिताम् ॥३ ३६॥

तमवेक्ष्य ननद्रुरुच्चकैरपदे पक्कणकुक्कुरा. पथि।
सरसस्य कवे क्रमं गिरामवकर्ण्याक्षमयेव दुर्धिय ॥३.३७॥

सन्ध्याकाले मधुकरगर्भा अम्भोजिनी प्रियविप्रयोगाद्रुदितेव—

तत्कालसंकुचदशेषदलाग्ररोधाद्
गर्भे रणन्मधुकरं कमलं वहन्ती।
अम्भोजिनी दिनकरप्रियविप्रयोगा-
दन्त प्रवृत्तरुदितेव तदा व्यलोकि ॥८ २७॥

रात्रिवर्णनम्—

तारास्तदा ददृशिरे तरला नलिन्या
हृत्वा श्रियं शशिनि धावति साध्वसेन।
तत्सम्भ्रमत्रुटितहारलता विशीर्णा
मुक्ता इव त्रिचतुरा गगनान्तराले ॥८.४७॥

सूक्तयो यथा—

वाति चण्डपवनो वसुमत्यां
तावता चलति किं गिरिरीशत् ॥२.५४॥
किं करोतु बलिना युधि नाथे
पातिते परनृपेण भटौघ. ॥३.५८॥
गुरुवचनव्यतिलङ्घनं ह्यनर्थः ॥५.१७॥
विद्या न दूषयति किं विनयव्यपायो
नासावियोग इव योषितमुज्वलाङ्गीम् ॥८ १५॥

## विजय-प्रशस्तिः

विजयप्रशस्तिनाम्नो महाकाव्यस्य कर्त्ता जैनसाहित्ये ख्यातनामा हेमविजयगणिः श्वेताम्बरजैनमतावलम्बी। अस्य जीवनकालः षोडशेसवीयशताब्देरुत्तरार्धं सप्तदशशताब्देः प्रथमपादं चाभिव्याप्य स्थित.। प्रस्तुतमहाकाव्यातिरिक्तमपि नैके ग्रन्था अनेन रचिता। तद्यथा पार्श्वनाथचरितमहाकाव्यम्, कथारत्नाकरः, अन्योक्तिमुक्तामहोदधि, कीर्तिकल्लोलिनी, स्तुतित्रिदशतरङ्गिणी, सूक्तरत्नावली, कस्तूरीप्रकर, सद्भावशतकमित्यादयः।[1] पार्श्वनाथचरितमहाकाव्यं १५७६ ख्रिष्टाब्दे ग्रथितमिति षोडशशताब्दिकमिदम्।[2] विजयप्रशस्तिमहाकाव्यं पुनः सप्तदशशताब्दिकमिति निश्चप्रचम्। यतः कवेरन्तिमा कृतिरियम्। "ऋषभशतकं" कविरयं १६०० ख्रिष्टाब्दे रचितवान्।[3] "कथारत्नाकरं" चासौ १६०२ ई० वर्षे व्यरचयत्।[4] तत्पश्च-

---

१. ग्रन्थान्तप्रशस्तिर्द्रष्टव्या।

२, तथाहि पार्श्वनाथचरितमहाकाव्ये—

दृक्-कृशानु-रस-सोममितेब्दे शकमन्त्रिणि दिने द्व्यसज्ञे।
हस्तभे च बहुलेतरक्षे फल्गुनस्य, चरितं व्यरचीदम्॥

३ तथोक्तं ऋषभशतकग्रन्थे—

श्रीस्तम्भतीर्थनगरे रस-बाण-भूप—
वर्षे समाप्तिमगमच्छतकं सदर्थम्॥

४. तथाहि कथारत्नाकरे—

अहिगन्नगरङ्क वर्षेऽश्वे-षु-रसा-ऽवनौ।
मूलमार्तण्डसंयोगे चतुर्दश्या शुचौ शुचिः॥

र्वति चेदं प्रकृतं महाकाव्यम्। यतोऽपूर्णमेव काव्यमिदं विधाय कविर्दिवङ्गत : षोडशसर्गं यावद्विलिख्य दिवङ्गते हेमविजये तस्य गुरुभ्रातु. शिष्यो गुणविजयगणि सर्गपञ्चकमवशिष्टं प्रणीय ग्रन्थममुं पूर्णं चकार। तेनैव गुणविजयगणिना ग्रन्थस्यास्य विजयप्रदीपिकानाम्नी टीकाप्यकारि। टीकेयं १३३२ ईसवीयवर्षे पूर्णतामगादिति स्वयं ग्रन्थान्तप्रशस्तौ टीकाकृदलिखत्।

विजयप्रशस्तिरिति महाकाव्यं केषाञ्चिज्जैनमुनिपुङ्गवानां चारुचरितान्युपस्थाप्य[१] धार्मिकं जगदुल्लासयितुमिच्छति। तदत्र हीरविजयसूरिविजयसेनसूरि-विजयदेवसूरीश्वराणामैतिहासिकं सर्वं वृत्तान्तमधिकृतम्। विजयसेनसूरेश्चरितं तत्र प्राधान्येन वर्णितमिति कवेः ग्रन्थाभिधेयकथनात् स्पष्टं भवति।[२] विजयसेनसूरिर्ग्रन्थकर्तुर्गुरुरस्ति। महाकाव्यस्य कथावस्तु निम्नोक्तविध प्रचलति—

"मेदपाट" इत्याख्यदेशे "कम" इत्याख्य श्रेष्ठी बभूव। "कोडिमदेवी" तस्य भार्या आसीत्। सा जयसिंहाभिध पुत्रं प्रासूत। संस्कारमधिगच्छन् क्रमेण स ववृधे। गुरोः सकाशादचिरेण सर्वं पठित्वा गृहमागतवान्। पिता तस्य कमाभिध. विरक्तिमासाद्य स्तम्भतीर्थं जगाम। तत्र च विजयदानसूरितो दीक्षा जग्राह। जयसिंहो मातुलगृहे वृद्धि प्राप।

इतो महावीरस्वामिन पट्टधरपरम्पराया विजयदानसूरिरनेकधा स्वयशस्ततान। गुर्जरदेशस्य प्रह्लादनपुरे समुत्पन्नः कुंवराख्यश्रेष्ठितनयः श्रीहीरविजयसूरिः श्रीविजयदानसूरिसकाशात् प्रव्रज्या गृहीतवान्। हीरविजय सर्वं जैनशास्त्रमपठत्। दक्षिणदिशं गत्वा शैवं शास्त्रमपि पपाठ। शिष्यं पूर्णकलं मत्वा गुरुस्तस्मै क्रमेण पण्डितोपाध्यायाचार्यपदवीः प्रददौ। गुरोराज्ञया हीरविजय सिहोरीनगरे चातुर्मास्यं प्रारभत। विजयदानसूरिश्च विहरन् सूरतिबन्दरं प्राप।

अथात्र मातुलगृहे स्थितो जयसिंह मातरं प्रति स्वतपश्चरणेच्छा प्रकटीचकार। माता तं न्यवारयितुमचेष्टत। परं जयसिंहस्तां सयुक्तिकं स्वपक्षे कृतवान्। सपुत्रा सा विजयदानसूरिसकाशं सूरतिबन्दरं गतवती। विजय-

---

१ श्री मत्तपागणनभोऽङ्गणभास्कराणा
भक्त्या भणामि गुणमाप्तगिरा गुरूणाम्॥ विजयप्रशस्ति॰ १.११।

२ सौभाग्यभाग्यवरवैभवविश्रुताना—
मोजस्विना विजयसेनमुनीश्वराणाम्।
तेषामशेषसुखकृद् विजयप्रशस्ति—
संज्ञ मनाज्ञरचन रचयामि काव्यम्॥१.१३।

दानसूरिः समातृकं जयसिंहं दीक्षयामास। विजयदानस्य निर्वाणानन्तरं हीर-विजय. पट्टधरो बभूव। जयसिंहः सूरिभिः सह व्याख्यानादिना लोकमालोक-यन् विहरति स्म। जयसिंहं पट्टधरं कर्तुं देवा वारद्वयं हीरविजयं प्रेरितं चक्रु। सूरिसंघोऽपि तथा काङ्क्षति स्म। तत्सर्वं युक्तमेवानुभूय हीरविजयः जयसिंहं पण्डितपदेन सभाजयत्। पश्चात्तस्मै आचार्यपदं प्रदाय तन्नाम "विजयसेन" इति कृतवान्।

पट्टाधिकारिणा विजयसेनसूरिणा सह विविधप्रदेशे विचरन् हीर-विजयो गुर्जरे लुम्पाकमतावलम्बिनं मेघजिनामानं विद्वांसं जैनं चकार। श्रीभूषणनाम्ना दिगम्बरेशेन वादे संजाते सूरयो जयं लेभिरे। तदानी अकबर-नामा विख्यातो मुगलशासक. भारतं शास्ति स्म। श्रीहीरविजयस्य माहात्म्यं श्रुत्वा स सूरिममुं सादरं समाह्वयत्। फतेहपुरनगरे वारद्वयं तयोर्वार्तालापोऽभवत्। गुरोरुपदेशैः प्रसन्नोऽकबरः पञ्जरात्पक्षिणो गुप्तिगृहाच्च बन्दिनोऽमूमुचत्। अकबर' फतेहपुरसिकरीसमीपस्थं डाबरं नाम सरोविशेषं गुरवे उपहारी-कृत्य तत्र झषादीनां हनन वारयामास। इति प्रथमसर्गतो नवमसर्गं याव-त्कथावस्तु।

अथाग्रे दशमसर्गादारभ्य ग्रन्थान्तं यावदपि कथाप्रवाह एवंविध एव क्वचिद्विहारपरः क्वचिद्विवादपर', क्वचिद्व्याख्यानात्मक क्वचिन्निर्वाणा-त्मकः कुतश्चिद् दीक्षोन्मुख', कुत्राचच्चातुर्मास्यमुखश्च विजयसेनादिजैनमुनि-चरितचित्रणचतुरः स्वधर्मपथि धृतव्रत इव प्रचलति। तेन पुनस्तत्कालीनमै-तिहासिकं जगद् दूरमुपक्रियते। तथाह्यत्रत्यानि प्रायशो घटनास्थलानि सामयिकजैनेतिहासात्साम्यमर्हन्ति। जन्मनिर्वाणदीक्षादि--प्रधानघटनानां तिथयोऽप्यत्र लिखिताः। कतिपयजन्मपट्टाभिषेकादीना ग्रहस्थितिकुण्डलयोऽपि प्रस्तुताः। शैली चास्य बहुल ऐतिहासिकता बिभर्तीति महाकाव्यमिदं धार्मिकमैतिहासिकं चेति स्वीकरोमि। काव्येऽस्मिन् प्रायेण पञ्चाशन्नगराणां ग्रामाणां चोल्लेखः प्राप्यते। तेषु आगरा अहम्मदाबाद-फतेहपुरसिकरी--लाहोरशिवपुरी--मेदिनीपुर-कालुपर-पत्तन--प्रह्लादनपुर--डीसा--नगर- सिहोरी-सिकन्दरपुरप्रभृतीनि मुख्यता भजन्ति। पर्वतेषु रैवतक कुमरगिरि-जैबलशैलादयो वर्णिताः। अकबर-खानखाना--खुर्रम-प्रभृतयो मुगलपुरुषा च विषयीकृताः।[1] अकबरस्तत्र—

इतश्च तीव्रातपतीव्रदीधिति—
प्रभप्रतापानलदीप्तदिङ्मुख।

---

१. विजयप्रशस्तिमहाकाव्य श्रीयशोविजयजैन ग्रन्थमालाया त्रयोविंशेऽङ्के २०३७ संव-त्सरे प्रकाशितम्।

अकब्बरः शकुनितम्बिनीदृशा—
मनङ्जनीकारकृतो विराजते ॥८.१॥

समं समा दिग्महिला रजस्वला
यदीयसैन्ये वसुधासु सर्पति
पतिं युवानं यमवाप्य भोगिनं
जयं प्रसूताः सुतमङ्कशायिनम् ॥६.५॥

काव्यत्वदृशा महाकाव्येऽस्मिन् कविः स्वधर्मसुलभां शुष्कतामेव व्यञ्जयति। ऋतुवर्णनं त्वत्र नास्त्येव। प्रकृतिचित्रणमप्यस्मै नालं रोचते। शृङ्गारस्यावकाश एव नास्ति। एकत्र विजयसेनं प्रति नागरस्त्रीविचेष्टितवर्णने कापि रमणी वानर्योपमीयते—

सौधमूर्ध्नि पृथुकोल्लसदङ्का काप्यमात्तदवलोकनशीला।
शाखिनः शिरसि चापलमुक्ता वानरीव गललिङ्गितबाला ॥५.७५॥

अलंकारेषु कवेरधिक मनो धावति। अनुप्रासयमकाविति शब्दालङ्कारौ बाहुल्येन बलादपि प्रयुज्येते। अर्थालङ्कारेषूपमोत्प्रेक्षा चातितरां प्रयोगं भजतः। उपमा बहुत्र प्रतिपद्यं प्रयुक्ता। पद्यमिदं कवेरलकारप्रियत्वं द्योतयति—

कर्णाटलाटघनघाटविराटमुख्य—
देशेषु मुख्यमुकुटः खलु मेदपाटः
अस्ति प्रशस्ततमशस्तसमस्तवस्तु—
विस्तारवानुडुषु चन्द्र इवातिचारुः ॥१.१४॥

## साहित्यरत्नाकर.

षोडशसर्गीयमहाकाव्यस्य साहित्यरत्नाकरस्य प्रणेता यज्ञनारायणदीक्षितोऽस्ति। असौ तञ्जपुराधिपतेः श्रीरघुनाथनायकस्य राजकविरासीत्। रघुनाथनायकस्य स्थितिः सप्तदशख्रिष्टाब्दशतकस्य पूर्वार्धे। तत्समकालिक एवाय कविः। अस्य पिता गोविन्ददीक्षितः रघुनाथनायकस्य मन्त्रित्वमलञ्चकार। "साहित्यसुधा" इति स्वग्रन्थे गोविन्ददीक्षितो रघुनाथस्य तत्पितुरच्युतस्य च जीवनजातं जग्रन्थ। "साहित्यसाम्राज्य" मिति काव्यस्य कर्ता वेङ्कटेशमखी गोविन्दस्य द्वितीयतनयो बभूव। ज्येष्ठात्मजस्तु यज्ञनारायणः प्रकृतमहाकाव्यातिरिक्तमपि ग्रन्थद्वयं व्यधात्। "अलंकाररत्नाकर" इति प्रथमस्तत्र प्रतापरुद्रीय इवालंकारशास्त्रग्रन्थः।[1] द्वितीये "रघुनाथविलास" इति

१. अस्यैकभागः तञ्जपुरस्य सरस्वतीमहलपुस्तकालये प्राप्यते।

पञ्चाङ्कनाटके रघुनाथस्यैव महिष्ठं चरितमुपनिबद्धम् ।[1] साहित्यव्याकरण-तर्क-मीमांसा-वेदान्तादिसर्वशास्त्रवेत्ता यज्ञनारायणस्तत्कालीन-दाक्षिणात्य-संगीत-विद्यायामपि परमनिपुण आसीत् । शास्त्राध्ययनमसौ स्वपितु. सकाशमकरोत् । स्वयं रघुनाथनायकोऽप्यमुं पाठयति स्म ।[2]

साहित्यरत्नाकर[3] इति प्राकृनमहाकाव्यं रघुनाथभूपविजयनाम्नापि ज्ञायते । अनयोरैक्यं राजचूडामणिदीक्षितस्यानन्दराघवनाम्नो नाटकस्याधोलिखितप्रसङ्गेन प्रमाणीक्रियते—

"यत. किल यज्ञनारायणाध्वरिणा रघुनाथभूपविजयनाम्नि महाकाव्ये तावदेवमभिहितम्—

"प्राचां प्रबन्धान् रसयन्तुमव्यानस्मद्वचोऽप्यादरतो रसज्ञाः ।
आस्वादयन्तो मधुराणि वस्तून्यम्ल न किं जम्मलमाद्रियन्ते ॥"

पद्यमिदं साहित्यरत्नाकरस्य प्रथमसर्गस्थितं त्रयस्त्रिंशसंख्याकमस्ति । तेन साहित्यरत्नाकर एव रघुनाथभूपविजयनाम्नाभिधीयत इति शक्यते स्वीकर्तुम् । किन्तु काव्यमिदं युद्धादिकं तत्र रघुनाथस्य विजयं वा लेशतोऽपि न प्रस्तौति, अपितु युद्धस्य भूमिका वैशद्येनोपस्थाप्य, योद्धुं प्रस्थितस्य सैन्यसंयुतस्य रघुनाथस्य च वर्णनं विधाय अकस्मादेव समाप्तिं गच्छति । अतोऽत्र रघुनाथभूपविजय इति नाम नैव युज्यते । रघुनाथस्य पर्यायत्वेन साहित्यरत्नाकर इति कृतं काव्यनाम पुनः समीचीनं भाति । यतः काव्येऽत्र रघुनाथस्य जीवनं साहित्यावतारस्येव कीर्तितम् ।

साहित्यरत्नाकरस्य षोडशसर्गेषु चेव्वप्पा अच्युतप्पा चेति पूर्वजद्वय-निरूपणक्रमेण रघुनाथस्योत्पत्तिमवतार्य पुनस्तस्यैव जीवनमुपनिबद्धम् । प्रथम सर्गस्तत्र महाकाव्यस्यामुख वर्तते । अत्र गणेशाद्यनेकदेवस्तुतिमुखेन मङ्गलाचरणम्, कालिदासादिकतिपयकविपुङ्गवानां प्रशंसनम्, पाणिनिप्रभृतिमुनित्रयस्य वन्दनम्, रघुनाथेन सह स्वपितुरभिनन्दनम्, दुष्कविनिन्दनादिकं चेति

---

१. तञ्जापुरस्य सरस्वतीमहलपुस्तकालये समुपलब्धः ।

२. तथोक्तं साहित्यरत्नाकरे—

काव्यालंकृतिनाटकादिकलनापाण्डित्यमत्यद्भुत
मर्वज्ञो रघुनाथभूश्तमखोयस्योपदिश्य स्वयंम् ।
आदात् गुरुदक्षिणामभिमतामर्होऽप्यहो दत्तवान्
कर्णालंकरणं निजं च पतकं पादाङ्गदं कङ्कणम् ॥१.७६॥

३. १९३२ ई० वर्षे टी० आर० चिन्तामणिद्वारेण प्रकाशितोऽयमुपलभ्यते ।

प्रपञ्चितम् । द्वितीयसर्गे चोलदेशवर्णनेन कथानकमवतार्यते । तत्र कावेरीनद्या. माहात्म्यम्, तज्जलेन चोलदेशस्य शस्यादिमुखं धनधान्यत्वम्, तत्रत्यनारीणा-मनुपमं सौन्दर्यम्, विप्रवैदुष्यम्, राजपथादिक च निरूप्य चोलदेशस्य राजधानी तञ्जापुरी वर्णिता ।

तृतीयसर्गे तञ्जपुराधिपते. चेवप्पाभिधस्य मुख्यं कार्यकलापं विविच्य तदात्मजस्य अच्युतस्य शासनादिक निरूपितम् । अच्युतराजः कदाचित्स्व-राज्ञया मूर्त्यम्बिकया सहोद्यानं प्रविश्य तत्रत्यतडागे स्वशिशुभि. खेलन्तौ हंसदम्पती ददर्श । तद्दर्शनेन स्वसततिराहित्याकलनेन चातितरां वैकल्य-मवाप्य स महिषी प्रति सन्तानसौख्यमालम्ब्य बहु जल्पितवान् । समनन्तरमेव "अचिरेण पुत्ररत्नं प्राप्स्यसी" ति नभोवाणी बभूव । दोहदवर्णनेन सर्गोऽयं समाप्यते । चतुर्थसर्गे रघुनाथस्य जन्म, तदीयबाल्यसंभवं क्रीडनकादिकम्, तदध्ययनं चेति वर्णितम् । पञ्चमसर्गे शास्त्रविद्यासु शस्त्रविद्यासु चास्य पारङ्गत्वं निरूप्य "तत्परीक्षितुं विद्वांसः सेनानायकाश्च राज्ञा समादिष्टा" इत्यपि वर्णितम् । षष्ठसर्गस्यारम्भे राजसभया परीक्षमाणो रघुनाथनायक. स्वकं वीणावादनकौशलं प्रस्तौति । पित्रा काव्यकरणे नियुक्तश्च यामद्वयेन पारिजातहरणं नाम काव्य प्रणीय विद्वत्परिषद चमत्करोति । अथाच्युतराजः यथावसर नैकपुरुहूतकन्याभी रघुनाथस्य विवाहमकारयत् । तदेवं कौटुम्बिक-सौख्यसागरे निमग्नो राजा कदाचित् पारसीकै पराजितं राज्यान्निष्कासितं च सावरोध नेपालनृपति स्वाश्रयप्रदानेन निर्भयं कृतवान् । सप्तमसर्गतो नवमसर्गं यावद् रघुनाथस्य यौवनसुलभैर्विहारादिभिः समञ्जितं विविधर्तु-वर्णन विलसति । नवमसर्गस्यान्तिमभागानुसारेण लक्ष्मीविलासभवने समायो-जिताया सभायां नेपालनृपति पुन सिंहासनारूढ कर्तुं निर्णीयते ।

दशमसर्गे अच्युतस्य रघुनाथस्य गोविन्ददीक्षितस्य च पारस्परिक-वार्तालापो वर्णितः । मन्त्री गोविन्ददीक्षितः कथयति यत् चोलकेन पारसी-केभ्य साहाय्यप्रदानं अस्मद्राज्यस्य कृते कष्टदं वर्तते । अथ रावणाभिधानश्र-वणेन ऋषय इव चोलकनामग्रहणेन प्रजा बिभ्यतीति सर्वप्रथमं तद्विनाशमुखेन पारसीकान् क्षीणबलान् कर्तुं मन्त्री राजानमुपदिशति । रघुनाथस्तु नेदं समर्थ-यति । तदनुसारं चोलकः राजा टुण्डीरमण्डलेन समर्थित वर्तते, पारसीकाश्च तस्मै साहाय्यं प्रदास्यन्ति, इतः पाण्ड्यराजोऽप्यस्माकं शत्रुरस्तीति नैकारा-तिभि. सहैकाकी योद्धुं नैवास्ति युक्तम् । गोविंदो मतमिद प्रशंसति । अथ शत्रुवृत्तं विज्ञातुं प्रेषितश्चर· समागत्य विज्ञापयति यत् पाण्ड्यराजो भवन्त-माक्रमितु चेष्टत इति । स एतदपि निवेदयति यद्रघुनाथं युवराजं विधाय

शीघ्रमेव युद्धार्थं प्रेषितव्य इति। अच्युतो रघुनाथं न केवलं युवराजमपितु राजानं विधाय प्रोत्साहयितुं कांक्षति। अग्रिमेऽहनि च राज्याभिषेकमहोत्सवस्तत्सम्बद्धकार्यकलापश्चेति वर्ण्यते। त्रयोदशसर्गे गुप्तचरेण शत्रूणां सर्वं वृत्तांतं ज्ञात्वा रघुनाथनायको मन्त्रिणि राज्यभारं संस्थाप्य स्वसैन्यं प्रस्तुतीकरोतीति निरूपितम्। चतुर्दशसर्गानुसारेण सन्नद्धो रघुनाथनायकः कुलदेवं सम्पूज्य बलेन सह युद्धाय प्रस्थितो भवति। पञ्चदशषोडशसर्गयो राजपथादिषु गच्छन् सैन्यसयुतो रघुनाथोपवर्णित। "आयुष्मान् रघुनाथभूपपरिणीरभ्यर्चितो भूयसा, संजातप्रमदो बलेन निरगात्तञ्जापुरीतो बहि" इति वाक्येन महाकाव्यस्य कथावस्तु समाप्तिं गच्छति। प्रतिसर्गान्तं ग्रन्थकृदत्र रघुनाथनायकस्याभिनन्दनं पितृसन्दर्भितस्वनामोल्लेख च विदधाति।

अस्य महाकाव्यस्य षोडशसर्गेषु विविधछन्दोयोजनया १३२० पद्यानि लसन्ति। कवित्वं प्रति कवेर्दृष्टिरस्ति—

सा काचिदन्या सरसा कवीनां सरस्वती दीव्यति जीवनाडी।
या सत्कवेरेव हृदानुमान्या वक्तुं न शक्या बत वेधसापि ॥१ ३०॥

रसेष्वत्र वीर एवाङ्गित्व भजते। राजनीतिविषयस्तत्र महत्सौष्ठवमुत्पादयन्ति। रघुनाथस्य वीरोक्तिरस्ति—

पाण्ड्यं तुण्डीरचेरद्रमिडमगधभूपालमुख्यैः सपत्नै—
र्हस्तग्राहं गृहीत्वा सपदि समिति तत्समस्तार्थजातम्।
योधैराहार्य शूरै पटगृहमखिल योजयित्वा वह्नि—
ज्वालाभिर्भासयेऽहं दिशि दिशि सततं जैत्रवृत्तिर्महासि ॥१३.८२॥

महाकाव्यस्याधिकाशो रघुनाथस्य साहित्यसंवलितेन विषयवस्तुना व्यापृतो वर्तते। रघुनाथाय कविरत्यधिक श्रद्दधाति। तस्य गुणगौरवं कीर्तयन्नासौ श्रान्तिं लभते। इतिहासानुसारमपि नैके नायकराजानो महान्तो गुणग्राहिण कविजनवल्लभाः स्वय कवयश्चाभूवन्। रघुनाथस्तत्र सर्वाधिकगौरवं भजति। तत्प्रति कविनोक्तम्—

कुतूहली वर्णयितुं कविर्यो गुणानशेषान् रघुनाथनेतुः।
स साहसी सागरगर्भभाञ्जि रत्नान्ययत्नाद्गणयेद्रयेण ॥१.५४॥

स्वभावादागतानेवालकारान् कविरादधाति न पुनस्तदर्थ यतते। तस्माच्च काव्यधारा सौन्दर्यमावहति—

तत्तादृशे काचन चोलदेशे रमानटीनर्तनरङ्गशाला।
तञ्जापुरी नाम दरी हरीणां धराभुजां राजति राजधानी ॥२.२०॥

## दिग्विजयमहाकाव्यम्

दिग्विजयमहाकाव्यस्य कर्त्ता मेघविजयगणिः श्वेताम्बरो जैनमुनि.। मुनिरसौ नैकग्रन्थरचयितेत्यादि पूर्वप्रतिपादितम्।[1] प्रकृतमहाकाव्यमस्य कृतिषु सर्वाधिकवपुर्गरिमाणमादधाति।[2] त्रयोदशसर्गात्मकमिदं विजयप्रभसूरि-चरितमुपस्थापयतीति १६५३ ख्रिष्टाब्दात्पश्चवर्ति, १७०३ ख्रिष्टाब्दे कवि-विरचितात्सप्तसन्धानमहाकाव्याच्च पूर्ववर्तीति सप्तदशख्रिष्टाब्दशतकस्योत्त-रार्धोऽस्य विरचनाकालः। महाकाव्यस्य कथानायको विजयप्रभसूरिर्महावीर स्वामिनः पट्टधरपरम्परायामेकषष्टितमो भट्टारकाचार्यः। ग्रन्थेऽत्र जैना-चार्याणां मुखयतो विजयप्रभसूरेश्चरितं विश्वस्मिन् धार्मिकदिग्विजयमुखमुप-स्थापितमिति युक्तं काव्यनाम।

अस्य जम्बूद्वीपवर्णननाम्नि प्रथमे सर्गे प्रथमं चतुर्विंशतिपद्यैश्चतुर्विंशति-तीर्थङ्कराणां स्तुतिर्विहिता। अथान्येषामपि कतिपयगणधराणां जैनयतीश्वराणां स्तवनमनु दुर्जननिन्दादिकमपि पारम्परिकं सम्पाद्य त्रिचत्वारिंशल्ललितपद्यैर्ज-म्बूद्वीपोपस्थापित.। तत्र मुनिजनोपयोगिनां वनपर्वतनद्यादीनां चित्रणमाकर्षकं भाति। द्वितीयः सर्ग· श्रीभरतवर्णनो नाम ५६ पद्यैर्भारतवर्षं चित्रयति—

> अथास्त्यमुष्मिन् दिशि दक्षिणस्यां हिमाद्रित. श्रीभरताख्यवर्णम्।
> तच्चारुतां द्रष्टुमिवोडुनेत्रैर्विभाति रात्रौ त्रिदिवं सतर्णम्॥२.१॥

कथानायकवंशमूलस्य भगवतो महावीरस्वामिन· दिग्विजयवर्णननाम्नि तृतीये सर्गे तद्भगवतो जगति धर्मध्वजोत्तोलनं विलासितम्। तद्वाणीं वर्णयति कवि·—

> वाणी विभोरमरमर्त्यपशुस्वभाषासंवादमेत्य सुगमाधिगम वितेने।
> मन्दाकिनीव सरसा त्रिपथप्रयाता नानानर्थैर्ननु सहस्रमुखीति रूढा॥३.२३॥

कथानायकगुरोर्दिग्विजयवर्णनो नाम चतुर्थः सर्ग. ७५ पद्यैर्निबद्धः। अत्र महावीरस्वामिनः पट्टधरश्रृंखलायामेकोनषष्टिजैनाचार्याणामुल्लेखमनु षष्टितमः पट्टधरो विजयदेवसूरिश्चर्चित.। विजयप्रभसूरिस्तस्य शिष्यो बभूव। अष्टपञ्चाशत्तमं भट्टारकं हीरविजयमभिलक्ष्य कविनोक्तम्—

१. सागरिकाया अष्टदशवर्षीयतृतीयाङ्के "सप्तदशशताब्दे संस्कृतमहाकाव्यानी" ति निबन्धे सप्तसन्धानमहाकाव्यप्रसङ्गो द्रष्टव्य.।

२. सिंघीजैनग्रन्थमालायाश्चतुर्दशाङ्के प्रकाशितमिदम्।

हरिरपि दिवि सूरेर्यस्य सत्कीर्तिवार्तां
सदसि विबुधसूरेर्वाचि सम्यग् निशम्य।
रमयति वसुधायां स्वं मनोऽमुं दिदृक्षु—
र्नमयति न सुधायामप्सरस्सन्निधायाम् ॥४.१८॥

पञ्चमसर्गतो ग्रन्थान्तं यावद्विजयप्रभसूरेश्चरितमुपनिबद्धम्। पट्टधरः सूरिरयं राजेव सूरिसंघं तदतिरिक्तलोकं च स्वधर्मशासनेन द्रढयन् विविधप्रदेशेषु व्यचरत्—

कमपि विषयं मुख्यं कुर्वन्नयं ह्युपचारतां
क्वचन वचनाद् गृह्णन् गौणप्रवृत्तिकृतादर।
क्वचिदपि महोपायैश्चार्थं सुसूत्रतया श्रयन्
प्रवचनमहासाम्राज्यस्य श्रिया विललास स. ॥५.१८॥

भगवतः क्रमपद्मनिवेशनाद् वसुमती शुशुभे घनसौरभा।
नवनवोत्सवसंभवतः श्रिता सकमला कमलाकरलीलया ॥६.४५॥

तत्र कथानायकस्य उत्तराशावर्णनो नाम पञ्चमः सर्गः। कथानायकस्य ईशानदिग्विजयवर्णनो नाम षष्ठ सर्ग। पश्चिमदिग्विजयो नाम सप्तमः सर्गः। शिवपुरीस्थित-शङ्खेश्वरपार्श्ववर्णनो नामाष्टम सर्गः। प्रस्थानवर्णनो नाम नवम सर्गः। नगरवर्णनो नाम दशम सर्ग। एकादशे सर्गे पूर्वदिक्प्रयाण-वन-भवन-नगर-मार्गाणां वर्णनस्ति। द्वादशे सर्गे पूर्वपत्तन-विहारनगर-श्रीचिन्तामणि-पार्श्वप्रभुस्तुतिवर्णनानि विलसन्ति। त्रयोदशे सर्गे श्रीतीर्थराजगिरि-श्रीगौतमस्वामि-सुधर्मस्वामिस्तुतिवर्णनपरो विद्यते।

तेन सुस्पष्टमिदं यदिदं महाकाव्यं वर्णनात्मकमिति। प्रायेण कथालेशमाधृत्य कविरनेकधा तद्गतवस्तुवर्णनं विलक्षणया स्वधिया तथा व्यवस्थापयति यत्रास्य पाण्डित्यं कवित्वं चाहमहमिकया स्वप्रौढित्वं प्रकटयत। पाण्डित्यसंवलितं भक्तिभावभरितमेतादृशं कवित्वं मेघविजयगणि पण्डिताना भक्ताना कवीना च मुकुटमणि युगपदेव प्रमाणयति। शब्दार्थचित्रष्वधिकं रममाणाप्यस्य कविता महाकाव्येऽत्र प्रायशो रसमेवानुगच्छति। यत्र तत्र पुनस्तद्वशात्काव्यास्वादे वैरस्यमुपजायते। यमकप्रपञ्चस्तत्राधिकं दुरवगाहते—

अनङ्गरागं नियतं स मुक्तभा यः साङ्गरागः सुतनोस्तनौ दधौ।
अनङ्गरागं नियतः समुक्तभा प्रोच्चै स्तन कोन गिरिर्वनं दधत् ॥७-४१॥

## देवानन्दमहाकाव्यम्

सप्तसधानमहाकाव्यस्य दिग्विजयमहाकाव्यस्य च प्रणेतुर्मेघविजयगणेरिदं देवानन्दमहाकाव्यं नाम तृतीयं महाकाव्यम्। १६७७ ख्रिष्टाब्देऽस्य

प्रणयनमभूदिति स्वयमेव ग्रन्थकारेणोक्तम्।[१] सप्तसर्गात्मकं महाकाव्यमिदं शिशुपालवधस्य प्रारम्भिकसप्तसर्गीयश्लोकपादानां समस्यापूर्तिस्वरूपं[२] लसति। पाण्डित्यमण्डित. कविर्माघस्य पद्यचरणाना नूतनमेवार्थमुद्भावयतीत्यपरोऽत्र विशेष.। ग्रन्थस्य स्वरचितटिप्पणौ कविस्तदभिनवार्थं स्वयमुल्लिखत्यपि। महाकाव्यस्यास्य सप्तसु सर्गेषु श्रीविजयदेवसूरेश्चरितमुपनिबद्धम्।[३] सूरिरयं श्रीमहावीरस्वामिनः पट्टधरपरम्परायां षष्टितमो भट्टारकाचार्य। तादृशजैनमुनेश्चरितं पाण्डित्यभरितेन यमकादिखचितेन समस्यापूर्तिस्वरूपेण च महाकाव्यत्वेनोपस्थापयन्नपि ग्रन्थान्तप्रशस्तौ कविर्लिखति—

नोद्रेक. कवितामदस्य न पुनः स्पर्धा न साम्यस्पृहा
श्रीमान्माघकवेस्तथापि सुगुरोर्मे भक्तिरेव प्रिया।
तस्यां नित्यरते. सुतेव सुभगा जज्ञे समस्याद्भुता
सेयं शारदचन्द्रिकेव कृतिनां कुर्याद् दृशामुत्सवम्॥

विजयदेवसूरेर्विस्तृतं जीवनचरितं विजयदेवमहात्म्यनाम्नि ग्रन्थे मिलति। अत्र पुनस्तस्य मुख्यं जीवनजातं काव्यविषयीकृतम्। तदनुसारेण गुर्जरप्रान्ते इलादुर्गनगरे वासुदेवो (विजयदेवस्य बाल्यनाम) जनिं लेभे। अस्य पिता माधवनामा व्यवसायी माता च रूपानाम्नी बभूवतु। वासुदेवो विवाहप्रस्तावमपवार्य विजयसेनसूरितोऽहमदाबादे विद्याविजयनाम्ना दीक्षा जग्राह। विजयसेनसूरिर्मुगलशासकमकबरं दीवबन्दिरस्याङ्गलशासकाश्चोपदिदेश। असौ स्वशिष्यं वासुदेवापरपर्यायं विद्याविजयं क्रमेणोपाध्यायमाचार्यं च विधाय विजयदेवसूरिनाम्ना स्वपट्टधरं कृतवान्। स्वगुरुणा सह देशस्य विविधे भागे विहरन्नसौ विजयदेवसूरिरतितरा स्वयशस्ततान। १७१३ संवत्सरे स दिवङ्गतः। पश्चाद्विजयप्रभसूरिस्तत्पट्टधरो बभूवेति।

तत्पर्यालोचनया भाति यत्समस्यापूरणे कविरधिकां स्वशक्तिं व्यपैतीति तदतिरिक्तविधेन काव्य कलयितुं नावसर. पर्याप्ततया लभ्यते। कानिचिदुदाहरणानि यथा—

---

१ तथोक्तं ग्रन्थान्तप्रशस्तौ—
मुनिनयनाश्वेन्दुमिते (सं० १७२७) वर्षे हर्षेण सादडीनगरे।
ग्रन्थ. पूर्ण. समजनि विजयदशम्यामिति श्रेय॥ दे० म०।

२ भिन्नाभिप्रायस्य श्लोकादेस्तदीयत्वेन प्रत्यभिज्ञायमानाना भागाना स्वकृतेन परकृतेन वा भागान्तरेण समसनं सन्धान समस्या (माधवी, शब्दकल्पद्रुमकोशः)।

३. महाकाव्यमिदं सिंघीजैनग्रन्थमालायाः सप्ताङ्के प्रकाशितम्।

श्रियः प्रियः पार्श्वजिनेश्वरः श्रियं तनोतु पूर्णेन्दवण्मडलाननः ।
ननाम वामां समवेक्ष्य यं श्रितं हिरण्यगर्भाङ्कभुवं मुनिं हरिः ॥१.१॥

उद्विवाहयिषया मात्राभ्यर्थितः स भवाप्तभीः ।
जैनीं दीक्षामुपादित्सुरासीत्कार्यद्वयाकुलः ॥२.१॥

अथ प्रभातप्रभया विभिन्नं निरस्तमिस्त्रं ग्रहकान्तिमिश्रम् ।
प्राप्याश्रितं दुर्गमिवोग्ररत्नमसौ गिरिं रैवतकं ददर्श ॥४.१॥

शोधच्छात्र
सागर विश्वविद्यालय

———

# भट्टश्रीमथुरानाथशास्त्रिणो व्यक्तित्वं कृतित्वं च

विन्ध्येश्वरीप्रसाद मिश्रः

भट्टमथुरानाथशास्त्रिणा सुरभारत्यां संस्कृतापभ्रंशहैन्दवीयावनीत्यादि भाषाणां लोकप्रचलितां छन्दःपद्धतिमूरीकृत्य संस्कृतकाव्यक्षेत्रे काप्यभिनवा साहित्यसरणिराविष्कृता अतश्चायमर्वाचीनकविष्वन्यूनं महत्त्वं भजते।

महाकविरयं वैक्रमीये १९०६ तमे वर्षे वीरभूमिराजस्थानस्य सुप्रथिते जयपुरभिधाने नगरे पारम्परिककवीश्वराणां कृष्णयजुर्वेदान्तर्गततैत्तिरीय-शाखाध्यायिना देवर्ष्यवटङ्कतैलङ्गभट्टान्ववायसम्प्रसूतानां श्रीद्वारकानाथ-शास्त्रिणां गृहेऽजायत। अयं हि बाल्यादेव अनितरसाधारणीं नैपुणीं प्रकटी-कुर्वन् वैदुषी चोरीकुर्वन् अनवद्यगद्यपद्यकविताकलापकुशलो बभूव। समसाम-यिकराजस्थानकविष्वयं प्रशस्य आसीदिति तस्यैव 'मञ्जुकवितानिकुञ्जे' ति सन्दर्भे तदानी पाण्डित्यप्रकर्षेण प्रथितानां काशिकेय कविवर्याणां पण्डित श्रीनारायणशास्त्री खिस्ते महोदयानामिय प्रशस्तिः प्रमाणयति—

"कवि कोकिलराजस्य मञ्जुनाथस्य मञ्जुले।
सरसे कविताकुञ्जनिकुञ्जे व्यहर चिरम्॥
पिकस्वभावसुलभा साले साले क्षणे क्षणे।
समुत्पत्यकृता गुञ्जा नूनं रञ्जयते मनः॥
नृत्यत्प्रायपदध्वानेऽवधान यच्छतो मम।
विनैवार्थानुसन्धानमुदिता कापि निर्वृति॥"

### कवेः जीवन वृत्तं व्यक्तित्वं च

शास्त्रिवर्यैः स्वयमेव "साहित्यवैभवे", वंशवीथ्यां, स्वीय वंशस्य सविस्तरवर्णनमुपकल्पयद्भिरेकोनपञ्चाशत् पद्यादारभ्य शततमं पद्यं यावत् स्वपितृपितृव्यभ्रातृमातुलादीनां परिचयप्रदानपुरःसरं, संक्षेपेण स्वीयमपिवृत्त-मुपनिबद्धम्—

"काशीनाथशास्त्रिभि प्रदर्शित प्रथमपथो
वर्धितमनोरथोऽनुमेने तत्प्रशासनम्।
कौमुदीं मनोरमां सरलमथशेखरं च
श्रीमद्धर्गिदत्तेभ्य. पपाठ दृढितासनम्॥

'मञ्जुनाथ' एष लक्ष्मीनाथ शास्त्रिसविधतोऽपि
शेखरेऽथकौमुद्यां विवेद वादशासनम् ।
एव लक्ष्मीनाथशास्त्रि चरणानुकम्पाबलाद्—
भाष्यविधिसम्पादयामास शब्दशासनम् ॥"
"विद्यावाक्यतिमान्य मधुसूदनकरुणादृशा ।
सकलसुधीसम्मान्य सांख्य तत्त्वमयमधिजगे ॥
कृष्णशास्त्रिसविधे सविधि साहित्यं स शिशील ।
श्रुताभ्यासप्रतिभायुता कविता कविता समुन्मिमील ॥

कृतित्वम्—तात्कालिकस्य संस्कृतपत्रस्य "संस्कृतरत्नाकरस्य, 'गोरक्षपुरतोऽद्यावधिप्रकाशमानस्य हिन्दी मासिकस्य" 'कल्याणस्य च नैकेष्वङ्केषु भट्टस्य लेखनकला वितता । "संस्कृतरत्नाकरे" चत्वारिंशल्लघुकथा षट्त्रिंशच्च संस्कृतनिबन्धाः प्राप्यन्ते । एतदतिरिक्तं बहवो ग्रन्था अप्रकाशिता गद्यपद्यमयाः ।

प्रकाशिताः ग्रन्था.

अस्य महाकवे. अधस्तनाः ग्रन्था अद्यावधि प्रकाशिताः[1]—

१. साहित्यवैभवम् (काव्यम्) २. जयपुरवैभवम् (काव्यम्) ३. गोविन्दवैभवम् (काव्यम्) ४ कादम्बरी 'चषकवृत्तिः' (टीका) ५. रसगङ्गाधर टीका ६. "गाथारत्नसमुच्चयः" ७. संस्कृतसुबोधिनी (द्विखण्डात्मिका) ८ ईश्वरविलासकाव्यम् (विलासिनी टीका संवलित.) ९. पद्यमुक्तावलिः १०. वृत्तमुक्तावलि ११. 'गीतगोविन्दम्' १२ आदर्शरमणी (लघूपन्यास) १३. सुलभं संस्कृतम् । एष्वस्मत्समीक्षाविषयौ द्वावेव काव्यग्रन्थौ—

१. साहित्य वैभवम्, २. गोविन्दवैभवश्चेति ।

१. साहित्यवैभवम्

"साहित्यवैभवम्—चतुर्दशवीथीषु विभक्तं, "सहचरीति" लघुसंस्कृतटीकयाटीकितमष्टचत्वारिंशदधिकषट्शतपृष्ठात्मकं सहस्राधिकपद्यात्मकं ग्रन्थरत्नम् । अस्य प्रकाशनं "मोहमयीस्थे (बम्बई नगरस्थिते) "निर्णयसागर'—यन्त्रालये मुद्रापयित्वा १९८७ तमे विक्रमाब्दे स्वयं शास्त्रिमहादयेन विहितम् ।

---

१. द्र०—"जयपुर की संस्कृतसाहित्य को देन" (डॉ० प्रभाकरशास्त्री) पब्लिकेशन स्कीम, जयपुर सन् १९८०) "कृतिकार खण्ड ९१. (पृ० २६५)

अस्मिन् लोकानां सामयिकरुचिमनुसृत्य सुललितचित्राण्यपि स्थाने स्थाने निवेशितानि सन्ति, यानि, तत्समये चित्रकर्मणि सुप्रसिद्धस्य "महादेवविश्वनाथ धुरन्धरमहोदयस्य" सुवर्णमाला" नाम चित्रपुस्तकात् संगृहीतानि। इयं मञ्जुनाथकवेः' यौवनकालिकी रचना, यतः सत्स्वपि नानाविषयेष्वत्र निरर्गलशृङ्गाररसस्यैव प्राधान्यं दृश्यते।

एतस्मिन्प्रयुक्तानि च्छन्दांस्यपि प्राचीन परिपाटीत क्वचिद्भिन्नानि, व्रजभाषायाअपभ्रंशभाषाया अवधीभाषाया उर्दू भाषाश्चानीतानि। यद्यप्यस्य छन्दोवीथीति ख्यातायामेकस्यां वीथ्या प्रथमतया संस्कृतभाषापरिगृहीतानि, "पंक्ति" तः समारभ्य 'आर्या (गीति) भेदं यावत्" पञ्चसप्ततिच्छंदांसि मसृणभावभाषया सुप्रयुक्तानि, परं समग्रे काव्ये, संस्कृतेतरवृत्तानां गीतीनामेव प्रयोग बाहुल्यादयम् "अभिनव शैलीविनिर्मितोऽभूतपूर्वसंस्कृतकाव्यग्रन्थ इति नि सन्देहं वक्तुं शक्यते।

'मञ्जुकवितानिकुञ्जस्य "साहित्यवैभवाख्यभागे" वीथयः—

१. आमुखवीथी। २ षड्ऋतुवीथी ३. नवरसवीथी ४. 'दोहा' चत्वरः ('अस्मिन् द्वौ प्रविभागौ'१ स्वयंसन्देश :— यत्र कविकृतस्वयमुद्भावित शृङ्गारदोहावली विद्यते। २. विहारिविलास — यत्र व्रजभाषाया सुप्रसिद्धमहाकवेः "विहारीलाल" स्य 'दोहा'च्छन्दसां समश्लोकी संस्कृतानुवादः श्लाघ्यतमरूपेण विराजते) ५ बरवैचत्वर (यत्र 'द्वादशमासी' प्रभृति लोककाव्यधारायाः सफलानुकृतिर्दृश्यते) ६ नीतिवीथी ७. अन्योक्तिवीथी ८. विनोदवीथी ९ अन्योक्तिविनोदवीथी १०. छन्दोवीथी (तत्र प्रथमं संस्कृतभाषापरिगृहीतानिच्छंदांसि पश्चात्, हिन्दी 'उर्दू' भाषा द्वयव्यवहृतानिच्छन्दांसि) ११. गीतिवीथी—(इयमपि 'चत्वरद्वये विभक्ता। प्रथमे, "व्रजभाषाचत्वरे" मल्लारादि देशप्रसिद्धरागबद्धगीतिः; द्वितीये, उर्दू भाषा-चत्वरे "गज़ल, रुबाई," रेखता, कव्वालीत्यादि' पारसीक शैलीगतागीति) १२ नवयुगवीथी १३ उपसंहृतिवीथी १४. वंशवीथी। इति।

सर्वासां वीथीनामेकैकपद्यसमुद्धृति—प्रसङ्गादेकं पृथक् पुस्तकं भवितुमर्हत्यतोऽत्र प्रामुख्येन शृङ्गाररसस्य "ऋतुवर्णननायिकाभेदादिविच्छत्तीनामानुषङ्गिकरूपेण च हास्यविनोदस्य कानिचन पद्यान्यवतार्य तेषामेव सरलं समीक्षणमुपन्यस्यते।

पद्येष्वेतेषु अनेकेऽलङ्काराः, शब्दशक्तय. गुणरीतय ध्वनिप्रकाराश्च विद्यन्ते, बहुचर्चितत्वाद् व्यर्थपल्लवन भयाच्च, साहित्यरसिकेषु न पुनरेषां

पिष्टपेषणं करिष्यते। केवलमत्र गीर्वाणवाणीप्रयुक्तानां भाषाच्छन्दसां लक्षणततिं निर्दिशन्तो वयं प्रामुख्येनैवास्य विवेचनां साधयाम इतिदिक्।

घनाक्षरी छन्दः—इदं व्रजादिभाषासु प्रचलितं' 'कवित्तेति' ख्यातमन्वर्थनामकं वार्णिकं वृत्तम्। अस्मिन् सान्त्यानुप्रासेण मिथः संवदन्तश्चत्वारश्चरणाः प्रायशः षोडश, पञ्चदशवर्णेषु "यतिं" स्वीकुर्वन्तो दृश्यन्ते। कवित्त भेदे च क्वचित्षोडशषोडशेषु षोडश सप्तदशेष्वपि चेति यतिरे तेषामुन्नेया। "मञ्जुनाथकविवर्यैः "साहित्यवैभवे," तदपि च शृङ्गारादिवर्णने, प्रभूततया एतस्यैव प्रयोगः क्रियते। प्रथमं "गणेशवन्दनं" पश्यन्तु सुधियः—

(कवित्तम्, घनाक्षरी)

"कञ्चुस्कलधौतकलकलितकिरीटधरं
चञ्चत्कर्णतालैर्विघ्नविप्लवविलायिनं
मालावरपुस्तकपरशुधरैश्चकरै—
र्जालानीवनीत्या मिलदेनसां व्यापायिनम्।
मञ्जुलाकृतोपवीतमिह सितकुण्डलिना
'मञ्जुनाथ' दीनजनकरुणाविधायिनं
लम्बोदरमनिशमनन्तविघ्न दम्भोलिक—
मर्चयामि त मो! वत शम्भोरनुयायिनम्॥ (आमुख वी० १)

इति मङ्गलाचरणानन्तरं, प्रभातादि वर्णनद्वारा कविसमयं स्वीकुर्वद्भिर्मञ्जुनाथ वर्यैः षड्ऋतुवीथ्यां "वासन्तिकी" गीतगोष्ठी" एवमुपवर्णिता 'यथा—

"कुसुमसुगन्धजुषो जाता जलयन्त्र सुखाः
वातायनमध्याद्वान्ति वाता निष्कुटान्तरे,
सम्मुखे सरोजदृशो गायन्त्यमूः साभिनयं
सरसवसन्तमिहमधुरतरस्वरे ।
पाटलपरागमिलद्रागमदमेदुरितो
नायकोऽनुरागभरान्नन्दतिनिजान्तरे
यौवनविलासलसद्बिम्बोष्ठी कदम्बभृता
धन्यानां धिनोति गीतगोष्ठी कुसुमाकरे॥
(षड्ऋतु वीथ्यां १८ छन्दः)

एवमेव, ग्रीष्मर्त्तौ काचिद्विलासिनी जलविहारार्थं यदा हृदिन्यामा-

विशति तदा परिहासव्याजेन तीरस्थितस्तस्याः प्रणयी तद्रूपवैशिष्ट्य वर्णन-सिसाधयिषया इत्थं वदति—

"वीक्ष्यभुजमञ्जिमां मृणालिनी निलीना जले
मृदिमामुदीक्ष्यपत्रं पदयोर्विलम्बते।
चेलाञ्चलाद्वीक्ष्य तवमञ्जुलमुरोजयुगं
सुन्दरि ! कमलकोषो मौनमवलम्बते ॥
सम्प्रतिसरोजसाधुविपिन विहारैरलं
वीक्षसे न सम्मुखमुरोजयुगसन्नते।
तवमुखमयंकमञ्जुसुषमासवेक्ष्यमनाक्
सरसिजराजिरेषा सरसि विकम्पते ॥

(तत्रैव, ३४)

वर्षास्वपि कवेः शेमुषी शैथिल्यं न विदधाति। 'काचित्स्वाधीनभर्तृका विभ्रमवती, सायन्तनसमयेऽपि बलात् प्रियं नीत्वा निकुञ्जभ्रमणार्थं गतवती। अकस्मादेव नभसि घनघोरमेघाऽम्बरं समजनि, तीव्राः वर्षाः समागतास्तदा-विलवती, जवेन निर्वर्तन्ती नायिकां वीक्ष्य प्रियः कथयति—

"मेचकमनोज्ञमेघपुञ्जे दिवमावृण्वति
यातायन्निकुञ्जे तस्य फलमुपधार्यताम्।
सुन्दरि ! निरन्धि मुक्तं कुन्तलकलापमिमं
निविडनितम्बे ! तीव्रगतिरपिवार्यताम् ॥
स्रस्तं ते दुकूलमवमुञ्चमूर्छितमानिनिहे !
सरभसगामिनि ! मनागपि विचार्यताम् ॥
प्रेयसि ! पयोदस्तव पीवर पयोधरयोः
प्रवरं पिधत्ते बिन्दुहारं, न निवार्यताम् ॥"

(तत्रैव ४६)

एवं शरद हेमन्त शिशिराद्यतूनां नैकधा वर्णनं कुर्वद्भिर्मञ्जुनाथैः नवरसवीथ्यां नवानामपि रसानां वर्णनमुपन्यस्तम्। तत्र कविसहृदयवल्लभे-शृङ्गारे, वात्स्यायनप्रोक्तकामदशानां, नाट्यशास्त्रोक्त मुग्धादि नायिका-भेदानां चोपन्यासमुपकल्पयद्भिरेभिः, स्वीयामन्दकाव्यकूलङ्कषा समधिकतया प्रवाहिता। तत्र, "नवरसवीथ्यां, शृङ्गारे—तृतीये पद्ये—मुग्धा, चतुर्थे—'स्वाधीनपतिका', पञ्चमे'—वासकसज्जा', षष्ठे—अभिसारिका" सप्तमे,—'विरहोत्कण्ठिता' अष्टमे—'कलहान्तरिता', नवमे—'खण्डिता', दशमे—उत्क-

ण्ठिता चेति बह्व्यः नायिकाश्चित्रिताः । "वृत्तसुरतगोपनायाश्चित्रणं तु समधिकमनोहरम्, तद्यथा, द्वादशपद्ये, काचित्—

"सायमवकाशमुपलभ्यगृहकार्यभरा—
त्कुसुमचयार्थमुपयातामयभुग्नाऽहम् ।"

इति कथयति । यदा तत्र किं सञ्जातमिति प्रश्नस्यान्यविधं समाधानं साधयती सा वराकी, स्मेरमुखं ज्ञातरहस्यं सखीजनमुद्दिश्य पुनर्वक्ति—

"शङ्कितामलीकनर्मशाली काममालीजनो
हन्त ! मधुपालीदत्तदंशा दृढ़ लूनाऽहम् ॥"

(नवरस वीथ्यां शृङ्गारे १२ पद्यम्)

"प्रवत्स्यत्पतिकायाश्चित्रं तु तादृग् हृदयावर्जकं सञ्जातं यद्भुक्तभोगिनां विवाहितप्रवासिनां कृते तदात्मीयानुभव इव प्रतिभाति ।

आलोकयन्त्वत्रभवन्त सहृदयधुरीणाः, यथा—

"दयिते विदेशगमनानुमतिमाकांक्षति
गलितदुकूलमसौ सीदति ससम्भ्रमम् ।
नेत्राभ्यां समीपजलयन्त्रमनुकुर्वतीव
कान्तहृदयेऽपि सृजतीह मौनविभ्रमम् ॥
'मञ्जुनाथ' वपुषि निषक्तबाहुवल्लीभरा
मारुतमथितमञ्जुमल्लीवैति विभ्रमम् ।
कीलितकुचाग्रमवमीलितनयनमिव
शीलितविनय मवरुधे गमनोद्यतम् ॥"

(तत्रैव १८ पद्यम्)

हास्यकाव्यस्यापि निदर्शनं द्रष्टव्यम्—

"गौराङ्गानुकारी मञ्जु 'मिस्टर चपेटा मैन,'
आखेटाय पक्षिणां स्थितोऽमूत्तरुसंहतौ ।
तावत्पैण्टलून विवरेण कृकलाश कोऽपि
रिङ्गन् रिङ्गन् निभृतमयासीत् कटि पद्धतौ ॥
'अरे रे ! किमेतदिति' यावद्वीक्षतेऽधो बला—
तावत्कलामुण्डीं प्राप्य पादावूर्ध्वमुत्थितौ ।
'वैण्ट'[१], 'वैण्ट' जल्पन् पैण्टलून परतन्त्रपदो
'जैनटिलमैन' महाभागः पतित क्षितौ ॥"

(तत्रैव, हास्ये ३ पद्यम्)

---

१. "went went" हस्तात् पक्षी गत. इति जल्पन् ।

नवयुगवीको—नानाविधच्छंदःसु—अन्यदपि, दोहा, सोरठा, सवैया प्रभृति च्छन्दांसि, भट्टपादैः परिगृहीतानि; तत्समधिकप्रचलितत्वादिदानी तेषां-लक्षणान्यकथयित्वैव एभिः सङ्गुम्फितानि सामयिकसामग्रीकानि पद्यानि समवतारयामस्तद्यथा—

(मोटर कार वर्णनं घनाक्षरीच्छन्दसा)

"रवरधिशब्दीकृत चारुचतुश्चक्रं याति—
वक्रं वलनेऽपि निरुद्धघातमिदंमान्यताम् ।
क्रोशानतिक्रामतितुरङ्गं विना वाष्पबलात्
'भोक' भोक'—कोलाहलाद् धत्ते प्रणिधान्यताम् ॥
'मञ्जुनाथ' मुद्राणां सहस्राणीह गौराङ्गेषु
सौन्मदं प्रदाय मनाग् दर्शय वदान्यताम् ।
नवयुगे जीर्णरथकोटरमपास्य, ततो—
"मोटर" मुपास्य महत्महिमाऽनुमान्यताम् ॥

(नवयुगवीथ्यां १० पद्यम्)

'दोहाचत्वरे'-विहारिविलास—भट्टमहोदयैर्यत्र मौलिकसाहित्यसर्जनामुखेनसुरभारत्याःसमुपासनमकारि,तत्रैव, समश्लोक भावानुवदनपद्धत्या हिन्द्यादि महाकवीनामुत्कृष्टकाव्य मौक्तिकमालिकाऽपि सुरगवीमधिकण्ठमासादितेति तेषामत्र "विहारिविलासोऽ" त्र प्रमाणम् । तद् दिङ्मात्रोदाह्रियतेऽस्माभिर्यथा—

१. विहारीलालकृत 'सप्तशती' ('सतसई') ग्रन्थस्य प्रथम पद्यम् (दोहा)—

"मेरी भवबाधा हरो राधानागरि सोइ ।
जा तनकी झांई परे, स्याम हरित दुति होइ ॥"

(सतसई १)

एतस्य मञ्जुनाथ महाकवीनां कृतोऽनुवाद.—

"भवबाधामपनयतु मे, राधा सा मतिधाम ।
श्यामो हरित द्युतिमयति, यत्तनु कान्त्या नाम ॥"

२. एवं "शीश मुकुट कटि काछनी" इति सप्तशत्या द्वितीय पद्यस्य—
"शिरसिमुकुटमधिकटि, ललितपटो वेणुरधिपाणि ।
मालोरसि, तावकमिदं, रूपं हृदि करवाणि ॥२॥

३. "सोहत ओढे पीतपट, श्याम सलौने गात ।
मनहु नीलमनि सैलपर, आतप पर्यो प्रभात ॥" (स० ४)

इत्यस्य,

"श्याममधुर मूर्तिर्हरि., पीतपटेनविभाति ।
उषसिनीलमणि शैलइव, बालातपेऽभियाति ॥"

४. अपिच, "पत्रा ही तिथि पाइए" इति ४८ तमस्य—

"तद्गृहमभितस्तिथिमहो ! पञ्चाङ्गादवयाति ।
वदनविभाप्रतिभासतः, प्रतितिथि पूर्णा भाति ॥

५ "विहारि विरचितस्य—(७१)

"दृग उरझत टूटत कुटुम, जुरत चतुर चितप्रीति ।
परत गाँठ दुरजनहिए, दई नई यह रीति ॥"

इत्येतपद्यस्य—

"सङ्गो दृशि भङ्गोजने, रतिरनुषङ्गमुपैति ।
ग्रन्थिर्दुर्जन हृदिपतति, चित्रमिदं समवैति ॥" (७१)

इत्यनुवाद.; अनन्तरं सुप्रसिद्धस्यान्योक्तिमूलकस्यास्य 'दोहा' पद्यस्य—(८२)

"नहिं पराग नहिं मधुरमधु, नहिं विकास इहिकाल ।
अलीकली सो ही बिंध्यो, आगे कौन हवाल ॥

इत्यस्य, कुशलतापूर्वकमयमनुवादः परिकलित. कविशिरोमणिभि । तद्यथा—

"न परागो न हि मधुरमधु न च विकासमियमेति ।
कलिकयेव बद्धोऽस्त्यलिः, किमपरतो भवितेति ॥ (६२) इति

बरवै बत्वरः—'बरवै' इति नामकमर्धसममात्रिक वृत्तं, प्रायः अवधीभाषायाः शृङ्गारप्रसङ्गेषु प्रयुज्यते। लोकभाषायां "बारहमासी' इतिनाम्ना नायिकायाः विरहवर्णनपुरःसरं द्वादशमास कार्याणि वर्ण्यन्ते। संस्कृतेऽपि तदियं "द्वादशमासी" 'बरवै' इति छन्दसा स्वाभाविकरूपेण मञ्जुनाथसुधीभिः विनिबद्धा, यथा—

(द्वादशमासी, बरवै छन्दसि)

ममसखि ! चैत्रे चन्दन निचय चरेण ।
चित्रं विचलति चेतः पवनभरेण ॥१॥

वैशाखे स्मर विशिखा विकलयन्ति ।
विषमविरहविष वह्निं, वपुषि वमन्ति ॥२॥

ज्येष्ठे ज्वरमिव जनयति जलजसखोऽपि ।
जिह्मं जीवति जीवनधनरहितोऽपि ॥३॥

आषाढ़े मुहुराशा घनैरपूरि ।
प्रियसखि ! मम पुनराशा भ्रमयति भूरि ॥४॥

नभसि नभसि नवजलदैर्वृष्टिरकारि ।
चित्रं सखि ! मम दृग्भ्या प्रवहति वारि ॥५॥

भाद्रे घनजलभरिता सरितो भान्ति ।
आशा पश्य कदा मे हरिता भान्ति ॥६॥

आश्विनमासि मृगाङ्कोमुदितमुपैति ।
सखि ! मममानस सदने तिमिरमवैति ॥७॥

कार्तिकिके किलकमलामर्चति को न ?
क्लिश्यति मादृक् कृपण क्रीडति यो न ॥८॥

मार्गे हैमनपवनो, जवनो वाति ।
न मनो मदनोद्रेकाद्धृतिमिह याति ॥९॥

पौषेऽपरिमितशीत वपुरुपहन्ति ।
प्रियतमविरह प्रियसखि तदपि निहन्ति ॥१०॥

माघे मञ्जुदृशोऽमूमुं वमुपयान्ति ।
मयि सखि ! मनसिजबाणा मुहुरभियान्ति ॥११॥

फाल्गुन ! फलयसि कामास्तदिह नमामि ।
प्रियतमसङ्गमसुखिनी मनसि नमामि ॥

इति, समासतः "साहित्यवैभवस्य' समीक्षा पर्यवसिता । सम्प्रति प्रक्रान्तस्य "गोविन्दवैभवस्य" विषयेऽपि किमपि समालोच्यते ।

(२) गोविन्दवैभवम्—गोविन्दवैभवन्तु कवेरुत्तरकालीना कृतिरस्ति । आजीवनं शोकमयस्य नरलोकस्य नीरस वर्णनात. समुद्विग्ना कवयो मञ्जुनाथाः, जीवनस्य चरमेयामे परमाराध्य श्यामसुन्दरस्यवैभववर्णने कृतसकल्पाः कथयन्ति—

"पूर्वार्जितपुण्यैर्या कवित्वकला प्राप्ता, हन्त
विज्ञाना विवर्धितवान् विषय रुचि तया ।
नृपनगरादिकं निबध्नन्तमिविश्य तया
दृश्यमिव दर्शितवान् मूर्तिमदिदं तया ॥

मञ्जुनाथ - नानाविधकाव्यगुणैर्भव्या भवे—
न्भव्याऽपि च सूक्तिर्हरिहीना यदि किं, तया ?
साम्प्रतमवेहि देवि ! वाणी यद्वृथां विधेहि
वाणीमद्यपूतां करवाणीश्वरचिन्तया ॥"
(गोविन्दवैभवम्, विनय प्रस्तावना २)

अतोऽस्मिन् तस्यामेव शैल्यां भगवतो गोविन्दस्य—व्रजेन्द्रनन्दन श्रीकृष्णस्य, रूपमाधुरी, वेणुमाधुरी लीलामाधुरी, कवेरात्मनिवेदन, दैन्य च सर्वमत्यावर्जकरूपेण समुपक्लृप्त वर्तते । अस्य प्रकाशनं गोरक्षपुरीयेण सुप्रसिद्ध "गीताप्रेस" इति प्रकाशन संस्थानेन कृतमासीत् ।

विविधभाषाच्छंदःसु श्रीकृष्णभक्तिरसस्निग्धाः ऊनपञ्चाशत्प्रकरणानि अस्मिन् विद्यन्ते, येषां द्विधा विभाजनं कर्तुं शक्यते—

(१) विषयानुसारेण

(२) वृत्तानुसारेण (शैलीगतम्)

प्रथमे विषयानुसारिकृते विभाजने वयं पश्यामो यदस्मिन् षट्त्रिंशत् प्रकरणाः समाविशन्ति, एषां क्रमानुगतमुल्लेख एवं भवति—

(१) विनयप्रस्तावना (२) मानस निवेदना (३) मनः प्रबोधना (६) सौन्दर्य सुषमा (९) आशंसा (१०) कारुण्यम् (८) जीवन सध्या (९) मनः प्रमोदः (१०) सान्त्वना (११) प्रार्थना (१२) भगवान् हयग्रीवः (१३) श्री धन्वन्तरिः (१४) दैन्यनिवेदनम् (१५) छायावादः (१६) सप्तवाराः (१७) (द्वादशमासाः)(१८) षड्ऋतवः (१९) नामसंकीर्तनम् (२०) नवधाभक्तिः (२१) विश्वात्मा (२२) श्यामघनप्रार्थना (२३) ससाराद्वैराग्यम् (२४) भगवद्रति (२५) कारुण्यप्रार्थना (२६) श्री शिव. (२७) शंकरात्कारुण्यप्रार्थना (२८) सरस्वती (२९) चरणम् (३०) अम्बरे विराजमाना शिलामयी (३१) अन्त-समये भगवत प्रार्थना (३२) शान्तरसः (३३) कालस्य कुटिलता (३४) शिक्षा परिपाटी (३५) वर्तमानस्त्रीशिक्षा (३६) श्री महालक्ष्मी. ।

द्वितीयं तु छन्दः पद्धत्या कृते विभाजने तत्तच्छन्दसा त्रयोदश भेदाः प्रकरणतया सकलितास्तद्यथा—

(१) सवैयास्तवकः (अस्मिन्, वृत्तस्यास्य उपजाति—मत्तगयन्द, चकोर, मुक्तहरा, सुन्दरी, वाम-किरीट-दुर्मिलाद्यनेकभिदाः परिकीर्तिताः ।)

(२) अश्वघाटी (३) नारायणनकुंटम् (४) चतुष्पदी चयनम् (५) कुण्ड-लिया खण्ड. (३) छप्पय पटलम् (७) वरवे विलासः (८) दोहासन्दोह. (९)

सोरठा समुदयः (१०) अमृतध्वनि (११) गीति गोपुरम् (१२) श्लोकाः (१३) उपसंहारः ।

वयमत्र प्रत्येकस्य प्रकरणस्य कानिचन मुख्यान्येव पद्यरत्नानि निदर्शन रूपेण समुद्धृत्य—काव्यरसिकान् सभाजयामः, यत सीमितेऽस्मिन् प्रबन्धे सर्वेषां तु कथैव का एकस्यापि प्रकरणस्य सम्यग् विवेचनाऽत्यन्तकठिना ।

(१) विषयानुसारि प्रकरणेषु समुदाहृतानि, पद्यानि—

(क) भगवत. श्यामसुन्दररूपवर्णने—"आनख शिखम् यथा—"

हंस इव कञ्जे हीरहंसको विभाति पदे
विद्युद्द्युतिगंसकोऽथ पीतपटो वीक्ष्यताम् ।
वक्षसि विशाला वनमालामञ्जु राजतेऽथ
रत्नरुचिजालावहं कुण्डलमुवीक्ष्यताम् ॥
रोलम्बावलीवभाति बाढमलकावलीय—
मुपरिमहार्हमणिमुकुटमयीक्ष्यताम् ।
सौभगेन साकं सतां सर्वसुखसाधा सदा
राधारमणस्य रूपमाधुरी निरीक्ष्यताम् ॥"

(रूपमाधुरी ३/२०)

(ख) भगवत्स्मरणपूर्वकं सप्तवाराणां वर्णनम्—यथा हि—

"नित्यं रविवारे रवितनयातटस्थो लसे—
च्चारुचन्द्रवारेबर्हिचन्द्रकचकासी भातु ।
भूरिभौमवारे भवेद्भौमासुरहारीसखा
बुद्धिं बुधवारे बलभद्रानुजो मेऽनुयातु ॥
गाढं गुणयामि गुरुवारे गोपगोपीपति
श्याम. शुक्रवारे शौरिरेष शनिवारे पातु ।
संसारे ह्यपारे समन्नेतदेव याचे प्रभो !
ध्यानं ते मुरारे ! सप्तवारेष्वपि मा जहातु ॥

(१६।६२)

(२) वृत्तानुसारि प्रकरणेषु समुदाहृतानि पद्यानि—

(क) सवैयास्तवके, "दुर्मिल" इति तद्भेदो यथा—

"जननावधिलौकिक सङ्घटना
गतचित्तमनामयहीनमिमम्

सदनावनिवित्तयशोललना—
दिशमानयमानिशलीनमिमम् ।
अपि 'मञ्जुलनाथ' दया विधिना
कुरु ते चरणाऽभिमुखीनमिमम् ।।
अधुना भवदुःख घनाकुलितं
यदुनाथ ! सनाथय दीनमिमम् ।।"
(तत्रैव १२।२४)

(ख) 'कुण्डलिया' खण्डे—एकं पद्यम्—

"कालिन्दी पुलिने पथिक ! तरुणतमालमुपेहि ।
शिरसि यस्य बर्हो लसति, तदनु शुक हशि देहि ।।
तदनुशुकं हशिदेहि, कपोतस्तदधो राजति ।
कुसुमराशिरस्यान्तिके हि सुभगं विभ्राजति ।।
विद्युद्युतिमुपयाति हसमुखरे नवनलिने ।
'मञ्जुनाथ' नयमानसं नु, 'कालिन्दी पुलिने' ।।
(४१।४)

(ग) "अश्वघाटी" प्रकरणस्यैकं पद्यम् तद्यथा—

"सन्दाहिनित्यपरनिन्दादिपापकृतिकन्दाधिरोपमुपयन्
किं दानलोभलवसन्दानितोभ्रमसि मन्दालयेष्वनितराम् ।
त्वं दास्यमेत्य मुनिवृन्दार्चनीयमघवन्धात्ययाय भज भो
मन्दारमञ्जुमकरन्दालिमेदुरमुकुन्दाङ्घ्रि कञ्जमनिशम् ।।
(३८।१)

(घ) 'अमृतध्वनि' स्तद्यथा—

"नन्दन्नन्दनिकेतने, विदन्नखिलसुखानि ।
नन्दयान्नन्दात्मजो, भिन्दन्दनुजकुलानि ।।
भिन्दन्दनुजनिवृन्दं नखमुपरिवन्दन्नरवरे ।
छिन्दन्भवभयमिन्दन् जगति विरुन्धन् समरे ।।
स्पन्दद्भ्रमरममन्दद्रुमभवचन्दनचन्दन ।
चन्द्रद्युतिमपि निन्दद्वनविनन्दन्नन्दन ।।"
(४५।१)

अनन्तरं गीतिप्रकरणादपि निदर्शनभूतं किञ्चित्समुद्धृत्य वयमुपसंहराम: प्रबन्धमिमम् । प्रथमं तावद् भारतीय पद्धत्यागुम्फितगीतनिकुरम्बेषु 'प्रभातगीतिः' अंशतः समपायनी क्रियते श्रीमतां, मनोरञ्जनाय, यथा—

(प्रभातगीति.)

"विनयमयतमानसेन नन्दगोप बाले ।। ध्रुवपदम् ।।
चपलारुचिडम्बरेण परिहितपीताम्बरेण
वपुषा घनसुन्दरेण नन्दित व्रजबाले ।।०।।
कुण्डलमिहगण्डलम्बि चञ्चति चपलाविडम्बि,
कमलोपमचरणचुम्बि लम्बितवनमाले ।।
विनयमयतमानसेन० ।।" इत्यादि ।
(४७।१२,३)

इतः परम् 'उर्दू' भाषायां प्रयुक्तगीतपद्धत्या परिकलितेषु एकं "गजल" मेवस्योदाहरण यथा—

(गजल)

"भ्रमन्तं भूरि संसारे मुरारे ! पाहि दीनं माम् ।
पदाब्जे ते विलोठन्त, द्रुतं स याहि दीन माम् ।।
मुहुः क्लिश्नाति चिन्ताऽसौ समन्तादाकुलीभूतं
ततोऽपि व्रीडयत्येषा महत्त्वाशा हि दीन माम् ।।"
× × ×" (२१।१-२)

इत्थमस्माभिर्माधुकरी वृत्तिमनुस्वीकुर्वद्भिरेतत्समीक्षणं संदब्धम् । भट्टवर्याणां कृतित्वव्यक्तित्वविषये १९७५ तमे ख्रीष्टाब्दे 'राजस्थानविश्वविद्यालयात्कयाचिद्विदुष्या श्रीमती उपाभार्गव इति ख्यातया शोधप्रबन्धोऽपि प्रस्तुत इति डॉ० प्रभाकरशास्त्रिमहोदयाना डी० लिट् निबन्ध पुस्तकेन[१] ज्ञायते। तदेतन्मोदस्यावसरमस्माभिर्यदेतादृशानामनेहसाविस्मृतप्रायाणां सुरगवी समुपासकाना महाकवीना साम्प्रतिकविद्वत्तल्लजे. स्वशोधप्रबन्धादिषु पुनः संस्कृतसाहित्ये आसनं दीयते । एतेन 'संस्कृतमव्यवहार्या लोकभावसरणीतो दूरङ्गता 'मृतभाषेति' मुधा जल्पकानामनल्पतया मुखमुद्रणं कर्तुं शक्यते ।

मञ्जुनाथ महाकवीना काव्यसुमं लोकोत्तरसुरभिसम्पन्नं शतदलंसहस्रदलं च विद्यते, काव्यमरन्दमुग्धा विद्वच्चञ्चरीका एवात्राधिकारिणः, निबन्धेनानेननास्माभिस्तु तेषा तत्र सम्मुखीकरणमेवोपाहितमितिशम् ।

संस्कृतविभागे
काशीहिन्दूविश्वविद्यालय, वाराणसी ।

१. "जयपुर की संस्कृत साहित्य को देन", पृ० २६५, पब्लिकेशन स्कीम, जयपुर सन् १९८० ।

# सूत्रपूर्वन्यायशास्त्रम् न्यायसूत्रकारश्च

कु० नवलता (डी-१, पाण्डे का तालाब कालोनी, ताल कटोरा रोड, लखनऊ)

भारतीयषडास्तिकदर्शनेषु पदार्थवादिदर्शनेष्वन्यतमं न्यायदर्शनम् प्रतिनिधित्वेन गण्यते। न्यायदर्शनोद्भवः कदाभूत्? केन प्रवर्तितं विरचितञ्चेदं दर्शनम्? न्यायसूत्रेभ्यो प्राक्का दशा अवर्तत न्यायदर्शनसिद्धान्तानाम्? इत्येते प्रश्नाः साम्प्रतं विवादमूलं सञ्जाताः।

दिशाद्वये प्रवाहितास्माकं दर्शनधारा एकत. चार्वाकबौद्धजैनैः नास्तिकनैः .परिपोषिता, अपरतश्च वेदसहिष्णुषडास्तिकदर्शनैः न्यायवैशेषिकख्ययोगमीमासावेदान्तैरभिसिञ्चिता। अध्यात्मचिन्तनं सत्यान्वेषञ्च भारतीय जिज्ञासूनां प्रमुखो विषय इति सर्वैः प्रख्यापितः आवैदिककालात् यत्र-तत्र सर्वत्रावशीर्णाना दर्शनतत्त्वाना सिद्धान्तानाञ्च सुनियोजितस्वरूपं सर्वप्रथमं विविधदर्शनसूत्रेषु दृश्यते। सूत्राण्येतानि उपनिषदुत्तरकाले दर्शनयुगोद्भवस्य तत्सम्बन्ध्यान्दोलनस्य च परिणामत्वेन प्रतिष्ठितानि। आन्दोलने तस्मिन् भारतीयविचाररक्षार्थं न्यायदर्शनः योगदानमुल्लेखनीयम् इत्यत्र न काचित्संशीतिः। कालान्तरेऽपि अध्ययनाध्यापनस्य विषयत्वेन यथा न्यायशास्त्रं-उपस्कृत. न तथाऽन्यः शास्त्र। न्यायशास्त्रस्य लोकप्रियत्वस्यमहत्तमकारणमासीत्तस्य विवेचनशैली। अपि च भौतिकयथार्थवादाध्यात्मिकादर्शवादयो. यादृग् समन्वयः न्यायदर्शन उपलभ्यते न तादृगन्यत्र। एतदेव कारण यल्लोकजीवनेनसम्बद्धोऽयं शास्त्रः व्यापकत्वेन प्रचार प्रसारञ्चाधिगतः। विषयवैशिष्ट्यात् दार्शनिकमीमासादृष्ट्या च महत्त्वपूर्णो न्यायशास्त्रः तर्कशास्त्रस्य प्रवर्तकः इति निश्चीयते।

मानवाना जिज्ञासुः धीः तान् तर्कचिन्तनं प्रति आकर्षयति। लौकिकचिन्तनमेवेदं तत्त्वचिन्तनस्य चरमसीमानमधिगम्य परमतत्त्वपरमसत्यसदृशाना तत्त्वाना जिज्ञासामुत्पादयति। दर्शनेष्वेतादृशः तत्त्वानि प्रमाणबलेन सिध्यन्ते। एतस्मादेव प्रमाणशास्त्रमिति दर्शनानामपरपर्याय.। तत्र च न्यायदर्शनमेव प्रमुखम्। भाष्यकारेण वात्स्यायनेन 'प्रमाणैरर्थपरीक्षण न्याय.'[1] इत्युक्त्वा न्यायलक्षणप्रतिपादने प्रमाणमहत्त्वं स्वीकृतम्। व्युत्पत्तिबलेन निपूर्वक इण् गतौ धातो. सिद्धन्यायशब्दस्य ग्रहणं गतिशीलविचारचिन्तन-

१. न्यायसूत्रवात्स्यायनभाष्य १-१-१

रूपेण कर्त्तुं शक्यते । महर्षिणा पाणिनिना अभ्रेषार्थे प्रयुक्तो न्यायशब्दः ।[1] अभ्रेषशब्दश्च काशिकायां 'पदार्थानामपचारो यथाप्राप्तकरणमभ्रेष'[2] इति व्याख्यात । अर्थात् पदार्थानामनतिक्रमण यथाप्राप्तकरणं वाभ्रेषः कथ्यते । अनया व्याख्यया न्यायशब्दस्याभिप्रायोऽस्ति पदार्थाना यथार्थस्वरूप विवेचनम् ।

प्रथमं पदार्थाना सूक्ष्मयथार्थस्वरूपान्वीक्षणे प्रयुक्तो न्यायशब्द कालान्तरे लोकव्यवहारेषु सामान्यनियमपद्धते प्रति बोधकत्वेन सूचिकटाहन्याय, देहलीदीपकन्याय. मार्जारीमर्कटन्याय इत्येतादृगसङ्ख्यन्यायेषु प्रचलित. । पश्चाच्च विषयविवेचनदृष्ट्या परवर्तिनो मीमांसाग्रन्थाः न्यायपदेन अभिहिता । आपदेवविरचितमीमांसान्यायप्रकाश. पार्थसारथिमिश्रकृतन्यायरत्नाकर' माधवीयश्च न्यायमालाविस्तरः इत्यादिर्यथा. प्रमाणत्वेन प्रस्तोतु शक्यन्ते । सर्वप्रथम तृतीयशताब्दीशवीय पूर्वे आपस्तम्बेन मीमासार्थे गृहीतो न्यायपद ।[3] डॉ० राधाकृष्णन् महोदयेन अनुसन्धाने. विषयस्य विश्लेषणात्मकं समीक्षणमेव न्याय इति प्रतिपादितम् । स च न्याय. विज्ञानानामपि विज्ञानमिति वक्तुं शक्यते ।[4] लोकसम्मतं न्यायलक्षणं प्रतिपादयता यवनदार्शनिकप्लेटो महोदयेनोक्त यत्सर्वस्य स्वाधिकृतस्य स्वीयस्य प्राप्ति. प्रयोगश्च न्यायः । लक्षणमेतद्व्यवहारवादि विचारं पोषयति यत्साम्प्रतं प्रायो न्याय्यार्थे स्वीक्रियते । अस्तु । निश्चप्रचमेतत्तथ्य यन्न्यायदर्शनमेव एकमात्रं लोकात्मविषयानां समवेत्ता इति । एकत परमाणुवादाख्य न्यायस्य मूलभूतो मेरुदण्ड इव सिद्धान्तः भौतिकवैज्ञानिके. प्रयोगनिकषे घट्टनात्पुष्टिमधिगतः, अपरतश्च आत्मपरमात्मादिकस्य दार्शनिकविवेचनं प्रमाणे कृतम् । अत न्यायदर्शनस्य गुरुत्वं महत्वञ्च स्वयंसिद्धम् ।

यद्यपि न्यायदर्शनसिद्धान्तानां सुष्ठुसंयोजनस्य व्यवस्थितविकासस्य च श्रेयं सूत्रकारायैव प्रदातुमुपयुक्तं, किन्तु नैतस्य तात्पर्योऽयं यत्तस्मात्पूर्व न्यायशास्त्रोऽविद्यमान आसीत् ! वस्तुतः सर्गादावेव पदार्थाना सत्ताबोध. मानवमनसि अजायत । जन्मन उपरान्त एवाध्यात्मदृष्टि यस्मिन्कस्मिंश्चिद्रूपे प्राप्यत एव इति । सत्यन्वेषणप्रवृत्तिरपि सनातनी न तु नवीना । अत. पदार्थान् दृष्ट्वा तेषां अन्त गह्वरेषु प्रविष्टकामै मनीषिभि तत्त्वचिन्तनं आदिकालादेव प्रारब्धम् । ततः प्रभृति आवैदिककालं न्यायदर्शनतत्त्वान्यङ्कुरितानि । वैदिककालात्प्रभृति चतुर्थपञ्चमषष्ठशताब्दिभ्यो वा ईशवीय-

१ अष्टाध्यायीसूत्रपाठ—३-३-३७

२. काशिका—३-३-३७

३. History of Indian Philosophy Vol. I by Dr S N. Das Gupta. Page 276

४. भारतीयदर्शन—भाग, दो,—डॉ० राधाकृष्णन् पृ० २९

पूर्वपर्यन्तं विच्छन्नप्रवाहा न्यायसिद्धान्ताः अवशीर्णा.। तत न्यायसूत्राणि विरचितानि। न्यायसूत्रकारत्वेन प्रख्यातः गोतमः अक्षपादः महर्षिर्गौतम. मेधातिथिश्च पृथक्-पृथक् व्यक्तित्वाः, एक एव वा इत्यस्मिन् विषये प्रसङ्गत. चर्चा विधास्यते। अत्र विचारणीयोऽयं प्रश्नः यन्न्यायसूत्रकारात् प्राग् न्याय-दर्शनस्य का दशा अवर्तत ?

**सूत्रपूर्वो न्यायशास्त्र.**

वैदिकसाहित्ये आरण्यकेषूपनिषत्सु रामायणमहाभारतयोः स्मृतिग्रन्थेषु व्याकरणग्रन्थेषु च विविधेषु प्रसङ्गेषु विविधेष्वर्थेषु न्याय उल्लिखितः। प्रथमं तावद्विचार्यः यन्न्यायशास्त्रस्य कृते बहूनि नामानि प्रचलितानि तेषामौचित्य-विचारोऽपेक्षित. इति कृत्वा सर्वप्रथमं 'तर्क' विषये विचारो विधेय.। पश्चात्तनैः विद्वद्भि 'लॉजिक' इतिपदेनाभिहितस्य तर्कस्य विषये अनेकाः धारणा प्रस्तूयन्ते। तेषाम्मते अरस्तूसम्मतो तर्कशास्त्र यवनराज्ये प्रचलितसिलोसिज्माख्यान्दोल-नादाविर्भूतः भारतीयतर्कशास्त्रश्च तन प्रभावितः। प्रमाणं तत्र 'सिलोसिज्म' इत्यस्यावयवेषु न्यायसम्मतानुमानवाक्येषु च साम्यम् इत्युच्यते तैः। साम्याधारे केवलं भारतीयतर्कशास्त्र यवनतर्कशास्त्रस्य प्रभावस्वीकारं न समीचीनम् प्रतिभाति। अरस्तो. पूर्वमेव उपनिषत्सु तर्कस्य चर्चा विहिता। अत. भारतीय तर्कशास्त्र. मौलिक आसादिति निश्चेतुं शक्यते। तर्कशब्दस्य प्रयोगः न्याय-शास्त्रस्यार्थे कथं कस्मिन् काले च प्रचलितः ? इति चर्चा प्रसङ्गे उल्लेखनीयं यत् न्यायशास्त्रो यदा प्रादुरभूत् तावत्पर्यन्तं दार्शनिकान्दोलनस्य स्फुलिंगं प्रज्ज्वलितम्। बौद्धजैनादिनास्तिकदर्शनानामाविर्भावात् सैद्धान्तिको मतभेदः प्रकाशमधिगतः। स्वस्वमतवादान् पोषयितुं प्रमाणयितुं च विविधै. दर्शना-वलम्बिभिः शास्त्रपरम्परा प्राबल्येनाङ्गीकृता। स्वसिद्धान्तमण्डनार्थमपरेषाञ्च खण्डनार्थं साधनीभूता तर्कप्रणाली सर्वैरपि दर्शनैः पुरस्कृता। तत. परं न्याय-शास्त्रेण विषयत्वेन स्वीकृत. तर्क. षोडशपदार्थेषु प्रमाणादिष्वन्यतम. महत्त्व-पूर्णश्च मत। सर्वथा परीक्षणोपरान्ते तर्कबलेन पदार्थसिद्धिर्भवति अत· न्याय-दर्शनं तर्कशास्त्रपदेनोपबृंहितम्। तर्कभाषा, तर्कसङ्ग्रहः, तर्कामृतम्, तार्किक-रक्षा इत्येते ग्रन्था· न्यायप्रतिपादका इति ज्ञायते सुधीभि.। न्यायाचार्यैः स्वीक्रियते यन्न्यायसूत्रकारात्प्राक् तर्कशास्त्र. तथैव विद्यमान आसीद्यथा जैमिनेः प्राक् मीमांसा पाणिनेश्च पूर्वं व्याकरणमासीत्। अत तर्कशास्त्र न्याय-शास्त्रस्यैवापरपर्याय इति निश्चीयते। डॉ० राधाकृष्णन्महोदयेन स्पष्टमुक्तं यन्न्यायसूत्रेभ्य· प्राक् दत्तात्रेय पुनर्वसुः आत्रेय· सुलभा वैरागिनी अष्टावक्रश्-चैते न्यायवेत्तारः प्रसिद्धाः।[1] 'ब्रह्मजालसुत्ताख्ये बौद्धग्रन्थे 'तक्की' इति पदेन

---

1. भारतीयदर्शन—भाग-२— डॉ० राधाकृष्णन् पृ० ३१

तार्किका 'विमंमी' इति पदेन च मीमांसका सादरं स्मृता· । अत बौद्धदर्शनस्य पूर्वं तर्कशास्त्र प्रचलित ख्यातश्चासीदिति अनुमीयते ।

कठोपनिषदि तर्कमुल्लिख्य तस्य हेयत्वम् प्रतिपादितम्—नैषा तर्केण मतिरापनेया ।[1]

अन्यत्र च 'यस्तर्केणानुसन्धत्ते स धर्मो वेदनेतर' इत्युक्त्वा तर्कस्समाऽदृत । ब्रह्मसूत्रेषु 'तर्काप्रतिष्ठानादि'ति[2] सूत्रेण तर्कस्य प्रतिष्ठा अस्वीकृता । विष्णुपुराणे न्यायमीमांसाभ्या सह उपाङ्गत्वेन स्वीकृत तर्क 'मीमांसान्याय-तर्काश्च उपाङ्गा परिकीर्तिता' इति वचनेन ।

उपर्युक्तपुराण वचनानुसारेण तर्कोऽयं न्यायाद्भिन्न इव प्रतिभाति, किन्तु श्रीनिवासशास्त्रिमहोदयेनात्र न्यायपदेनाध्यात्मप्रधानो न्यायशास्त्र तर्कपदेन च प्रमाणप्रधानन्यायशास्त्र प्रतिष्ठितः ।[3] एवं गोतमात्प्रागपि अध्यात्मप्रधानो न्यायशास्त्र प्रमाणप्रधानश्च न्यायशास्त्रः प्रमुखाध्येयविषयौ आस्तामिति सिध्यति । ब्रह्मसूत्रोक्त तर्कपदेन न्यायग्रहणमेव सम्भाव्यते । पदार्थविशेषरूपेण सर्वप्रथम न्यायसूत्रकारेणैव तर्क· प्रतिष्ठितः । सूत्रानुरेण अविज्ञाताना पदार्थानां तत्त्वज्ञानार्थं यानि साधनानि ऊहत्वेन गृह्यन्ते तान्येव तर्कत्वेनोपस्क्रियन्ते—

अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्क· ।[4] तर्क व्याख्यायता न्यायभाष्यकारेण वात्स्यायनेन प्रमाणानुग्राहकत्वेन स्वीकृतः तर्क । तर्क-विद्येयं न्यायशास्त्ररूपिणी कदाचित् पाठ्यविषयेषु अनिवार्या आसीदिति उल्लेखोऽपि प्राप्यते ।

तर्कशास्त्रातिरिक्त प्रमाणशास्त्रपदेनाभिहित· न्यायशास्त्र· प्रमाणैरर्थ-परीक्षणमेव न्याय इतिपूर्वमेव प्रतिपादितम् भाष्यकारवचनम् । न्यायसूत्रेषु षोडशपदार्थेषु प्रमाणगणना प्रथमं विहिता । प्रसङ्गेऽस्मिन् उल्लेखनीयमेतत्तथ्यं यत् त्रिविधेशास्त्रप्रवृत्तौ पदार्थाना लक्षणस्य परीक्षा प्रमाणैरेव भवितुमर्हति । वैदिकसाहित्ये ऐतिह्यादिप्रमाणान्युल्लिखितानि । यद्यपि सम्पूर्णदर्शनशास्त्र· प्रमाणशास्त्रपदेनाभिधीयते विपश्चितैः किन्तु न्यायदर्शनस्य तु प्रवृत्तिरेव प्रमाणं विना न भवति । अत· प्रमाणविद्या न्यायशास्त्र इति प्रख्यापितम् । अनुमानं न्यायदर्शनस्य महत्त्वपूर्णं प्रमाणम् तदवयवेषु हेतुः अनुमानस्य मेरुदण्ड-

---

१. कठोपनिषद्—१-२-६
२. ब्रह्मसूत्र – २-१-११
३. तर्कभाषाभूमिका—पृ० ८-९
४. न्यायसूत्र – १-१-४०

इव प्रतिष्ठितः, हेत्वाभासश्चान्यतम न्यायसम्मतपदार्थः अतः हेतुविद्या इत्यपि न्यायशास्त्रस्य कृते प्रयुज्यते। एवमेवबौद्धिकविवेचनस्य गूढचिन्तनस्य प्रतिपादकः वादनाम पदार्थः इति अवधार्य खण्डनमण्डनपरम्परोपकारकः न्यायशास्त्रः 'वादविद्ये'ति अभिधानेनापि प्रचलितः। मिलिन्दपह्ने बौद्धाचार्यैः 'सांख्ययोगानीतिविसेसिका' इत्यत्र 'नीति' पदेन न्याय एवाङ्गीकृत इति विदुषां सम्मतिः। नीतिशब्दोऽयं शब्दव्युत्पत्याधारेऽपि न्यायदर्शनस्य पर्याय एव प्रतीयते। एवमेव वाकोवाक्यम्, अक्षपाददर्शनं गोतमीयदर्शनमित्यादिभिः नामाभिः न्यायदर्शनमेव स्वीकृतम्।

न्यायदर्शनस्य कृते प्रचलिताभिधानेषु 'आन्वीक्षिकी, इत्यपि प्रचलितः। तर्कवदेवायं शब्दः विवादविषयस्सञ्जातः। उपनिषत्सु अध्यात्मविद्याया कृते प्रयुक्त 'आन्वीक्षिकी' इति पदः। कौटिल्येन तदन्तर्गतं सांख्ययोगलोकायतान् परिगण्य सर्वविद्याप्रदीपत्वेन सर्वकर्मोपायत्वेन सर्वधर्माश्रयत्वेन चाख्यातान्वीक्षिकी विद्या। उक्तं यथा अर्थशास्त्रे—

प्रदीप सर्वविद्यानामुपाय सर्वकर्मणाम्।
आश्रय सर्वधर्माणां शाश्वदान्वीक्षिकी मता॥[1]

आन्वीक्षिकीपदेन कैश्चित्कापिलीयसाङ्ख्यशास्त्रं पातञ्जलयोगशास्त्रञ्च गृह्यते, अपरैश्च योगपदेन च न्यायवैशेषिकौ स्वीकृतौ। एवं न्यायवैशेषिकसांख्याः आन्वीक्षिकीविद्यान्तर्गताः इति मन्यन्ते विद्वांसः। कौटिल्येन त्रयीवार्तान्तर्गतं आन्वीक्षिकीविद्योल्लिखिता। मनुस्मृतौ राजधर्मविषयके सप्तमाध्याये ऋक्यजुः साम इति त्रयीविद्या, दण्डनीतिः, वार्तारम्भः, आत्मविद्या, आन्वीक्षिकी च राज्ञोऽध्येयविषयाः इति प्रतिपादितम्—

त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिं च शाश्वतीम्।
आन्वीक्षिकी चात्मविद्याञ्च वार्तारम्भश्च लोकत॥[2]

वात्स्यायनेन भाष्योपोद्घाते कौटिल्यस्य श्लोकः पाठभेदेन न्यायशास्त्रप्रतिष्ठापकत्वेनोपवर्णितः—

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्।
आश्रयः सर्वधर्माणां विद्योद्देशे प्रकीर्तिता॥[3]

विद्यापदेनात्रान्वीक्षिकीविद्या, न्यायविद्यैव स्वीकृता। भाष्यकारेण आन्वीक्षिकी पदं व्याख्याय तस्य न्यायशास्त्रत्वं स्पष्टतः प्रतिपादितम्—

---

१ अर्थशास्त्र (कौटिल्य) १-२-१

२ मनुस्मृति—७-४३

३. न्यायभाष्यवात्स्यायन—(भूमिका—पं० ढुण्ढिराजशास्त्री) पृ० ३८

प्रत्यक्षागमाश्रितमनुमानम् सान्वीक्षा। अथवा प्रत्यक्षागमाभ्यामीक्षितस्यान्वीक्षणमन्वीक्षा। तया प्रवर्तते इत्यान्वीक्षिकी न्यायविद्यान्यायशास्त्रम्।[1] प्रत्यक्षागमाभ्या विज्ञातपदार्थस्यानुमानेन पुन पुनरीक्षणं पदार्थसिद्धये यस्मिन् भवति स न्यायशास्त्रम् आन्वीक्षिकीविद्या इति प्रतिपादितम् भाष्यकारेण।

अत्यन्तप्राचीनेषु ब्राह्मणग्रन्थेषु उपनिषत्सु च प्रत्यक्षैतिह्यानुमानतर्कनिर्णयजल्प प्रयोजन प्रमाणवितण्डादिन्यायसम्मतपदार्थाः उल्लिखिता। छान्दोग्योपनिषदि (७-१-२) बृहदारण्यकोपनिषदि (२-४-५) आन्वीक्षिकीपदेन न्यायशास्त्र उपस्कृत सुबालोपनिषदि 'न्यायो धर्मशास्त्राणि' इत्युक्त्वा अन्यशास्त्रपरम्परासु न्यायोऽप्युल्लिखितः। तैत्तिरीयारण्यके 'स्मृतिप्रत्यक्षमैतिह्यमनुमानं चतुष्टयमिति वचनात् न्यायसम्मतानि प्रमाणानि चर्चितानि। आयुर्वेदीयचरकसंहिताया सूत्रस्थाने प्रथमेऽध्याये वैशेषिकदर्शनोक्ता. द्रव्यादिषट्पदार्था, विमानस्थानेऽष्टमाध्याये च वादजल्पवितण्डादिन्यायपदार्थाः अनुमानस्य पञ्चावयवाश्चोल्लिखिता।[2]

याज्ञवल्क्यस्मृतौ चतुर्दशविद्यासु न्यायविद्यापि स्वीकृत —

> पुराणो न्यायमीमासा धर्मशास्त्राङ्गमिश्रिता।
> वेद स्थानानि विद्यानां धर्मस्य च चतुर्दश॥[3]

मनुस्मृतौ 'न्यायविस्तर' इत्युपस्कृत्य न्यायशास्त्रस्य व्यापकत्वं महत्त्वञ्च प्रदर्शितम्। उत्तरवैदिककाले अनिवार्याध्येयविषयेषु काव्यनाटकतर्कव्याकरणालङ्कारा स्वीकृताः।[4] अष्टाध्याय्याम् 'अध्यायन्यायोद्यावसंहारश्च' 'क्रतूक्थादिसूत्रान्ताट्ठक्' इतिसूत्रद्वयेन उक्थादिगणपठित. न्यायशब्द, तस्माट्ठक् प्रत्यययोगात् नैयायिक पद व्युत्पन्न। अत. पाणिनि. न्यायशास्त्रेणतद्वेत्ताभिश्च नैयायिकै परिचित आसीदिति निश्चीयते। राजशेखरेण काव्यमीमांसायामान्वीक्षिक्या द्वौ भेदौ प्रतिपादितौ प्रथमा पूर्वपक्षान्वीक्षिकी, या बौद्धजैनचार्वाकै प्रतिष्ठिता, द्वितीया च सांख्यन्यायवैशेषिकरूपोत्तरपक्षान्वीक्षिकी।[5] अत्र त्वान्वीक्षिकीति पदेन सम्पूर्णदर्शनशास्त्रः प्रतिपादित। महाभारतस्य वर्ण्यविषयेष्वन्यतमो न्याय इति निम्नमहाभारतीयवचनेन ज्ञायते —

---

१. वात्स्यायनन्या०भाष्य— १-१-१

२ न्यायपरिचय — पृ० ४३

३ याज्ञवल्क्यस्मृति १-३ पृ० ८

४. भारतीयदर्शन भाग — २ (डॉ० राधाकृष्णन्) पृ० २८

५. काव्यमीमांसा — पृ० २

न्यायोशिक्षा चिकित्सा च दानं पाशुपतं तथा ।[1]

महाभारत एवैकस्मिन्नन्यस्मिन् स्थले 'पञ्चावयवयुक्तस्य वाक्यस्य गुणदोषविदि'ति नारदस्य विशेषणमुक्तम् । उक्तवचनेन नारदस्य न्यायवेत्तृत्वं विज्ञापितं पञ्चावयवयुक्तस्यानुमानस्य न्यायस्य प्राणभूतत्वात् । छान्दोग्योपनिषदि (७-१) नारदसनत्कुमारसंवादे वाकोवाक्याभिधानेन न्यायशास्त्र. स्वीकृत । रामायणेऽपि बहुशो एतादृशस्सङ्केतस्थलानि दृश्यन्ते, ये तत्कालपर्यन्तं न्यायदर्शनस्य बीजान्यङ्कुरितानीति प्रतीयते ।

धार्मिकदार्शनिकसम्प्रदायवर्गाणामाविर्भावेन सहैव बौद्धिकी क्रान्तिः स्वाभाविकी अनिवार्या च प्रतीयत । ब्राह्मणधर्मस्थापनं बौद्धजैनधर्मदर्शनोद्भवञ्चास्मिन् क्रान्तौ सहायकत्वेनाधिगते । एवं तर्कशास्त्रं प्रमाणशास्त्रं हेतुविद्या वादविद्या वाकोवाक्यं नीतिशास्त्र' आन्वीक्षिकी चेति संज्ञाभिः प्रसिद्धं न्यायदर्शनम् साकिमनेकशताब्दिभ्यो प्रागाविर्भूतम् । न्यायसूत्ररचनया शास्त्रोऽयं पुष्टिं प्रौढत्वंञ्चावाप इत्यत्र न काचित्संशीति । महर्ष्यक्षपादेन पदार्थान् सम्यग्विवेच्य, तदाध्यात्मिकं पक्षं परमाणुवादस्य धरातले उपस्थाप्य यथायोग्यवैज्ञानिकव्याख्यया दार्शनिकयथार्थवादः प्रतिष्ठितः न्यायसूत्रेषु, याथार्थिकपदार्थवादश्च सुव्यवस्थित ।

न्याय सूत्रकार.

न्यायदर्शनस्य व्यवस्थितविकासशृङ्खलासु न्यायसूत्राणि प्रथमं मन्यन्ते । केन प्रणीतानि न्यायसूत्राणि ? कस्य देशस्य निवासी आसीन्न्यायसूत्रकार. ? कश्च तस्य स्थितिकाल: ? इत्यस्मिन् विषये बहवः विवादास्सञ्जाता । अधिकांशविद्वद्भि अक्षपादो गोतमः न्यायसूत्रकारः मन्यते । एतद्विषयकविप्रतिपत्तीना समाधानाय विषयमिममधिकृत्य विविधेषु पक्षेषु विचार अपेक्षितः । पुराणप्रसिद्धस्य महर्षेर्गोतमस्य स्थानम् मिथिला समया, अक्षपादस्य च स्थानं प्रभासपत्तने (वर्तमानकाठियावाडस्य समीपे) आसीदिति ब्रह्माण्डपुराण उपलब्धै श्लोकै. प्रकाश्यते—

सप्तविंशतितमे प्राप्ते परिवर्ते क्रमागते ।
जातुकर्ण्यो यदा व्यासो भविष्यति तपोधन ॥
तदाहं सम्भविष्यामि सोमशर्मा द्विजोत्तम ।
प्रभासतीर्थमासाद्य योगात्मा लोकविश्रुत. ॥
तत्रापि मम ते पुत्रा भविष्यन्ति तपोधना: ।
अक्षपाद कणादश्च उलूकोवत्स एव च ॥[2]

---

१ महाभारत—१-१-६७

२. तर्कभाषा(भूमिका)—आ० विश्वेश्वर—पृ० २४

उपर्युक्ते श्लोके: अक्षपाद. शिवांशभूतस्य सोमशर्मन्नाम्न ब्राह्मणस्य पुत्रः प्रभासपत्तननिवासिन: जातुकर्णिनश्च समकालीन आसीदिति प्रतीयते। महर्षिगोतमस्य स्थानं मिथिलां मन्वन्तो विद्वास मन्यन्ते यद्दरभङ्गाजनपदादष्ट-विंशतिमीलपरिमाणे उत्तरपूर्वकोर्णे 'गोतमस्थान' नाम्निस्थले एक उन्नतो शिलाखण्ड. वर्तते, नातिदूरे- गोतमकुण्डाख्य. श्वेतस्वादुजलयुक्त. महज्जलाशय: वर्तते। जलाशयादत: क्षीरोदधिनाम लघुसरित्प्रवाहितं, यस्य जलं दुग्धवच्छ्वेतमस्ति। जनश्रुतिरस्ति यदत्र कदाचिद्महर्षिर्गोतम: आश्रम कृत्वा न्यवसत्।

मेधातिथिरपि न्यायसूत्रकारत्वेन प्रसिद्ध:। अक्षपादगोतमाद्भिन्न: मेधातिथिरिति मत्वा डॉ० सुरेन्द्रनाथदासगुप्तमहोदय: मेधातिथि. न्यायवेत्ताचार्य. अक्षपादश्च तच्छूत्रकार इति अन्तरं द्वयो प्रतिपादयति। प्रमाणत्वेन च तेन भासकृतप्रतिमानाटकस्य वचन प्रस्तूयते 'मेधातिथेर्न्यायशास्त्रमि'त्यादि। अर्थोपस्थापने च मेधातिथेरिति पदे षष्ठी न स्वीक्रियतेऽपितु पञ्चमी स्वीक्रियते। 'आख्यातोपयोगे च' इति सूत्रेण मेधातिथेर्न्यायशास्त्रमधीतमित्यर्थ: प्रतिपादित·। एवं मेधातिथि न्यायाचार्य आसीदिति स्वीक्रियते दासमहोदयेन।[१] अक्षपादगोतमविषयकं पौराणिकमतञ्चेत्स्वीक्रियते तर्हि अनुमातुं शक्यते यद्गोतम: प्रभासपत्तने जनिं लब्ध्वा न्यायशास्त्राध्ययनार्थं साधनार्थञ्च मिथिलां स्वनिवासमकारि। डॉ० सतीशचन्द्रविद्याभूषणस्य मतेन न्यायसूत्राणामेक प्रथमोऽध्याय गोतमप्रणीत: अन्येऽध्यायाश्च केनचिदन्येन परवर्तिना न्यायाचार्येण विरचिता। अन्यै विद्वद्भिरत्र स्वीक्रियते यन्न्यायसूत्राणि अंशत गोतमेन विरचितानि अक्षपादेन च पूरितानि। आचार्यविश्वेश्वरेण तर्कभाषाभूमिकायामन्यरीत्या मतमिदं स्पष्टीकृतं यत्प्राचीनन्यायविकासे द्वे युगे परिलक्ष्येते। अध्यात्मप्रधानयुगस्य निर्माता गोतम प्रमाणप्रधानयुगस्य च प्रवर्तकोऽक्षपाद इति प्रतीयते।[२]

विवादयुक्ते विषयेऽस्मिन् वस्त्वन्वेषणोपरान्ते प्राय: विद्वद्भि. न्यायसूत्रे अक्षपादगोतमयो नाम्नी संयुज्येते। महाभारते शान्तिपर्वणि उक्तम्—

मेधातिथिर्महाप्राज्ञो गोतमस्तपसिस्थित.।[३]

इति वचनेन च मेधातिथि गोतमादभिन्न इति प्रमाणीक्रियते। देवीपुराणे 'गोतमान्वयजन्मेति गौतमोऽपि स अक्षपाद' इति वचनेन निश्चेतु

---

१ तर्कभाषाभूमिका—(श्रीनिवासशास्त्री) पृ० १९

२ तर्कभाषा (भूमिका)आ० विश्वेश्वर पृ० २७

३. महाभारत शान्तिपर्व—२६५-४५

शक्यते यदक्षपादः महर्षिर्गौतम एवासीत्स च गोतमाख्ये गोत्रे उत्पन्न इति। कूर्मपुराणे शिवपुराणे लिङ्गपुराणे चोल्लिखितोऽयं गोतम.। स्कन्दपुराणेऽपि अक्षपाद. गोतमश्चैक एव पुरुष इति प्रतिपादितम्। स च इतिहासप्रसिद्धः अहिल्यापतिः इति निम्नश्लोकेन ज्ञायते—

अक्षपादो महायोगी गोतमाख्योऽभवन्मुनिः।
गोदावरी समानेता अहिल्याया पति प्रभु ॥[१]

वेदभाष्यकारेण माधवेन गोतमस्य कृते 'चरणाक्ष' पदः प्रयुक्तः। चरणाक्ष विशेषणोपाधिनामासीत्तस्य। मूले च रुचिकरा जनश्रुति. प्रचलिता। श्रूयते यदेकदा जीवब्रह्मभेदविचारेणासहमतंवेदव्यासं रुष्टो गोतम' प्राह 'यदद्यप्रभृति अह ते मुखं न द्रक्ष्यामि।' तदनन्तरमेव गोतमस्य चरणयोः नेत्रे प्रकटिते। चमत्कारेणानेन मुदित, वेदव्यास तम् अक्षपादोपाधिनालङ्कृतवान्। अन्याप्येका किंवदन्ती श्रूयते, यत्कदाचित्शास्त्रचिन्तने विस्मृतचेत गोतमः पथि गच्छन् कूपे पतित केनापि प्रकारेण निर्गतश्च। भविष्ये एतादृगनवधान न भवेदिति विचार्य स्वयं भगवता तस्य चरणयो. दृष्टिः प्रदत्ता। तत एवायम् अक्षपाद इति नाम्ना प्रसिद्धोऽभूत्। उपर्युक्तमतं पं० दुण्ढिराजशास्त्रिणा न्यायभाष्यभूमिकायां प्रतिपादितम्। किंवदन्तीष्वेतादृशीषु कियद्याथार्थ्यं वर्तते इति वक्तु न शक्यते तथापि अक्षपादः न्यायसूत्रप्रणेतासीदिति सर्वत्र सर्वै. प्रामाणिकत्वेन स्वीक्रियते। वात्स्यायनेनापि भाष्ये निगदितम्—

योऽक्षपादमृषिं न्यायः प्रत्यभात् वदतां वरम्।[२]

अन्यत्र तर्कपाथोधित्वेनस्मृतोऽक्षपाद.—

अद्भुतस्तर्कपाथोधिरगाधो यस्य वर्धक।
अक्षपादोऽतमस्पृष्टस्त्वकलङ्क कलानिधिः।।[३]

एवं विवेचने यदि अक्षपाद. महर्षिर्गौतम गोतमश्च भिन्ना स्वीक्रियन्ते तर्हि गौतम न्यायसूत्राणां द्रष्टा इति प्रतीयते न कर्ता ऋषयो मन्त्र'द्रष्टार' इति वचनात्। इति मन्यन्ते केचित् विद्वांस। अस्या दशाया वक्तु शक्यते यद्गोतमेन प्रत्यक्षीकृतानि सूत्राणि अक्षपादेन व्यवस्थितानि निबद्धानि च। यदि सर्वे अभिधाना एकस्यैव पुरुषस्य कृते प्रयुक्ता तर्हि महर्षिगौतम एव न्यायसूत्रकार', अक्षपादश्च तस्योपाधि.।

१. स्कन्दपुराण माहेश्वर खण्ड — ५५-५
२. न्यायसूत्रवात्स्यायनभाष्य-उपोद्घात
३. सुभाषितरत्नभाण्डागार—पृ० ४२

**अक्षपादगोतमस्य स्थितिकालः**

यथा न्यायसूत्रकारस्यास्तित्वव्यक्तित्वविषयं मतभेदः दृश्यते तथैव तस्य स्थितिकालविषयेऽपि विचारवैभिन्न्यं परिलक्ष्यते। महामहोपाध्यायेन हरप्रसादशास्त्रिणा न्यायसूत्राणा रचनाकाल. बौद्धमहायानशाखाया समसामयिकः स्वीकुर्वता गोतमस्य काल. अतः किञ्चित्पूर्वं भवितव्यमिति मन्यते। डॉ० याकोबिमहोदयस्य विचारोऽस्ति यन्न्यायसूत्रेषु चतुर्थाध्याये बौद्धशून्यवाद. खण्डित। अतः न्यायसूत्राणि नागार्जुनादर्वाचीनानि स्वीकर्तव्यानि। नागार्जुनस्योद्भवकाल. द्वितीयशताब्दि निर्धार्यते अत न्यायसूत्ररचनाकाल. अत न्यायसूत्ररचनाकाल द्वितीयायां तृतीयायां वा शताब्द्या स्वीकार्य। किन्तु मतमेतन्न समीचीन प्रतीयते, यतोहि शून्यवादसिद्धान्तस्तु बौद्धेभ्य प्रागपि प्रख्यातः। बौद्धधर्म दर्शनोद्भवेन महत्त्वपूर्णसिद्धान्तरूपेण पश्चात् प्रतिष्ठित शून्यवादः। आचार्यो बलदेव उपाध्याय. आदिसर्गादेव शून्यवादस्य प्रचलनमासीदिति स्वीकरोति, प्रमाणत्वेन च न्यायमञ्जरी कारस्य जयन्तभट्टस्य वचनमिदं प्रस्तुतीकरोति—आदिसर्गात्प्रभृति वेदवदिमा विद्या प्रवर्तिता।[1] उपनिषद्वाक्येष्वपि एतादृश उल्लेख उपलभ्यते, यत्सर्गादौ न सदासीन्नासदासीदपितु शून्य एवासीत्। अतएव बलदेव उपाध्याय तृतीयशताब्दी न्यायसूत्ररचनाकालं न स्वीकुर्वन् विक्रमपूर्वचतुर्थशताब्दी मन्यते।

केचिद्विद्वासः लङ्कावतारसूत्रैः माध्यमिकसूत्रैश्च न्यायसूत्राणां साम्यमुपस्थाप्य प्रथमशताब्दी न्यायसूत्राणा रचनाकालं स्वीकुर्वन्ति। डॉ० सतीशचन्द्रविद्याभूषणस्य मते गौतमबुद्ध इन्द्रभूतिजैनगोतम अक्षपादगोतमश्च समकालीना आसन् तेषा स्थितिकालश्च विक्रमपूर्वषष्टशताब्दी आसीत्। वाचस्पतिगैरोलामहोदयः १५० ईशवीयं संवत्सरं न्यायसूत्राणां रचनाकाल. इति मन्यते। पाश्चात्यदार्शनिकस्य गोल्डस्टकरमहोदयस्य मतानुसारेण कात्यायन. पतञ्जलिश्च न्यायसूत्रै परिचितावास्ताम् तयोश्च स्थितिकाल सार्कि चतुर्थशताब्दिईशवीयसंवत्सरेभ्य प्राक् निश्चीयते। अतः अक्षपादगोतमस्य काल अत. प्राग् भवितव्यः। प्रमाणत्वेन च पातञ्जलव्याकरण महाभाष्यवचनमिदं प्रस्तूयते—

इतिहासं पुरा न्यायो मीमांसाधर्मशास्त्रवैद्यकमिति एतावान् शब्दस्य प्रयोगविषया।

डॉ० राधाकृष्णन्महोदयेन न्यायपरिशिष्टरूपेण वैशेषिकसूत्राणि स्वीकृत्य वैशेषिकसूत्रेभ्यो प्राङ्न्यासूत्राणि विरचितानि इति मन्यते।

---

१. भारतीयदर्शन-बलदेव उपाध्याय—पृ०१७१

तद्विपरीतञ्च कीथगार्वादयो विद्वांसः वैशेषिकसूत्राणि न्यायात्प्राच्यतराणि मन्यन्ते। जैनदार्शनिकस्यार्यरक्षितस्य कृतावणुयोगद्वारे प्रतिपादितानुमानस्य न्यायसूत्रसम्मतानुमानेन साम्य प्रस्थाप्य केचिद्विचारकाः न्यायसूत्राणि तृतीय-शताब्द्याः कृति मन्यन्ते। ब्रह्मसूत्रेषु वैशेषिकसिद्धान्तानां स्पष्टतः खण्डनं वर्तते, किन्तु न्यायदर्शनस्य नामतः उल्लेख नोपलभ्यते अत ब्रह्मसूत्रेभ्य अर्वाचीनोऽक्षपादगोतम स्वीकर्तव्य इति केषाञ्चिन्मतम्। अपरैश्च ब्रह्म-सूत्रेषु (२-१-११,१३) ईश्वरवाद परमाणुवादश्च उल्लिखिताविति अवधार्य न्यायसूत्राणि प्राच्यतराणि स्वीकृतानि।

सैद्धान्तिकखण्डनमण्डनमात्रं दर्शनानां पौर्वापर्यं न निर्धारयति। तथापि न्यायसूत्रकारस्य स्थितिकालविषये प्राय द्वेऽवधारणेऽतितरां प्रचलिते। प्रथमानुसारेण ईशवीयसंवत्सरस्य द्वितीयतृतीयवाशताब्दि अक्षपादस्य स्थिति-काल· भवितव्य। द्वितीयमतानुसारेण ईशवीय शताब्दिपूर्वं सूत्रकारो बभूव। द्वितीयमतः समीचीनः प्रतीयते। एवं ईशवीयपूर्व चतुर्थ्यां षष्ठ्यां वा शताब्द्या स्थितो न्यायसूत्रकारोऽक्षपादगोतम इति निश्चेतुं शक्यते।

विचारास्तु सदैव व्यावहारिकशास्त्रार्थेषु विचारचर्चासु प्रस्फुरिताः, तेषा व्यवस्थापनञ्च समये-समये मनीषिभि कृतमिति न्यायविषयेऽपि ज्ञात-व्यम्। आवैदिककालादवशीर्णान् सिद्धान्तान् स्वप्रज्ञया मेधया च सङ्कलयितुं कृतभूरिश्रमोऽक्षपादः इत्यत्र न कश्चित्सन्देह। न्यायसूत्राणि विरच्य न्याय-दर्शनाध्ययनस्य नवीना दिशा प्रशस्ता तेन, अत· न्यायशास्त्रप्रवर्तकत्वेन समादृत· महर्षिर्गोतमः दार्शनिकक्रान्तेरग्रदूतः इति उचितमेव।

न्यायसूत्रेषु विवेचिता पदार्था प्रमाणप्रमेय-संशयप्रयोजनदृष्टान्त-सिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनि ग्रहस्थानाना वस्तुत व्यावहारिकजीवनैरपि अप्रतिहतसम्बन्धो वर्तते। प्रत्यक्षानुमानोप-मानशब्दप्रमाणानि सर्वैरपि लोकेऽनुभूयन्ते। आत्मशरीरेन्द्रियार्थं बुद्धिमन-प्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गाश्च द्वादशप्रमेयास्सन्ति। प्रमेयानां तत्त्व-विवेकार्थमन्ये पदार्था सहायका वर्तन्ते। षोडशानामपि पदार्थानामुद्देश-लक्षणपरीक्षारूपा त्रिधाशास्त्रप्रवृत्तिः, तया च पदार्थाना तत्त्वज्ञानं सम्भाव्यम्, तत्त्वज्ञानाच्च निःश्रेयसाधिगमः भवितुमर्हति। निःश्रेयसोऽयमाध्यात्मिक-रूपेण परमपुरुषार्थस्य मोक्षस्यैवापर पर्यायः। लोकजीवने च पदार्थाना यथार्थ-स्वरूपज्ञानरूपं तत्त्वज्ञानं जीवनसाफल्याय शान्तये चानिवार्यमिति निश्चितम्।

निष्कर्षत: लोकजीवनमध्यात्मेन संयोजयितुं न्यायसूत्रकारेण सुष्ठु-प्रयत्नो विहित:। स एव शास्त्र. सफलो भवितुमर्हति, तस्यैवशास्त्रस्य प्रयोजन-सिद्धिर्भवति यस्मिन् सामञ्जस्यं प्रौढत्वं पुष्टिश्च वर्तते। न्यायदर्शनस्य क्षेत्रे वस्तुत अक्षपादेन न्यायसूत्ररचना कृत्वा न केवलमवशीर्णानां पूर्वप्रचलितानां न्यायसिद्धान्तानामुपस्कार. परिष्कारश्च कृत: अपितु न्यायशास्त्रे नवीनां पृष्ठभूमि सज्जीकृत्य स्तुत्यङ्कार्यं कृतम्। इति अलम्।

---

# अभिज्ञानशाकुन्तलस्य नाट्यशास्त्रीयमनुशीलनम्

रामजी उपाध्याय.

अभिज्ञानशाकुन्तले नान्द्या. पश्चात् शुष्कावकृष्टा—रङ्गद्वार, चारी-ध्रुवा-महाचारी-त्रिगतानीतिपूर्वरङ्गाङ्गानि परित्यज्य कविः प्ररोचनामेव विधत्ते—

सूत्रधार —आ परितोषाद् विदुषां न साधु मन्ये प्रयोग-विज्ञानम् ।
बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेत. ॥

नटी—अज्ज, एवं णेदं ।

पूर्वरङ्गाङ्गेभ्यो व्यतिरिच्य कालिदासोऽभिनव किञ्चिद् योजयति नटी-गानमिति—

इसीसि चुंबिआइं भमरे हिं' इत्यादि

अस्य गानस्य महानुपयोगोऽभिनयप्रवणप्रवृत्तिविधानेन प्रक्षकाणा वर्तते । स्वयमेव सूत्रधार. प्रमाणयति—

आर्ये साधुगीतम् । अहो रागलिखित चित्तवृत्तिः, आलिखित इव सर्वतो रङ्ग

भरतानुसारि नाट्य-प्रवर्तनं पश्चाद्वर्तते—

'रङ्गसिद्धौ पुनः कार्यंकाव्यवस्तुनिरूपणम्' इति ना० शा० ५.१३८

रङ्गसिद्धिः रङ्गस्य (प्रेक्षकाणाम्) काव्यरसास्वादाय मनोहरणमेव ।

पश्चादवलगितनामकेन वीथ्यङ्गेन कथामुखं प्रस्तौति—

तवास्मि गीतरागेण हारिणा प्रसभं हृतः ।
एष राजेव दुष्यन्त. सारङ्गेणातिरहसा ।

**मृगया-माहात्म्यम्**

अत्र मृगयामाहात्म्यं वेदनीयम् । यद्यपि महाभारतेऽपि मृगयुर्दुष्यन्त. कण्वाश्रमं गच्छति तथापि कस्यचिन्महापुरुषस्य निरीहजन्तूनां हत्या न शोभते । प्राक्तनाः कवयो मृगयावापान् सम्यगपश्यन् । महाभारते नलपाण्डवकिराता-दीनां, रामायणे वाल्मीकि-दशरथ-रामादीनां मृगया-प्रकरणानि नवनवघटना-क्रमोद्भवाः सन्ति । भासस्य स्वप्नवासवदत्ते प्रतिज्ञायौगन्धरायणे च मृगया-

गुणो विभाव्यते। यत्खलु राज्ञोऽनुरञ्जनं तदेव मृगस्य प्राण नाशकम्। अतएव नोचितमिति कालिदासो निवेदयति—

न खलु न खलु बाणः सन्निपात्योऽयमस्मिन्
मृदुनि मृगशरीरे तूलराशाविवाग्निः।
क्ववत हरिणकानां जीवितं चातिलोलं
क्वचनिशितनिपाता वज्रसारा शरास्ते ॥१.१०॥
तद् साधु कृतसन्धानं प्रतिसंहरसायकम्।
आर्तत्राणाय वः शस्त्र न प्रहर्तुमनागसि ॥१.११

मृगयया भवतु नाम गृहीतश्वापदमरण्यम्। सत्यं नाम 'मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपु' १,५ तथापि हिंसकजन्तूनां हत्या विहाय हरिणहत्या न कुर्यात् राजा। स. पालक. विष्णुगुणोपेत.।

नानुचितं वक्ति सूत.—

मृगानुसारिण साक्षात् पश्यामीव पिनाकिनम् ।१.६

स दुष्यन्ते विष्णुं न पश्यति, अथ च पिनाकिनं पश्यतीत्यलम्।

रंगे रथचर्या

अस्मिन् प्रथमाङ्के तत्र नासीत् रथः, तस्य अश्वाः, न चापि दृश्यमासीत् सारङ्ग।

'ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः' १ ७

केवलं नाट्यधर्मीविधिना सर्वमेतत् प्रयोजनीयं वर्तते।

इदमेवान्तरं भारतीय-योरपीय रङ्गविधाने। योरपीय रङ्गे तु विभावादीना वास्तविकं प्रदर्शनं विज्ञानबलेन मायया, इन्द्रजालेन वा हार्येणवाभिप्रेतं वर्तते। तथा हि—

When the gods appeared in the earlier plays, they had walked on or been drawn across the stage in cars or chariots.

Millet . The Art of the Drama P. 25

Free use was made of effects impossible indoors such as arrival of a character in his chariot.—Oxford Companion to Theatre P 337

Equestrian Drama : A form of English melodrama in which the parts were played by characters on horse back.

Ibid p. 489.

Horses could be introduced everywhere, even into Macbeth.
Ibid P. 130

भारतीय नाट्यशास्त्रानुसारेण तु

भूमौ विसर्पिते पादैर्हस्तैर्मार्गप्रदर्शिभिः.
रथस्थस्यापि कर्तव्या गतिश्चूर्णं पदैरथ ॥१२.८८

समपादं तथा स्थानं कृत्वा रथगतिं व्रजेत् ।
धनुर्गृहीत्वा चैकेन तथा चैकेन कूबरम् ॥१२.८६

सूतश्चास्य भवेदेवं प्रतोदग्रहाकुल । -
वाहनानि विचित्राणि कर्तव्यानि विभागशः ॥१२ ६०

वस्तुत. वने रथवाहनेन मृगया-व्यापार-निदर्शनं कालिदासस्य त्रुटिरेव वने रथधावनं विशेषतः मृगानुधावनमसम्भवमेव । मृगादीनां प्रदर्शनाय प्रतिशीर्षकस्योपयोगोनेपथ्यविधानेनावसितः ।

**बीजम्**

अभिज्ञान शाकुन्तलस्य बीजमिति अर्थप्रकृतिरधोलिखिते श्लोके निहिता—

जन्म यस्य पुरोर्वंशे युक्तरूपमिदं तव ।
पुत्रमेवं गुणोपेतं चक्रवर्तिनमाप्नुहि ॥१.१२॥

'प्राचीन भारते राजानो वर्णाश्रमरक्षका अभवन्' इति नाट्यसन्देशोऽधोलिखिते श्लोके चर्चितः—

रम्यास्तपोधनानां प्रतिहतविघ्ना क्रियाः समवलोक्य ।
ज्ञास्यति कियद् भुजो मे रक्षति मौर्वी-किणाङ्क इति ॥१ १३॥

अन्यत्र—'सखीमुखेन-राजरक्षितव्यानि तपोवनानि नाम' इत्यपि प्रोक्तम् । तपोधनाना वानप्रस्थाना रक्षाभरोराज्ञामेवेतिकालिदासश्चेतयते ।

**शकुन्तलाया अतिथिसत्कार**

शकुन्तला अतिथि सत्काराय नियुक्ता स्वानुपस्थितौ महर्षिकण्वेनेति न शोभनीयम् । कण्वस्तु कुलपतिरासीत् दशसहस्रब्रह्मचारिणां पोषकः तस्याश्रमे वैखानसाः, शार्ङ्गरव, गौतमीति कार्यज्ञा जना न्यवसन् । न खल्वद्यतनीया आचार-व्यवहाराः पुरातनानां विषये निर्धारणीया इति भवतु नाम सन्तोषकारणं केषाञ्चित् । किन्तु नैतद्रोचते मह्यम् ।

कन्यादर्शनम्

नायको दुष्यन्तस्तु राजर्षिरिति पुनः पुन कथितमस्मिन्नाटके। स तपस्विकन्यका नेपथ्ये विलोक्य कथयति—अहो मधुरमासां दर्शनम्। समुत्सुक एव स तासा दर्शनेनात्मानं कृतार्थयति।[१] स तासां रहस्य-वार्ता शृणोति, श्रुत्वा च विगलितधैर्यं सन् कुलपतिमपि अधिक्षिपति—'असाधुदर्शी खलु तत्रभवान् काश्यपः, य इमामाश्रमधर्मे नियुंक्ते।' यदि नाम राजर्षिरेवं प्रवर्तते तर्हि प्रजानां का स्थिति.। वस्तुत. स राजा स्वयमेव असाधुदर्शी प्रतिभाति।[२]

प्रकरणेऽस्मिन्नन्यथा नाट्यकलाविलास समुच्छ्रयते। अत्र गर्भनाटकस्य छाया प्रतिफलति। तद्यथा—रङ्गस्यैकभागे सखीना वार्तालापोऽभिनयश्च प्रचरतः। अपरतश्च रङ्ग एव दुष्यन्तः स्वयमेव तासामभिनयस्य प्रेक्षकः स्वकीयभावोद्रेकं नाटयन्नभिनेतापि भवति। नान्येन विधिना रङ्गे ईदृशः सरसः सरहस्यो भावपूर्णः सात्त्विकाभिनय युक्तः संवाद तस्य सरसा प्रतिक्रिया च प्रेक्षकाणा भागधेयं भवेदिति प्रयोगविदा नाविदितम्। न स्वत एव सखी-संवाद. तावान् प्रेयान्। सतु नायकस्य श्रवणीभूत तस्य प्रतिक्रिया जनयन्नेव सौष्ठवमुत्तमाभिनयत्वं भजते। दुष्यन्तस्य प्रतिक्रियैव नाट्यसार·। गर्भनाटकस्य सैव सारभूता।

अत्रैव कालिदासः प्रेक्षकाणां दिव्यदृष्टिमुदीरयति—

**सरसिजमनुविद्धं शैवलेनापि रम्य**
**मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति।**
**इयमधिक मनोज्ञा वल्कलेनापि तन्वी**
**किमिव हि मधुराणां मण्डन नाकृतीनाम्॥१ १८॥**

अनेन प्रकरणेन स्पष्टं प्रतिभाति यत् नेपथ्याद् रंगपीठागमनद्वारमनावृतं स्यात्। नान्यथा रंगपीठस्थो दुष्यन्तो नेपथ्यस्थाः कन्यकाः पश्येत्।

अनया दिव्यया दृष्ट्या ते शकुन्तलया सह विभावयन्ति—एष वातेरित पल्लवाङ्गुलीभिस्त्वरयतीव मां केसरवृक्षक, अत्रैव त्वयोपगतया लतासनाथ इवायं केसरवृक्षक प्रतिभातीति प्रियंवदोक्तिर्भाविकथासरणिमुद्भेदयति। न तथागतोपि दुष्यन्तो व्यंग्यानुकूलं समर्थयति—

---

१. पादपान्तर्हित एव विस्रब्धं तावदेनां पश्यामि।

२. अन्यत्रापि दुष्यन्त आश्रमकन्याभि. सह मदनचर्चा करोति—'व्यापाररोधि मदनस्य निषेवितव्यमिति' १.२४

'अधरः किसलयरागः कोमल विटपानुकारिणौ बाहू ।
कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम् ॥१.१९

अत्रादृष्टाहृतिः (Irony) विलसति ।

कोऽपराध्यति

अत्रैव कालिदासो मधुकरवृत्तान्तेन संस्कृतकाव्यस्य श्रेष्ठं तत्त्वं कामचारं निदर्शयति—

चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमती
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः ।
करौ व्याधुन्वत्या पिबसि रतिसर्वस्वमधरं
वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती ॥१ २१॥

कामी सर्वत्र स्वतां पश्यतीत्यस्योदाहरणमत्रानुत्तमं विलसति ।

अत्र नायकः स्वयमेव स्वकीयमविनयं प्रकटयति—

क. पौरवे वसुमतीं शासति शासितरि दुर्विनीतानाम् ।
अयमाचरत्यविनयं मुग्धासु तपस्विकन्यासु ॥१.२२॥

तपस्विकन्यासु यदि प्रेमभावनया चञ्चरीकोऽपराध्यति, तर्हि कथं न तथाकरणे दुष्यन्तः सापराधः ।

समुदाचारोपदेशः

गौणोऽपि समुदाचारोपदेश इति काव्योद्देश्यं नाटकेऽस्मिन् संविहितम् । तथा हि दुष्यन्तं प्रति अनसूया-वचने आर्यस्य मधुरालापजनितो विस्रम्भो मां मन्त्रयते—कतम आर्येण राजर्षिवंशोऽलंक्रियते ? कतमो वा विरहपर्युत्सुकजन कृतो देश ? किं निमित्तं वा सुकुमारतरोऽपि तपोवनगमन-परिश्रमस्य आत्मा पदमुपनीतः ।

छायातत्वम्

परिप्रश्नकाले—दुष्यन्त आत्मानं न निवेदयति, परिहारं करोति स्वार्थवशात् । इयमात्मनिगूढता छायातत्त्वं विदधाति । दुष्यन्तो राजापि धर्माधिकारी अस्मीति व्यनक्ति । परिहारेऽत्र वितथभाषणस्य व्यतिकरोऽपि वर्तते—सोऽहमविघ्नक्रियोपलम्भाय पुण्याश्रमदर्शन-प्रसङ्गेन धर्मारण्यमिदमायातः ।

नाट्योत्कर्षः

यत्तु काव्येषु नाटकं रम्यमिति प्रोच्यतेऽभिनयोपेतत्वात् तस्यसमर्थनं

'शकुन्तला शृङ्गारलज्जां रूपयति' इति वाक्येन प्रमाणितम्। रंगपीठेऽभिनय द्वारेण या शृङ्गारलज्जा प्रत्यंगविकारै. भावादिकैः सहृदये प्रभवति सा इतरविधकाव्येषु शब्दमात्रचित्रणेनासमृद्धा पङ्गुरेवेति विदुषां विचारणा। अतएव नाट्योत्कर्षो विजृम्भित¹।

अत्र भावव्यञ्जना शब्दव्यञ्जनां पराभवति।

नाट्यानुकृतिः

अनन्तरं शकुन्तलायाः कृतककोप· प्रस्फुरति। अयं कृतककोपो नाटकीयामनुकृतिं बोधयति। वस्तुत. शृङ्गारप्रवणापि शकुन्तलोपरिष्ठात् कोपं नाटयति। सैव नटानां रीतिः। न तेषा दर्शनीयावस्था वास्तविकी भवति। इयं नाटकीयानुकृतिः वास्तविकानुकृतेर्भिन्नैव समर्थनीया।

ग्राम्यदोषः

कामपरा अभद्रमपि वदन्तीति दुष्यन्तस्याधोवचनेन कालिदासो निदर्शयति—

अद्यापि स्तनवेपथु जनयति श्वास प्रमाणाधिकः।

अत्र स्तनशब्दस्य प्रयोगो ग्राम्यदोषावह.। स्तनादीना वर्णनं सुरुचि विघ्नयति। न खलु प्राचीनकालेऽपि वैदेशिक साहित्ये महाकवीनां नखशिखवर्णनमभिप्रेतं बभूव। भारतेऽधुनापि संस्कृतकवयस्तत्परा प्रवृत्ति न परित्यजन्तीति भृशं दूयते मन.। अन्यासु भारतीय भाषासु स्तनादीना वर्णनं विवर्जित मेव दृश्यते। शृङ्गारस्य सौष्ठवं व्यञ्जनया विलसति न तु ग्राम्य भावानामभिधया वर्णनेन।

आत्मगतम्

आत्मगतस्यास्वाभाविकता तु वारं वारं निर्दिश्यते योरपीयालोचकै.। किं न ते विचारयन्ति यत् भारतीयनाट्यशास्त्रानुसारि प्रवर्तते नाट्यधर्मीतत्त्वं नाट्यस्य प्राणा इव चमत्कारि। आत्मगतस्य चारुतावक्तुर्नायकस्य भाववैषम्यं विशदयति। तथा हि—

शकुन्तला—(आत्मगतम्) गमिष्यामि, यद्यात्मनः प्रभविष्यामि।

(प्रकाशम्) का त्वं विसर्जितव्यस्य रोद्धव्यस्य वा ?

---

१. एकोक्तिः स्वगताद् भिन्नैवेति व्याख्यात दशरूपकतत्त्वदर्शने पृष्ठ ७४.

एकोक्तिः (Soliloquy)

प्रथमाङ्कस्यान्तिमभागे शकुन्तलादीनां कन्यकानां निष्क्रमणानन्तरं रङ्गे एकाकी दुष्यन्तो वर्तते। एकाकी सन् यत्किञ्चित् स वदति तदेकोक्तिः। संस्कृत नाट्यशास्त्र एकोक्तिर्न व्याख्याता,[१] किन्तुसंस्कृतनाटकेषु सा भृशं विलसति।

सा एकोक्तिरत्रेदृशी वर्तते—

राजा—(निश्श्वस्य) हन्त। गताः सर्वाः। अहं पुनः मन्दौत्सुक्योऽस्मि गमनं प्रति। यावदनुयात्रिकान् समेत्य नातिदूरे तपोवनस्य निवेशयेयम्। न खलु शक्नोमि शकुन्तला व्यापारादात्मानं निवर्तयितुं। मम हि—

गच्छति पुरः शरीरं धावति पश्चादसंस्तुतं चेतः।
चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य ॥१.३१

अनयैकोक्त्या प्रकटीभवति यत्—

(१) एकोक्तौ सूच्यं वृत्तं भवेदङ्कभागेऽपि। गमनं प्रति मन्दौत्सुक्योऽस्मीति, अनुयात्रिकाणां निवेशनम्, शकुन्तला-विषयक-वृत्तेरनुबन्धश्च सूचितानि।

(२) अप्रकटनीयापि चैतसिकी विचारधारानयैकोक्त्या प्रकटिता सती रसलहरीं प्रवर्तयति—'गच्छति पुरःशरीरम्' इत्यादिनाश्लोकेन।

(क्रमशः)



# डॉ० वेङ्कटरामराघवस्योपलब्धयः

आशा सरवटे

डॉ० श्री वेंकटरामो राघव. २४-४-१९०८ ख्रीष्टाब्दे तमिलनाडु-प्रदेशान्तर्गततञ्जावूरमण्डलस्य तिरुवारुरपत्तने प्रादुरभूत्। तस्य पिता श्रीवेंकटरामोऽप्पय्य. माता च श्रीमती मीनाक्षीदेवी बभूवतुः।

राघवमहोदयः तिरुवारुरपत्तने प्रारम्भिक-शिक्षां प्राप्तवान्। १९२४ ख्रीष्टाब्दे उच्चतरमाध्यमिकपरीक्षायां प्रथमस्थानं लब्धवान्। मद्रपुरी-प्रसीडेन्सी महाविद्यालयात् इण्टरपरीक्षायां सर्वविषयेषु विशेषयोग्यतया सह प्रथमं स्थानं लब्धवान्। १९२७ ख्रिष्टाब्दे संस्कृतभाषाया, योरोपीयभाषाविज्ञाने च पञ्चस्वर्णपदकैः सह एम० ए० परीक्षामुत्तीर्णवान्। तदा स न्याय-वैशेषिक-सांख्य-योगान् विषयान् सविशेषमधीतवान्।

शिक्षां समाप्य राघव. सरस्वती महल वाचनालयस्य सुपरिण्टण्डेण्ट-पदमलंकृतवान्। १९३१ ख्रीष्टाब्दत. १९३४ यावत् मद्रविश्वविद्यालयस्य शोधच्छात्रवृत्ति प्राप्तवान्। भोजविरचितं 'श्रृंगारप्रकाश' नामकम् साहित्य-शास्त्रग्रन्थमधिकृत्य स. शोधप्रबन्धं निर्माय मद्रपुरीविश्वविद्यालयाद् १९३४ ख्रीष्टाब्दे 'डाक्टर'-विरुदं प्राप्तवान्। तदनन्तरं मद्रपुरीविश्वविद्यालये संस्कृत-विभागे १९३८ तमे वर्षे संस्कृतग्रन्थसूचीपरिष्करणार्थं नियुक्तः। पश्चात् १९४६ ख्रीष्टाब्दत. १९६८ यावत् संस्कृतविभागाध्यक्षपदवीमधिरूढः। प्रतिभाशाली राघवमहोदयोऽनेकानि विरुदानि सम्मानानि च प्राप्तवान्। १९५३ ई० वर्षे मुम्बापुरी-एशियाटिक् सोसाइटीद्वारा 'काणे-सौवर्णपदक स लब्धवान्। मुत्तुस्वामीदीक्षितचरितनाम्नो महाकाव्यस्य निर्माणे प्रदर्शितां कविनैपुणी पुरस्कृत्य श्रीकाञ्चीकामकोटिपीठाधिपतयः श्री जगद्गुरुशंकराचार्या राघवमहोदयं 'कविकोकिल विरुदेनालंचक्रु.। तस्य बहुमुखीप्रतिभा दृष्ट्वा विद्वज्जनाः तस्मै 'सकलकलाकलापम्' बिरुदं वितरितवन्त.। १९६४ ई० वर्षे स साहित्य-अकादम्याः पारितोषिकं सदस्यमहत्तरत्वंनाम गौरवं च तथा संगीतनाटक-अकादम्या. सदस्यमहत्तरत्वं च लब्धवान्। भोजस्य 'श्रृंगार-प्रकाशमधिकृत्य तेन रचितं प्रबन्धं पुरस्कृत्य अकादमी तस्मै पारितोषिकं दत्तवती। १९६७ ई० वर्षे स 'सेंट मार्टिन'-स्वर्णपदकं लब्धवान्। १९६९ ई० वर्षे मद्रपुर्यां संस्कृतभाषापरिषदि विद्वज्जनैः 'कवीन्द्रो नाम पदवी स लब्धवान्। साहित्य अकादमी, संगीतनाटक-अकादमी, ललितकला-

अकादमी चेति तिसृणामपि समितीनां सदस्यत्वेन भारतीयसंस्कृतेः परिपोषणार्थं नितरां दत्तचित्तः स आसीत् । साहित्य-अकादमी-संस्कृतसमितिद्वारा तेन कृतानि विविधानि संस्कृत समृद्धिपराणि कार्याणि परं प्रशंसनीयानि । अखिल-भारतीयप्राच्यपरिषदोऽध्यक्षपदं स पुनः पुनः व्यभूषयत् । राघवः सांस्कृतिक-सम्मेलनेषु व्याख्यानार्थं यूरोपअमेरिका-बल्गेरिया-कैनाडा-मेक्सिको-आस्ट्रेलिया नेपाल जापान मारीशसादीन् देशान् गत्वा तत्रस्थशिक्षणसंस्थानां पुस्तकालयान् च सम्यग् निरीक्ष्य प्रायः २००० हस्तलिखितानां ग्रन्थानां पर्यालोचनं कृतवान् । १९७२ ख्रिष्टाब्दे संस्कृतशिक्षाया अन्तरराष्ट्रियसंघस्याध्यक्षपदं राघवो व्यभूषयत् । तुरिनपेरिसनगरे च १९७५-७७ तमे स प्रथमं द्वितीय-तृतीय विश्वसंस्कृतसम्मेलनानि समचालयत् ।

तस्य सम्बन्धो विविधसाहित्यनाट्यनृत्यसंस्थाभिः सहासीत् । यथा स मद्रासससंस्कृतरङ्गस्य अध्यक्षः, कुप्पुस्वामीशास्त्रिणः अनुसंधानसंस्थाया निर्देशकः मद्रास संगीत-अकादम्याः, संपादकः, ओरियण्टल रिसर्च जर्नलस्य, संस्कृतप्रतिभायाः, मलयमारुतस्य, संस्कृतविमर्शस्य, वार्षिक-संस्कृत रंगस्य च संपादको बभूव । तथैव अड्यारलाइब्रेरीबुलेटिनस्य ब्रह्मविद्यायाः संघसंपादकः । अखिलभारतीयकाशीराजट्रष्टस्य पुराणविभागस्य संपादकश्चासीत् । इंटरनेशनल-यूनियन ऑफ ब्रिटिश-ओरियण्टलिस्ट एडिनबर्ग, अमेरिकन-सोसाइटी—न्यूयार्क, एसोसिएशन फॉर एशियन-स्टडीज वाशिंगटन, अमेरिकन फिलासाफिकल सोसाइटी, फिलाडेलफियादिसंस्थासु भारतस्य प्रति-निधिर्बभूव । डॉ० राघवमहोदयः कविः, संगीतनृत्यनाट्यशास्त्रपारङ्गतश्चासीत् । तस्य जीवनस्याधिको भागो लेखनकार्ये व्यतीतः । तस्य ९०० लेखाः, १०० ग्रन्थाश्च प्रकाशिताः सन्ति ।

१९७९ ख्रीष्टाब्दे चैत्रमासे शुक्लपक्षनवम्यां गुरुवासरे मद्रपुरी संस्कृत-समिते. वाल्मीकि महोत्सवे स्वेष्टदेवस्य श्रीरामस्यौदार्यमधिकृत्य सम्यक् सरसं च व्याख्यानं प्रदाय गृहं प्राप्तः, श्री राघवमहोदय निशायामेव हृदय-रोगेण दिवं गत ।

## काव्य-रचना

१. मुत्तुस्वामीदीक्षितचरित महाकाव्यम् । २. खण्डकाव्यानि—किं प्रियम् कालिदासस्य । श्लिष्टप्रकीर्णकम् ३. संक्रान्तिमहः ४. कालकविः ५. भोः कवेः ६. कविः, ज्ञानी-ऋषिः । ७. नरेन्द्रो विवेकानन्दः ८. किं तान् नवकृति रहस्यरसायनम् ९. कोकिलनिर्वेदः १०. यदि स्यादलम् ११, ब्रह्म-

पञ्चवैवर्तपुराणम् १२ देवबन्दीवरदराज १३ महीपो गनुनीतिचोल १४. महात्मा १५. दम्भ-विभूति १६. वाग्वादिनी सहस्रतन्त्री—संस्कृति १७. गोप हम्पण्ण १८ फाल्गुन १९ विश्वभिक्षुस्तवः २०. कर्मयोगी २१. सर्वधारी २२ प्रतीक्षा २३ अधिदैवतं किञ्चित् चाटु २४. प्रेमैव योगः २५. उषा २६. मध्याह्नः २७ पैशुन्यम् ।

## नाट्यरचना

१ प्रेक्षणकत्रयी २. रासलीला ३. विमुक्ति ४. आषाढस्य प्रथम दिवसे ५. महाश्वेता ६. पुनरुन्मेषम् ७ प्रतापरुद्रविजयम् ८. अनार्कली ९. कामशुद्धि १० लक्ष्मीस्वयंवरम् ।

## स्तोत्र-रचना

१. श्रीमीनाक्षी-सुप्रभातम् ।
२. श्री कामाक्षी मातृकास्तव ।

संस्कृतव्याख्या—

१. आनंदरंग-चम्पू-व्याख्या ।
२ आर्याष्टक-व्याख्या ।
३. स्नुषाविजय-व्याख्या ।

## आंग्लभाषया रचना

1 Bhoja's Shringara prakasha.
2. The Great Integrators
3 Saint Singers of India
4 The Spiritual Heritage of Tyagaraja.
5 The Concept of Culture.
6. An Introduction to Indian Poetics
7. The Universal Law and World unity.

संस्कृतानुवादक्षेत्रेऽपि तस्य योगदानमस्ति । वाल्मीकि-प्रतिभा, नटीपूजा च रवीन्द्रनाथस्य रूपकद्वयं संस्कृतेनानूदितम् ।

नभोवाण्या प्रसारिता विविधमञ्चेष्वभिनीताश्च डा० वे० राघवस्य प्रमुखा नाट्यकृतयो निम्नाङ्किताः सन्ति ।

१ रासलीला २ कामशुद्धिः ३. प्रेक्षणकत्रयी ४. पुनरुन्मेषम् ५. आषा-

ढस्य प्रथम दिवसे ६. महाश्वेता ७. लक्ष्मीस्वयंवरम् ८. विमुक्तिः ९. प्रतापरुद्र-विजयम् १०. अनार्कली।

डा० वे० राघवस्य नाट्यलेखनगतं परमं प्रयोजनं सामान्यजनमनःसु संस्कृतानुरागोत्पादनमेव प्रतीयते। नासौ परम्परागतां नाट्यशास्त्रीयां पद्धतिं सर्वथा परिपालयितुं चेष्टते। न पुनः पाश्चात्त्यविलसितां दृष्टिमेव समुपेक्षते। लोकरुचिमारञ्जनक्रमेण संस्कारयितुं यदेव युक्तं प्रतिभाति तदेव सद्विधमेव चायं स्वकाव्यं करोति।

डा० वे० राघवस्य सर्वाण्यपि रूपकाणि रंगमञ्चे अभिनेयत्वात् सफलीभवन्ति। तस्य लघुप्रेक्षणकानि नभोवाणी प्रसारणेन लोकप्रियतामुपयान्ति। कथावस्तुविधौ तस्य कालिदासभक्तिः, पुराणेतिहासज्ञानं, भारतीयसंस्कृते रात्मभूतं किमपि तत्त्वं च विशेषरूपेण परिलक्ष्यन्ते। हास्यव्यङ्ग्यपरि-पूर्णरचनायामपि तस्य प्रतिभा पर्याप्तं विलसति। प्रतापरुद्रविजयमपरपर्याय विद्यानाथविडम्बनम्' इति रूपकं तस्य पक्वतरं प्रातिभं सामर्थ्यं प्रमाण-यति। आधुनिकीं लोकाभिरुचिं दृष्ट्वैव तेन 'विमुक्तिः' इत्याख्यं प्रहसनं विरचितम्। अस्य प्रहसनस्य प्रस्तावनायां सूत्रधारस्य तस्य मित्रेण सह वार्तालापेन तदियं लोकरुचिः ध्रुवं परिचीयते। तद्यथा······सूत्रधारः—सखे! इत आगम्यताम्। अद्य अभिनिनीषामि किमपि प्रहसनम्। तदस्मदीयान् सुहृदः संमेलयतु भवान्।

सखा—भाव। साधु निर्णीतं भवता। प्रहसन एवाद्यत्वे महान् गोष्ठीषु आदरः। अथ सर्वत्रैव लोके सर्वेष्वेव विषयेषु खण्ड एव रुचिर्जनानाम्। खण्ड-मेकाङ्कः रूपकम्, खण्डा कथा, सर्वं खण्डम् लघु च। सूत्रधारः—ननु काल एवात्र अपराध्यति। विश्वतोऽपि प्रवर्धमाने प्रापञ्चिके वैषयिके कर्मयोगे निरुच्छ्वासावकाशं व्यवसायिनामाधुनिकानां कर्मठानां सर्वथा नास्त्येव अवकाशः महत् काव्यं नाटकं वा विस्रब्धमुपविश्य पठितुं प्रेक्षितुं वा।[1]

तस्य प्रेक्षणकेषु संक्षिप्तिः सरसता च विशेषरूपेण दृश्येते। रूपकेषु यथा कल्पनावैभवपरिपाकः तथैव रचना नैपुण्यमपि परिलक्ष्यते।

'विमुक्तिः' प्रेक्षणकत्रयी अनार्कली प्रतापरुद्रविजयम्, रूपकेषु तस्य मौलिक-प्रतिभाया दर्शनं भवति। कामशुद्धि—महाश्वेता—षाढस्यप्रथमदिवसे—रासलीला—लक्ष्मीस्वयंवरादि प्रेक्षणकेषु यद्यपि कथानकं पुराणमेव, तथापि उत्पाद्यांशेनेतिवृत्तं नितरां मनोहरति। कविरेष कथावस्तुशिल्पविधाने

१. विमुक्तिः—प्र० सं० पृ० सं० १

प्राचीनार्वाचीननाट्यविध्योः सम्मिश्रणं स्वीकरोति। प्राचीननाट्यपरम्परानुसारेण स रूपकेषु प्रस्तावनानान्दी विष्कम्भकप्रवेशकादिकं यथास्थानं प्रयोजयति। आधुनिक नाट्यपरम्परानुसारेण प्रेक्षणकेषु सूत्रधार-नान्दी प्रवेशक-विष्कम्भकादीनां सर्वथाभावो दृश्यते। रासलीलायां, प्रेक्षणकत्रयीषु रूपकेषु भरतवाक्यस्याभाव एव दृश्यते। रासलीलालक्ष्मीस्वयंवर– प्रेक्षणकयो पाश्चात्यनाट्यशिल्पानुसारेण कथावस्तुविधाने लघुदृश्यविधानं तस्य वैशिष्ट्यम्।

तस्य रूपकेषु अधम-नायका अपि संस्कृतभाषया संवदन्ति, न प्राकृतभाषया। विदूषकस्य सर्वथैवाभावो वर्तते। राघवमहोदय सर्वथा नाट्योचिता भाषाशैलीमनुसरति। प्रेक्षणकेषु लघुवाक्यविशिष्टा रोचकसंवादाः प्रेक्षकाणां कौतूहलं वर्धयन्ति। यथा 'कामशुद्धिः प्रेक्षणके रतिमदनयोः वार्तालापे—

मदन—अपि कथं नाम मामेवमुपालभसे, यत्प्रसादाज्जगन्त्यानन्दमनुभवन्ति।

रतिः— "नैष आनन्द, तदाभास एव, यं जगन्त्यद्य त्वद्वशंवदान्यनुभवन्ति। म्रियन्ते च जनास्त्वया पराक्रान्ता., यतो मन्ये, त्वमपि मार इति प्रथसे लोकेषु।'[1] एतादृशैः सरससंवादैः नायकस्य चारित्र्यवैशिष्ट्यं प्रकाशितम्।

डॉ० राघवमहोदयो न केवलं कुशल कवि अपितु शास्त्रीयसंगीतस्य मर्मज्ञोऽपि बभूव। स यथा छन्दःशास्त्रवर्णितविविधवृत्तानां प्रयोगे निष्णातः तथैव काललयस्वरबद्धगीतरचनायामपि पटुतरः। 'प्रतापरुद्रविजये' अनुष्टुप्, आर्या, इंद्रवज्रा, हरिणी, वसन्ततिलका, प्रहर्षिणी, शिखरिणी, वियोगिनी, शालिनी, भुजंगप्रयातम्, मन्दाक्रान्ता, शार्दूलविक्रीडितमित्यादीनि छन्दांसि काव्यसौन्दर्यं वर्धयन्ति।

'रासलीला' इति प्रेक्षणके प्रयुक्ता विविधशास्त्रीयरागनिबद्धाः श्लोका भावमधुरा रसभरिताश्च। रासलीलायां प्रत्येक श्लोक विशिष्ट-रागेण गीयते, राग· तस्य भावस्य द्योतक। गोपीनां कृष्णभक्ति, आशा, निराशा, कोपः, आनन्द., ईर्ष्या-गर्वादयश्च भावना. श्लोकानां रागमाधुर्येण स्वयमेवार्थं प्रकाशयन्ति। यथा—

"निशम्य गीत तद् अनङ्गवर्धनं व्रजस्त्रिय कृष्णगृहीतमानसा।
आजग्मुरन्योन्यमलक्षितोद्यमा. स यत्र कान्तोजवलोलकुण्डला॥"[2]

---

१. कामशुद्धि प्रेक्षणके पृ० सं० ३

२. रासलीला

कामवर्धनीरागबद्धेऽस्मिन् श्लोके गोपीनां कृष्णमिलनस्य उत्कण्ठा प्रगटीभवति। अनार्कलीप्रकरणस्य सर्वेश्लोका: श्रुतिमधुरा: गेयाश्च। यथा—

नादिरा मदिरा नूनं मादिनी मनसो मम।
सत्यमेतावदप्राप्तपाकं त्वं पुण्यमेव मे॥[1]

अस्मिन्नेवप्रकरणे पुंडरीक-विट्ठलः कल्याणी-रागबद्धमिदं पदं गायति—

कलिका मधुकर! कियद्‌—
स्कलिकाकुलितेह ताम्यति तवार्थे।
ललितो वर्णो गन्धः,
फलितोऽस्यावशयितुं न त्वाम्॥

गानानन्तरं अनार्कली लयभावपूर्णं दाक्षिणात्यं नृत्यं प्रदर्शयति।

राघवमहोदयस्य कोमलकान्तपदावली प्रसादगुणेन सुशोभते। प्रताप-रुद्रविजये शचीदेवराजयो रह:सङ्गतयोर्माधुर्यभरभरिता हृदयग्रहणीये पदे-र्ग्रथिता या संभाषा प्रश्नोत्तरे प्रवृत्ता सा प्रसादस्य निर्झरिणी।

"किं ते पौलोमि दुःखं? प्रिय किमिति परं म्लायते कल्पवृक्षः,
माभूदस्माद्विषादः कुवलयसरसीमेहि संभावयावः।
किं वा तत्राह्नि? मुग्धे विकसितसुषमैवाद्य सा चित्रमेतत्
चित्रं किं त्यागिवीरक्षितिपतियशसा प्लाव्यते सर्वलोकः॥[2]

इदं चापरमुदाहरणं प्रसन्नस्य वाचां गुम्फस्य.........

कान्ते फुल्लमुखाम्बुजे! कुसुमितां नीलेक्षणे! सालिकाम्
आलोलायतकुन्तलेऽनिलसमाधूतप्रतानव्रजाम्।
वक्षोभारनते! फलावनमितामालिङ्ग्य मामेह्यमुं
चूताश्लेषवतीं व्रजेव लतिकां शोभां तवाबिभ्रतीम्॥[3]

अत्र सुभगैरर्थवद्भि: कैश्चिद्विशेषणै: शच्या: सालिकाया लतायाश्च यत्साधर्म्यमुपन्यस्तं तदपि साभिप्रायम्। इदं खल्वभिसन्धित्सति महेन्द्रः—प्रिये पुलोमजे! यस्मात् त्वं तैस्तैर्विशेषैः सालिकया साम्यमुपयातासि तस्मात्तद्व-दाचर। स च चूतमाश्लिष्टवती, त्वमपि मामाश्लिष्येति।

---

१. अनार्कली—अ० अं० पृ० सं० ७३
२. प्रतापरुद्रविजयम्—प्र० अं० पृ० सं० ६
३. प्रतापरुद्रविजयम्—प्र० अं० पृ० सं० ६

तस्य रूपकेषु निबद्धालङ्कारेषु रूपकम्, उपमा, उत्प्रेक्षा, व्याजोक्ति, अप्रस्तुतप्रशंसा, निदर्शना, दृष्टान्तादयश्च अर्थालकारा. शब्दार्थरूपस्य काव्यस्य शोभां प्रकर्षयन्ति। कविप्रतिभोत्था उपमोत्प्रेक्षा हृद्याः। यथा—

"सन्ध्यानृत्तप्रणयिपशुपत्युत्तमाङ्गोल्लसन्त्या ।
स्वर्वाहिन्या विघुतपयसां तारकाश्शीकराभा ॥[1]

शीकरा हि वातास्तवारिविन्दवो भवन्ति।

अन्यत्रापि धूलिवर्णनायां किमपि रुचिरमुत्प्रेक्षते कविः—

एताश्चादितकेतुपट्टपटला रुद्धारुणा धूलयः।
सामन्तं द्युपतिं विधातुमुद्यन्त्यूर्ध्वं नृपाग्रेसरा ॥[2]

प्रतापरुद्रविजयरूपके निबद्धानामलङ्काराणां भ्रान्तिमानलङ्कारो मूर्धन्यो नितान्तं रोचकश्च। तमभिप्रायमास्वदन्तां रसज्ञाः। महाश्वेतो भगवान्रुद्रो यावद् द्युलोकमुपक्रामति तावदपूर्वा काश्चिद् धवलिमा विसरति। क्षीरपयोधौ निमग्नमात्मानं मन्यते लोकः। पर्वतेश्वर निश्शेषं प्लवत इति भाति। प्लाव्यते च चित्ररथवनान्त। वृषभध्वजं भगवन्तमासीदन्तमजानन्तो भ्रमन्ति च त्रसन्ति च वृन्दारका.। गीष्पतिरपि इह कैलासो न, शिवोऽपि न, उल्लोलकोलाहलोऽपि नेति किमिदमिति मुह्यति। मातलिश्च भूयो भ्रान्त इत्थमाक्रोशति··· "हन्तासौ दाक्षिणात्य· क्व नु स मुनिवृषो वार्धिपो मृग्यतां भो· इति।[3]

तस्य मौलिकसमर्पकोपमा. काव्यशोभां पुष्णन्ति। यथा दैत्येन्द्रः— "नीले ते वक्षसि मेघ इव बालार्क. प्रद्योततामेष कौस्तुभः।"

विमुक्तिप्रहसने श्लिष्टशब्दार्थयुक्ता व्यञ्जनाप्रधाना शैली सुशोभते। अस्मिन् प्रहसने त्रिवर्णिनी ब्राह्मणं वदति–"अत्यद्भुतपाकविशेषैः त्वामेतावत् प्रीणितवत्या मे सम्यगेवेदं ते कार्तज्ञ्यम्।[4] तदा ब्राह्मण· प्रत्युत्तरति—"सत्यमेव पाकपण्डितासि। अत्र "अत्यद्भुत-पाकविशेषैः, पाकपण्डितासि' इत्युभयत्र न केवलं भार्यायास्तस्या अन्न-शाक-भक्ष्यविशेषाणां पाक, किन्तु पुरुषभोगार्थं प्रवृत्तायाः प्रकृत्याः कर्मविपाकानुसारं तत्तद्भोगार्थकल्पनं चाभिप्रेतम्। विविधाभाणकाः, सुभाषितानि, लोकोक्तयश्च भाषासौदर्यं चारुतरं कुर्वन्ति।

---

१. तत्रैव—प्रस्तावनायां श्लो० सं० २
२ प्रतापरुद्रविजयम्—प्र० अं० पृ० सं० ४
३. तत्रैव—च० अं० पृ० सं० २६
४. विमुक्ति.—द्वि० अं० पृ० सं० १५२

'विमुक्तिः' प्रहसने द्रमिडदेशस्याभाणकाः विशेषरूपेण परिलक्ष्यन्ते। यथा ब्राह्मण. कोपेन उलूकाक्षं वदति—धिक्, विटभुजङ्ग ! पटोलपुष्पं ते नयनं भवतु इति।[१] 'कृमिगृहं भवेद् वदनम्'[२] इति द्रमिड-प्रसिद्धा असमीचीनभाषणं प्रति निन्दोक्तिः। 'किमुदरे वृकं निबद्धवानसि'[३] इति तीव्र-बुभुक्षार्था लोकोक्तिः।

स प्रसंगोचितं एतादृशं पदं रचयति यत् सुभाषितवद् सर्वथा प्रयुक्तम्। यथा 'विद्यानाथ विडम्बने' परिपार्श्विकः सूत्रधारं पृच्छति—

साधु। ही ! ही ! को वायं प्रणेता ? किन्नामायं प्रबन्धः ? तदा सूत्रधारः उपहस्य वदति—मुग्ध ! किन्नामादिग्रहणेन ?

पुरुषविशेषज्ञानात् पामरसमजेन कीर्त्यते श्लाघा।
रसिकसमाजस्य परं श्लाघाया उज्ज्वलो गुणो हेतुः॥[४]

रूपकभेदानुसारेण राघवमहोदयो विविधरसान् व्यनक्ति। 'अनार्कली' प्रकरणे शृंगाररसनिर्माणे स औचित्यं दर्शयति। अस्य प्रकरणस्य चतुर्थाङ्के संभोगशृङ्गारस्य रमणीयचित्रणं दृश्यते। सलीम अनार्कल्या सौन्दर्येणाकृष्टः तया सहानुरागभावेन बद्धस्तस्या. सौदर्यं प्रशंसति—

"आताम्रकोमलकपोलयुगं प्रफुल्ल—
नेत्रं स्फुरद्रदपुटोल्लसदुत्स्मितश्रि।
कान्ते ! कथं तव मुखाम्बुजमेतदद्य
सद्यो जगाम भयविह्वलपाण्डिमानम्॥ इति।[५]

'विमुक्तिः' नामके प्रहसने हास्यरसे करुणाद्भुतरसयोः सम्मिश्रणं वर्तते। नान्दीश्लोके कविः सूत्रधारमुखेन कथयति—

"अस्मान् वीक्ष्य जगन्महाप्रहसने सञ्चेष्टितो नायकान्।
जीवन्मुक्तमुखाम्बुजे विजयते हासो दयाप्यद्भुतम्॥[६]

राघवमहोदयः 'विमुक्तिरिति नामके प्रहसने आत्मनाथस्य पञ्चपुत्राणां

---

१. विमुक्तिः—प्र० अं० पृ० सं० १२८
२. ,, —,, ,, पृ० सं० १३०
३ ,, —,, ,, पृ० सं० १३६
४. प्रतापरुद्रविजयम्—प्रस्तावनायां पृ० सं० २
५. अनार्कली—च० अं० पृ० सं ५१
६. विमुक्ति प्रस्तावनायां—पृ० सं० १२७

नामकरणे नामौचित्यं दर्शयति। चलप्रोथ, शुण्डालः, दीर्घश्रवा, कण्डूलम् उलूकाक्षश्च पञ्चेन्द्रियाणां प्रतिनिधीभूता धूर्तपुत्रा। एतेषां वार्तालापेन हास्यरसः प्रस्फुरति। यथा—

ब्राह्मण—धिक् त्वाम्, संवृणु वक्त्रम्। कुत्र तावत् गतं त्वया? किं न श्रुता मदीया आहूतिः? इयत्या बृहत्या नासयैव स्वीकृतसर्ववदनाभोगस्य ते सत्यं नास्त्येव श्रोत्रावकाश।

शुण्डाल.—न, न तात! किमेकस्मिन्नेव कुटुम्बे एतावच्छोत्रव्ययं कर्तुं पर्याप्तसामग्रीको विधाता? मदीये सहजे 'दीर्घश्रवसि अतिपक्षपातिनि ब्रह्मणि किमहं करवाणि?[1]

ब्राह्मणस्य स्वभार्यया सह निम्नांकित. संवादोऽपि हास्यरसयुक्त। यथा—

शिव०—एहि जात, तिष्ठतु एष ते पिता नित्यैकादशीदीक्षः। (इति गन्तुमारभते)

ब्रा०—अम्बिके। सत्यं नाद्य मम एकादशी। किं स्त्रीभिरेव गणितं वः पञ्चाङ्गम्। देव्य! यथेच्छं यावत्तृप्ति पृष्ठे ताडयत, मा, मा उदरे।[2]

'प्रतापरुद्रविजयम्' इति रूपके हास्यरस प्रमुखरूपेण शोभते। यदा प्रतापरुद्रो दिग्विजयार्थं प्रतिष्ठते तदा तस्य सेनाया पांसुभिः पीडित इन्द्रो वदति ·· "एतावत्कालमेकपद एव सर्वास्वपि दिक्षु लसन्ती स्वर्वारवामेक्षणा अनुभूय सहस्रलोचनदानाय महर्षि प्रतिपदं वन्दमानोऽभवम्। हा धिक्। कुटिलाशयान् मुनीन्। अद्य पश्यामि गौतमस्य दृष्टिकौटिल्यम्। अन्तःप्रविष्ट-रेणूनि अक्षीणि मे घुरघुरायन्ते।[3]

राघवमहोदयस्य रूपकेषु प्रेमभावनाया उदात्तस्वरूपं दृश्यते। 'अनार्कली' ति प्रकरणे सलीम. कथयति—

यदेव प्राप्यते कृच्छ्रात्तदेव परमं सुखम्।
वियोगविघ्नकष्टानि विना, पुष्टी रसस्य का॥[4]

'कामशुद्धि' नामकं प्रेक्षणके परमेश्वरो रतिं वदति—"असंस्कृतकाम·

---

१. विमुक्ति. प्र० अं० पृ० सं० १२९
२. ,, प्र० अं० पृ० सं० १३६
३. प्रतापरुद्रविजयम्—द्वि० अं० पृ० सं० ८
४. अनार्कली—प० अ० पृ० स० ६३

सृष्टेर्बीजम्। पुमर्थान्तराणामङ्गम्, शुद्धः पुनरनङ्ग,, अङ्गी स्वयं परमः पुरुषार्थः। ज्ञानाग्निपरिपूतो स शुद्धकामः मोक्षस्य हेतुः।[१]

तपो भारतीयसंस्कृतेः मूलमन्त्रः। राघवस्य कामशुद्धिनामके प्रेक्षणके परमेश्वरो रति तपोमहिमानं वर्णयति,—यथा परमेश्वर.—वर्तस्व वत्से। तपो हि धारयति पृथिवी, तपो हि लक्ष्मीः, तपोः हि आनन्दः।[२] तस्य रूपकेषु धर्मार्थकाममोक्षाणां परमं प्रयोजनं परिलक्ष्यते। 'अनार्कली' नामस्य प्रकरणस्य प्रमुखप्रयोजनं क्रवे राष्ट्रियैक्यभावना-प्रतिष्ठापनमिति। अस्मिन् प्रकरणे सूत्रधारः कथयति—

सूत्र०—योऽद्य भारतेऽन्यत्र लोके च अतीव अपेक्षितः समन्वययोगः नानामतानां नानाजनसमुदायानां च मिथ. सामरस्यरूपः, स एव एतद्रूपक- आघोष्यते। अत्र न केवलं अकबर-महाराजेन 'दीन-इलाहि' सभाया ..वं त। सामरस्यं मार्गितं, एवं साहित्ये संस्कृतपारसीकसमन्वयः यथा च संगीत नाट्ये च उत्तर-दाक्षिणात्य-सप्रदाययोस्समन्वयः, राजकुमारस्य परिचारिण्या विवाहेन उच्चनीचसमन्वयश्चेति सर्वतो-मुखं किमपि रूपकेऽस्मिन् सामरस्यमासूत्रितम्।[३]

'पुनरुन्मेषः' इति प्रेक्षणके नष्टप्रायभारतीय साहित्यं तथैव विस्मृति-गर्तपतिता शिल्पसंगीत—नृत्यकलाश्चेति तेषां पुनर्जीवनाय प्रशसनीयः प्रयासः परिलक्ष्यते।

---

१. कामशुद्धिः प्रेक्षणके पृ० सं० ८

२. कामशुद्धिः पृ० सं० ८

३. अनार्कली—द० अं० पृ० सं० ८६

# भाणेऽभिनयो लास्याङ्गानि च

रामजी उपाध्याय:

वेङ्कटराघवन् शृङ्गारप्रकाशे भाण-विषये निगदंति

Bhāṇa is only a monologue and only narrates or descirbes but never shows action with various actors and hence cannot show the ten kinds of lāsya also [1]

राघवमहोदयस्येदं मतमभारतीयं वितथमिति प्रतिपाद्यमस्माकम्। अस्तिव्यापारो भाणेऽन्यथा कथं नाम तत्र भारतीवृत्तिर्विलसति।[2] व्यापारं विहाय कापि वृत्तिर्न प्रवर्तते। अन्यच्च—भाण-प्रयोगं विशदयन् भरतो ब्रूते—

परवचनमात्मसंस्थं प्रतिवचनैरुत्तरोत्तरग्रथितैः।
आकाशपुरुषकथितैरङ्गविकारैरभिनयैश्चैव ॥
धूर्तविटसम्प्रयोज्य। ना० शा० १८·१०९,११०

अर्थात् भाणाभिनयेऽङ्गविकारा भवन्ति नाम। तेऽङ्गविकारा आङ्गिकाभिनयं समुद्दिशन्ति। ये केचित् नाट्यपुरुषाणां कार्याणि आकाशभाषिते निवेद्यन्ते तान्येव नटेनाङ्गिकाद्यभिनयेन प्रत्यक्षी कार्यन्ते।

नाट्यशास्त्रस्य कारिकाया परवचनमिति—

परसन्धिवचनमङ्गविकारैरभिनयेत्।—परवचनमभिनयेत्।[3]

भाणेऽभिनयात्मकं वाग्वैचित्र्यं सोत्कर्षं कथं सम्भवतीति अधोवृत्तेन प्रमाणितम्—

To bring forty voices in a state of animation giving each a distinct characteristic is an unusual theatrical feat Brian D Barnes the itinerant British actor manages it with remarkable ease and effect. His dramatisation of Dylan Thomas's *Under milk Wood* is a beautifully wrought account of life in a sea-side village peopled with an amazing number of ordinary and old beings.

---

१. Sr ṇgāraprakās'a P 576

२. दशरूपकानुसारेण—

भूयसा भारतीवृत्तिरेकाङ्कं वस्तु कल्पितम्। ३.५१

३. ना० शा० १८ १०९ अधिकृत्य अभिनवभारती।

Barnes has a wide and rich repertoire. Mostly literary gems like The Pickwickians at Manor Farm. The incredible Samuel Pepys (selections from his diary) the Provocative Oscar Wilde, Christmas carols etc.[१]

भाणाभिनये लास्याङ्गानि सन्ति न वेति विचारणायां गणिकादीनां प्रकृतिविशेषाणां कार्याणि समीक्षणीयानि। तद्यथा—

उभयाभिसारिकेतिभाणे वीणा सहचरितं गानं श्रूयते—

निष्फलं यौवनं तस्य रूपं च विभवश्च यः।
यो जनः प्रियसंसक्तो न क्रीडति वसन्तके॥

अपिच—

शशिनमभिसमीक्ष्यनिर्मलं परभृतरम्यरवं निशम्य वा।
अनुनयति न यः प्रियं जनं विफलतर भुवि तस्य जीवितम्॥

इति पदस्योदाहरणं वर्तते।[२]

गेयपदस्योदाहरणं वत्सराजस्य कर्पूरचरितेऽधोविधं वर्तते—

रतिरमणप्रियसुहृदा शशाङ्कसुभगेन निर्वृतिकरेण।
कर्पूरेण वियोगो भगवति रुद्राणि मा भवतु॥ १०

नाटकेऽस्मिन् कर्पूरकः रङ्गपीठे प्रेक्षकाणामनुरञ्जनाय गायति।[३]

भाणेषु नटेन क्वचित् लास्याङ्गानां स्वतोऽपियोजनं भवेदिति वामनभट्टस्य शृङ्गारभूषणनामकेन भाणेन प्रमाणितमस्ति। तथा हि हिण्डोलगानमधोलिखिते पद्ये सूचितम्—

संवाहिकाकरसमीरितरत्नडोला—
पर्यन्तबद्ध मणि किंकिणिकानिनादैः।
सार्कं समुल्लसति पङ्कजलोचनानां
संगीतमङ्कुरितपञ्चशरावलेपम्॥

तद्यथापरेषु प्रत्यक्षतो गौणतोवा शृङ्गारात्मकेषु रूपकेषु लास्याङ्गानां सन्ध्यङ्गान्तरालेषु अवसराः सन्ति तथैव भाणेष्वपि लास्याङ्गानि भवन्ति। तथापि सर्वथा सत्यमिदं वर्तते यत् भाणे लास्याङ्गानां किमपि सर्वातिशायिवैशिष्ट्यं नास्ति।

---

१. Hindustan Times 19-8-79
२. आसनेषूपविष्टैर्यत् तन्त्रीभाण्डोपबृंहितम्।
गायनैर्गीयते शुष्कं तद् गेयपदमुच्यते॥ना० शा० १६.१२१
३. 'इति वीणया बहुविधं गायति' तत्र रङ्गनिर्देशो वर्तते।

# विशाखदत्तस्य अर्थशास्त्रोपजीव्यत्वम्

सनत्कुमारः

चन्द्रगुप्तस्य महामात्यश्चाणक्यो राजनीतेः साङ्गोपाङ्गं विवेचनं स्वकीय अर्थशास्त्रे कृतवान्। ग्रन्थेऽस्मिन् राज्ञा स्वशत्रूणामुन्मूलनं, शत्रुपक्षे भेदसृष्टिः, प्रच्छन्नरूपेण विष-प्रयोगद्वारा शत्रुमारणम्, वैरिभिः मिलित्वा तु साध्यसाधनसम्पादनमित्यादिको बहुविधो राजनीतिप्रपञ्चो वर्णितः, यस्य व्यावहारिकं रूपं मुद्राराक्षसनाटके विलसति।

यथा राक्षसं मलयकेतुतः पृथक्करणार्थमर्थशास्त्रस्य सूत्रमिदं मुद्राराक्षसे सर्वथा चरितार्थं भवति—

"प्रत्यसन्नो वा राजानं सत्री ग्राहयेत्। असौ चासौ च ते महामात्रः शत्रुपुरुषैः सम्भाषते।" अर्थशास्त्रम्—१२.३

नाटकेऽस्मिन् चाणक्यस्य गुप्तचरो भागुरायणो मलयकेतुसमीपं उपस्थाय तं राक्षसतो भेदयितुं प्रयतते।

राक्षसमात्मपक्षपोषकं विधातुमनेके उपाया प्रयुक्ताः। एतद्विषये अर्थशास्त्र इदं सूत्रमुपलभ्यते—

"मित्रं चेन्न सन्धिमिच्छेदभीक्ष्णमुपजयेत्। ततः सत्रिभिरमित्राद्भेदयित्वा मित्रं लभेत।" अर्थशास्त्रम्—८.६

ज्योतिर्विद, लेखस्य, आभरणोपहराणाच्चोपयोगो नाटकेऽस्मिन् विहित यस्य मूलमर्थशास्त्रस्य सूत्रे प्राप्यते—

"कार्तान्तिकव्यञ्जनो वा महामात्रं राजलक्षणसम्पन्नं क्रमाभिनीतं ब्रूयात्। —ममान्तिकाय पत्रलेख्यमाभरणं चेदं परिव्राजिकाहृतमिति।"

अर्थशास्त्रम्—१२.२

राक्षसेन चन्द्रगुप्तं प्रति प्रेषिते कूटपत्रे कौटिल्यशास्त्रस्य पञ्चविधसाम्नां प्रयोगः समुपलभ्यते[१]—

---

१ इदं पत्रं स्वयं चाणक्येनैव लिखितमासीत्। मुद्राराक्षस्य पूर्णा भित्तिः अस्यैव पत्रस्योपरि निर्मिताऽभूत। पत्रस्यास्य सन्दर्भः पञ्चमेऽङ्के समुपलभ्यते।

"गुणसंकीर्तनं सम्बन्धोपाख्यानं परस्परोपकारसन्दर्शनमायति प्रदर्शन मात्मोपनिधानमिति ।"

अर्थशास्त्रम्—२.१०

मुद्राराक्षसे मुद्रायाः सर्वाधिकं महत्त्वं वर्तते। राक्षसस्य मुद्रा लब्ध्वा चाणक्येन स्वकूटोपायस्य भाविकार्यक्रमो निर्धारित.। भागुरायणो मलयकेतो. मुद्राध्यक्षो भूत्वैव जीवसिद्धिनामकक्षपणकेन सिद्धार्थकेन च सम्पर्कं विधाय स्वयोजनानुसारं तौ राक्षसं पृथक्करणाय प्रायुङ्क्त। मुद्राध्यक्षविषये ईदृशं विवेचनं वर्तते—

"मुद्राध्यक्षो मुद्रां माषकेण दद्यात् ।"

अर्थशास्त्रम्—२.३४

वैरोचकविनाशार्थं या योजना मुद्राराक्षसे मिलति तस्या. सूत्रमप्यर्थ-शास्त्रे वर्तते—

"यदि वा कश्चिन्मुख्य सामन्तादीनामन्यतम. कोपं भजेत, तमेहि राजानं त्वां करिष्यामीत्यावाहयित्वा घातयेत् ।

अर्थशास्त्रम्—५.६

नाटकेऽस्मिन् मलयकेतोः सम्बन्धे चाणक्येन॰या नीति· प्रयुक्ता तस्या नीते. सूत्रमिदं अर्थशास्त्रे प्राप्यते—

"सामदानाभ्यां दुर्बलानुपनमयेत्। भेददण्डाभ्यां बलवत.। ········· प्रकाशकूटतूष्णीयुद्धदुर्गलम्भोपायैरमित्रप्रग्रहणमिति दण्डमाचरेत्। ······एव-मुत्साहवतो· दण्डोपकारिण· स्थापयेत्। न च हतस्य द्रव्यपुत्रदारानभिमन्येत।"

अर्थशास्त्रम्—७.१६

चन्द्रगुप्तं घातयितुं राक्षसेन विविधा उपायाः कृताः। केषाञ्चिदुपा-यानां सूत्राणि अर्थशास्त्रे प्राप्यन्ते—

"यन्त्रमोक्षणेन गूढभित्तिं शिलां वा पातयेत्। कवाटमवपातितं वा, भित्तिप्रणिहितमेकदेशबन्ध वा परिघं मोक्षयेत् ।"

अर्थशास्त्रम्—१२.५

भित्तौ वीभत्सकं गुप्तरूपेण स्थापयित्वा तद् द्वारा चन्द्रगुप्तं हन्तुं या योजना राक्षसेन योजिता तस्याः सूत्रं अर्थशास्त्रे वर्तते—

"प्रमत्तं भूमिगृहसुरुङ्गागूढभित्तिप्रविष्टा तीक्ष्णा हन्युः। गूढप्रणिहिता वा रसेन ।"

अर्थशास्त्रम्—

नाटकेऽस्मिन् मलयकेतुं राक्षसात् पृथक्कर्तुं भागुरायणस्य भूमिका महत्त्वपूर्णा विद्यते। तस्य कार्यकलापस्य सूत्रं अर्थशास्त्रे ईदृशं विराजते—

"दुर्गराष्ट्रदण्डमुख्यान् वा कृत्यपक्षहेतुभिरभिविख्याप्य प्रव्राजयेत्। ते युद्धावस्कन्दावरोधव्यसनेषु शत्रुमतिसन्दध्युः। भेदं वास्य स्ववर्गेभ्यः कुर्युः। आभित्यक्तशासनैः प्रतिसमानयेयुः॥

अथैकममात्यं निष्पातयेत्। स परमाश्रित्य गायसर्पापरक्तदूष्यातशक्तिमतः स्तेनाटविकानुभयोपघातकान् वा परस्योपहरेत्। आप्तभावोपगतः प्रवीरपुरुषोपघातमस्योपहरेत्। अन्तपालमाटविकं दण्डचारिणं वा। दृढमसौ चासौ च ते शत्रुणा संधत्त इति। अथ पश्चाभित्यक्तशासनैरेनान् घातयेत्।

अर्थशास्त्रम्—१३·३

स्व-स्वामिनां विजयं स्वविजयमिति मन्यमानौ राक्षसचाणक्यौ स्वपरिपन्थिसेनायां विविधव्यापारसंलग्नान् गुप्तचरान् नियोजयतः। शत्रुपक्षेविविधव्यवसायव्यापृताना चाराणा नियुक्तिविषये अर्थशास्त्रे सूत्रमिदमुपलभ्यते—

"कारु-शिल्प-पाषण्ड-कुशीलव-वैदेहकव्यञ्जनानायुधीयान् वा परदुर्गे प्रणिदध्यात्।"

अर्थशास्त्रम्—१३ ३

तदेवं प्रतिभाति यदर्थशास्त्रस्योपर्युक्तैः सूत्रैः अन्येषां च राजनीतिग्रन्थानां मुद्राराक्षसस्य नाटकीयकथानके नैपुण्येन व्यावहारिक वपुः विनियोजितम्।[१] नाटकेऽस्मिन् चन्द्रगुप्तचाणक्यौ नूनमैतिहासिकौ परमनयो प्रतिपक्षी मलयकेतुराक्षसौ ऐतिहासिकौपुरुषौ वा न वेति निर्धारणं कठिनं प्रतिभाति। मुद्राराक्षसस्य बहव कथांशा विशाखदत्तेन कल्पिता इति प्रतीयते।[२] समका-

१. अधोलिखते पद्ये विशाखदत्तेन राजनीतेः रूपकद्वारा मानवीकरण विधाय प्रस्तुते नाटके तस्या व्यावहारिकतत्त्वानुशीलनव्यञ्जना प्रदर्शिता—

गुणवत्युपायनिलयेस्थितिहेतोः साधिके त्रिवर्गस्य।
मद्भवननीतिविद्ये कार्यादार्ये द्रुतमुपेहि॥ मुद्रा० १।५

२. विण्टरनित्जस्य कथनमस्ति—

According to the commentary on the Daśarūpa 7.29 the story may have been taken from the Bṛhatkathā But in case in the Bṛhatkathā., there was nothing more about Cāṇakya than what we have in the Kathāsaritsāgara, the entire plot probably appears as Viśākhadatta's own creation.

Page 236. History of Indian Literature.

लिकसाहित्येषु चाणक्यचन्द्रगुप्तयोः सम्बन्धे किमपि तथ्यं नोपलभ्यते। विष्णु-पुराणे समुपलब्धेनानेन वचनेन निश्चीयते यत् तत्र वर्णितः कौटिल्य एव चाणक्यनाम्ना मुद्राराक्षसनाटकेऽभिधीयते। विष्णुपुराणे उक्तं भवति—

"तान् (महापद्मपुत्रान्) नन्दान् कौटिल्यो ब्राह्मणस्समुद्धरिष्यति। तेषामभावे मौर्याश्च पृथ्वीं भोक्ष्यन्ति।" ४·२४

उपर्युक्तोद्धरणाना समीक्षया निश्चितं भवति यद् राक्षसचाणक्ययोः संघर्षकथा कविना स्वयं कल्पिता कथावस्तुनश्च विस्तारोऽर्थशास्त्रस्य प्रासंगिक सूत्राणि समाश्रित्य विहित.।

मुद्राराक्षसं मूलतो भेदनीतिप्रधानं नाटकम्। यस्या भेदनीतेः समाश्रयणं विशाखदत्तस्याभीष्टमासीत् पूर्णं स्थानं भजते। तद्यथा - नाटकेऽस्मिन् मुद्राया यादृशः कापटिकः समुपयोगो विहितः स सर्वः अर्थशास्त्रे वर्णितः कूटोपायानां विरला सुगठिता च शृंखला अर्थशास्त्रे न तथा दृश्यते यथा प्रस्तुते नाटके इति दिक्।

---

# रसविषये कुन्तकः

परमानन्द मिश्र

वक्रोक्तिसिद्धान्तप्रवर्तकाचार्यकुन्तको विशिष्टचमत्कारवादी वर्तते। तन्मतेन वैदग्ध्यभङ्गीभणितिरूपवक्रोक्तिरेव काव्यजीवितम्। न चायं व्यञ्जना-शक्तिं साक्षादङ्गीकरोति, अस्यैतादृशी "विचित्रामिधाऽस्ति यस्यांलक्षणा-व्यञ्जनादय शक्तय, समावेशिता भवन्ति। अस्माद्धेतोरत्र शङ्केयं जायते यद्-व्यञ्जनाया अस्वीकारात् व्यग्यरूपार्थस्य रसस्य विषयेऽस्य का धारणा। अथापरा जिज्ञासेयं जायते यत्तन्मतेन "अलङ्कारगुणध्वनिवक्रोक्तिप्रभृति काव्यतत्त्वेषु रसस्य कतम पदम्।

अत्र विचार्यते—मन्येऽहं कुन्तकाचार्यः काव्यस्यात्मा वक्रोक्तिरिति स्वीचकार, परमनेन काव्ये रसस्य प्रतिष्ठा न चाधो गमिता प्रत्युत तस्य सातिशयं महत्त्वं प्रत्यपादि। तथाहि—कुन्तकाचार्यः काव्यप्रयोजनव्याख्या वसरे स्फुटं प्रतिपादयति यत् काव्यतत्त्वमर्मज्ञानां सहृदयानां हृदि धर्मार्थकाम-मोक्षाणामपि फलमतिकारकः काव्यामृतरस आनन्दमुत्पादयति।

चतुर्वर्गफलास्वादमप्यतिक्रम्य तद्विदाम्।
काव्यामृतरसेनान्तश्चमत्कारो वितन्यते ॥

वक्रोक्तिजीवितम् १ ३

अत्र काव्यरसजन्यानन्दः काव्यस्य परमं प्रयोजनमभिप्रेतम्। सुस्पष्ट किलात्र कुन्तकदृष्ट्या काव्ये रसस्य कियन्महत्त्वम्। किञ्च काव्यलक्षणेऽपि रसस्य वैशिष्ट्यं ससूचितं यथा—

"शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि।
बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि ।:

व० जी० १.७

अथ सहृदयहृदयाह्लादरूपो य काव्यानन्द. स खलु नास्ति रसास्वा-दाद्भिन्न., यत कुन्तकमतेन काव्यमर्मज्ञा. सहृदया धा रसादिपर-मार्थज्ञाः स्युः।

आचार्यकुन्तकेन कवि प्रस्थानहेतवः त्रयः काव्यमार्गा· प्रतिपादिता., तेषु सुकुमारमार्गे रसप्रवणता नितरामभीष्टेति प्रतिपादितं वक्रोक्तिजीविते। तथाहि—

"भावस्वभावप्राधान्यन्यक्कृताहार्य कौशलः ।
रसादिपरमार्थमनः संवादसुन्दरः" ॥

व० जी० १.६

अस्योत्तरार्धस्य वृत्तौ तेन स्पष्टीकृतं यदयं सुकुमारमार्गो रसप्रवणतया सहृदयहृदयाह्लादकारी भवति यथा च तत्रैव—"रसाः शृङ्गारादयः तदादिग्रहणेन रत्यादयोऽपि गृह्यन्ते तेषां परमार्थः—परमरहस्यः, तज्जानन्तीति तज्ज्ञाः, तेषां मनस्संवादो हृदयसंवेदनं, स्वानुभवगोचरतया प्रतिभासः तेन सुन्दरः—सुकुमारः—सहृदयहृदयाह्लादकारी वाक्योपनिबद्धः इत्यर्थः" । किञ्च कुन्तकः सर्वेषु वक्रताप्रभेदेषु प्रबन्धवक्रतां सर्वोत्तमा स्वीकृतवान्—

"प्रबन्धेषु कवीन्द्राणां कीर्तिकन्देषु किं पुनः ।"

४.२६ अन्त. श्लोक

एतादृशस्य प्रबन्धस्य विषये कुन्तकः प्रोक्तवान् यत् निरन्तररसप्रवाहिका एव महाकवीनां गिरो जीवन्ति । यथा च—

"निरन्तररसोद्गार—गर्भसन्दर्भनिर्भराः ।
गिरः कवीनां जीवन्ति न कथामात्रमाश्रिताः ॥

१.४ अन्तः श्लोक

रसविषयकमतमिदमानन्दवर्धनस्य रसविषयकं मतमनुहरति यदानन्देन कथितं ध्वन्यालोकस्य प्रथमोद्योते—

"सरस्वती स्वादुतदर्थ वस्तु निस्यन्दमाना महतां कवीनाम्" ॥

इत्यादि ।

कुन्तकस्य मतेन रसः सर्वथा व्यंग्यरूप एव भवति न खलु "उद्भटप्रभृत्यलंकारवादिना यथा स्वशब्देन शृङ्गारादिशब्देन वा वाच्य.।" रसवद्व्याख्या प्रसङ्गे उद्भटाचार्याभिमतं रसवाच्यत्वस्य खण्डनं कृतम् । उद्भटस्तु सुस्पष्टं रसवाच्यत्वं प्रतिपादितवान् । तद्यथा—

रसवद्दर्शितस्पष्टशृङ्गारादिरसोदयम् ।
स्वशब्दस्थायि-सञ्चारि-विभावाभिनयास्पदम् ॥

अं० स० ४.४

कुन्तकाचार्यः कारिकामिमामुद्धृत्य, उद्भटाभिमतं रसवाच्यत्वमपाकृत्य रसस्य व्यंग्यत्वं समर्थितवान् । असौ प्रोक्तवान् यत् ये शृङ्गारादिशब्दाभिधानमात्रैः रसास्वादं प्रतिपादयन्ति ते कथं न घृतापूपादिभोज्यपदार्थानां

नामग्रहणमात्रेण तदास्वादमास्वादयन्ति । यथा वक्रोक्तिजीविते—"यत् स्वशब्दैरभिधीयमाना श्रुतिप्रथमवतरन्तश्चेतनानां चर्वणचमत्कारं कुर्वन्तीत्यनेन न्यायेन घृतापूपप्रभृतय पदार्था· कस्यचिदुपभोगसुखार्थिनस्तैरुदारचरितैरयत्नेनैव तदभिधानमात्रादेव त्रैलोक्यराज्यसम्पत्सौख्यसमृद्धिः प्रतिपाद्यते इति नमस्तेभ्य· ।" अनेन प्रकारेणालङ्कारवादिनामभिमतं रसाभिधेयत्वं निराकृतम् ।

अलङ्कारवादिनस्तावत् काव्ये रसस्थिति. "रसवत्" अलंकाररूपेण स्वीक्रियन्ते, रसस्यान्तर्भावोऽलङ्कारेष्वेव कुर्वन्ति परं "कुन्तकाचार्यं "रसवत्" अलङ्कारो न स्वीकरोति तस्य सयुक्तिकं खण्डनं च करोति—

अलङ्कारो न रसवत् परस्याप्रतिभासनात् ।
स्वरूपादतिरिक्तस्य शब्दार्था सङ्गतेरपि ॥ ३ ११

अयंभावः—नास्ति खलु रसवन्नामकोऽलङ्कार यतस्तत्र रसात् पृथक् कस्यचिद् वस्तुनोऽलङ्काररूपेण प्रतीतिर्न भवति । न चालङ्कारशब्दसहैव प्रयोगेण—शब्दार्थयोः सङ्गति. युज्यते । इत्थं रसस्यालङ्काररूपता कुन्तकस्य नाभिमता, प्रत्युत ध्वनिवादिना यथास्यालङ्कार्यत्वमेवाभीष्टम् । कुन्तकेन "रसवत्" अन्यथैव लक्ष्यते, तद्यथा वक्रोक्तिजीविते प्रतिपादितम्—"रसेन तुल्यं वर्तते, रसेन—शृङ्गारादिना, यथा ब्राह्मणवत्क्षत्रियस्तथैव स रसवदलङ्कार, कस्मात्, रसवत्त्वविधानात् । रसोऽस्यास्तीति रसवत्—काव्ये । तस्य भावस्तत्त्वं, सरसत्वसम्पादनात् तद्विदाह्लादनिर्मितेश्च ।" इत्थं कुन्तकमतेन रसतत्त्वप्राधान्यात् यत्रालङ्कारो रससदृशो भूत्वा सहृदयाह्लादकः तत्र रसवदलङ्कारो भवति । किञ्चायं रसवत् सर्वेषामलङ्काराणां जीवितं तथा काव्यस्याद्वितीयसारोऽस्ति । तथाहि—

"यथा स रसवन्नाम सर्वालङ्कारजीवितम् ।
काव्यैकसारतां याति तथेदानीं विवेच्यते ॥
रसेन वर्तते तुल्यं रसवत्त्वविधानत ।
योऽलङ्कारः स रसवत् तद्विदाह्लादनिर्मितेः ॥

व० जी० ३—उन्मेष

अनेन प्रकारेण कुन्तकेन रसस्य काव्ये सुप्रतिष्ठा कृता । अत्र जिज्ञासा समुदेति यत् वक्रोक्ति काव्यजीवितमिति, काव्यस्य जीवितन्तु वक्रोक्तिरेव

तत् कथं रसवत् रसो वा काव्यसर्वस्वतां याति। अत्रेदमवधेयम्—कुन्तक-दृष्टया काव्यात्मा तु वक्रोक्तिरेव, यतो यत्र नास्ति रसस्तत्रापि वक्रोक्ति-काव्यात्मा भवतु, अतो रसो वक्रोक्तिं नातिशेते। तथापि "काव्यैकसारतां याति" रसेनान्तश्चमत्कारो वितन्यते, गिरः कवीनां जीवन्तीत्यादि कथनेन विज्ञायते यत् कुन्तकमतेन सर्वेषां काव्यतत्त्वानां मध्ये रसस्य सर्वोत्तमं स्थान-मस्ति केवलं वक्रोक्तिं विहाय।

———

## ग्रन्थ-समीक्षणम्

### मन्दाकिनी

श्रीभाष्यम् विजयसारथिः, संस्कृतभारतीप्रकाशनम् वारङ्गलम्। मू० — विंशति रूप्यका, पृ० — ६०, १९८० ।

मन्दाकिनीति गीतिकाव्ये कविना विजयसारथिना मुक्तच्छन्दःसु गङ्गावतरणं वर्णितम्। 'उपोद्घाते'ऽस्य श्री श्रीधरभास्करवर्णेकर सत्यमेव प्ररोचयति।

'अस्मिन् राष्ट्रे सरिन्नाम न केवलं सततं स्रवन्ती जडधारेति गम्यते, अपितु अष्टमूर्तेर्महादेवस्य व्यक्तस्वरूपिणी जलमयी मूर्तिरिति समुपास्यते। ग्राम-समीपगा कुनदिकापि तीर्थीभवति तत्तद्ग्रामवासिनाम्। महाराष्ट्रे हि सर्वत्र ग्रामसमीपस्था लोकमातर. सरितो 'गङ्गा'—शब्देन व्यपदिश्यन्ते। सोऽयंसरिदर्थेन ग्राम्येषु निरूढि गतो 'गङ्गा'—शब्दो नितान्तं पावित्र्यं द्योतयति ग्रामसरितः।'

एतादृश्या मन्दाकिन्या मन्दगामित्वं स्खलनमुखरभूरिस्रोतस्त्वं च कविना मूर्तिमद् विधायात्र चित्रीकृतम्। काव्यमिदं कविना विजयसारथिना कविगोष्ठीषु रसिकसमाजेषु च गायं गायं हृदयङ्गमं सहृदयानामकारि, पश्चाच्चास्य लोकम्पृणत्वं परिलक्ष्य प्रकाश्यतां नीतम्। काव्यमिदं वस्तुत. सङ्गीतोपनिबद्धं गायनायैव परिकल्पितम् आधुनिक संस्कृतसाहित्यं च गीतनिर्भरं विदधाति। प्रवाहस्योत्कटतां गति मान्द्यं वा व्यञ्जयितुं गत्यर्थका धातवः कविना प्रत्येकस्यां गीतौ प्राचुर्येण प्रयुक्ता.। भाषाया वैचित्र्यमत्र चित्रकाव्यचमत्कारं जनयति। तथाहि—

स्यन्दते स्पन्दते स्कुन्दते स्वर्णदी
परिवहस्यावधौ प्रेयसा स्रोतसा
सूदते मोदते ह्लादते स्वर्णदी
परिवहस्याजिरे श्रेयसा पाथसा
योतते जोतते श्न्यते स्वर्णदी
परिवहस्याङ्गणे भूरिणा वारिणा
अंहते मंहते वंहते स्वर्णदी
परिवहप्राङ्गणे महितया धारया ॥

अकति मन्दाकिनी
चकति मन्दाकिनी
तकति मन्दाकिनी
मधुरेण पूरेण ।

संस्कृतभाषायाः शब्दसम्पदं प्रकटयत् काव्यमिदमप्रचलितपदानां धातूनां च प्रयोगेण दुर्लभं वैशिष्ट्यमाविष्करोति । अतश्च श्रीवर्णेकरमतेन—'अपूर्वम्—इत नात्रार्थवादः । सर्वथा अपारे खलु संस्कृतकाव्यसंसारे परमार्थत. किमपि अपूर्वत्वं काव्येऽस्मिन् विद्योतते ।' तथाहि

मल्लीसुमायितान् शिवजटावल्लीषु
विस्फुल्लिङ्गायितान् कालानलार्चिषु
पद्मरागायितान् आशीविषफणासु
मुक्ताफलायितान् नृकपालयुक्तीषु
ओलण्डयति शीकरान् स्वर्णदी
अन्त कपालमुल्लोडयन्ती ॥

× × ×

कङ्केषु पारावतेषु दाक्षाय्येषु
चाषेषु करटेषु कर्करेटुष्वपि
क्रौञ्चेषु चन्द्रकिषु कुररेषु चक्रेषु
हंसेषु तित्तिरिषु लावेषु मद्गुषु
कारण्डव–चकोर–हारीत–कुक्कुभ—
प्लववतकातापिमल्लिकप्रभृतिषु
त्रस्तेषु नभसङ्गमेषु चोड्डीनेषु
सौवधारोकिनीसांराविणादेव ।
अवतरति भूतले मन्दाकिनी ॥

× × ×

नारायणस्येव करुणातरङ्गिणी
क्षोणीतलं पवितुमापतति वेगेन
कम्पते भ्रम्पते कण्डते कन्वते
गल्भते गल्हते कच्छप्रवाहेण

गर्हते पापानि गोपते पुण्यानि
ग्लेपते क्षेत्राणि ग्लेवते तीर्थानि
अकति मन्दाकिनी ।···

× × ×

तेपते रेपते क्षीवते शीभते
निम्नोन्नतेषु नैकेषु प्रदेशेषु
वाडते शाडते दक्षते धुक्षते
कीकसप्रायेषु दुर्गमक्षेत्रेषु
अंहते रंहते वंहते मंहते
निर्जलप्रायेषु निर्जनप्रान्तेषु
जृम्भते क्वचिदपि स्वम्भते कुत्रापि
श्रन्थते कर्हिचिद् ग्रन्थते कुहचापि ।।

—राधावल्लभ

## सौन्दर्य-सप्तशती

लेखक. प्रकाशकश्च—डॉ० प्रेमनारायणो द्विवेदी, सागरम् (म० प्र०), मू०—रूप्यकत्रयम्, पृ० ६० ।

भारतीयभाषासु विद्यमानानां काव्यकृतीनामनुवादाः संस्कृते न बहुशः साम्प्रतिके काले विहिताः । तद्यथा—कवेर्जयशङ्करप्रसादस्य । 'कामायनी'—महाकाव्यं श्रीराकेश-महाभागेन संस्कृतेनानूदित । श्रीमन्मैथिलीशरणगुप्तस्य 'पञ्चवटी'—काव्यमासां पंक्तीनां लेखकेन राधावल्लभेन संस्कृतीकृत्य प्रकाशित । तथैव च रवीन्द्रनाथ शंकरकुरुप-वंकिमचन्द्र प्रभृतयस्तासां तासां भाषाणां प्रथितयशसो महाकवय कथाकाराश्च संस्कृतानुवादैः सभाजिता· ।

सागरवास्तव्यः पण्डितप्रेमनारायणो द्विवेदी चिरात् साहित्यसेवायां संलग्नो हिन्दीभाषायाः काव्यमाधुरी संस्कृतेन प्रकटयन्नास्ते । मौलिकसंस्कृत-काव्यसर्जनया सह सुविपुलं विद्यतेऽनेनानूदितं साहित्यम् । तद्यथा—(१) महाकवेः तुलसीदासस्य वैराग्य सन्दीपनी, (२) तस्यैव कवेर्दोहावली (श्लोकावलीनाम्ना), (३) सम्पूर्णं तुलसीकृतं रामचरितमानसम् (४) सूक्तिरत्नाकरः स्फुटपद्यानि, तथा च (५) रहीम-कवीर-दादूनारायणादीनां—कवीनां बुद्ध-कन्फ्यूशियसादि महात्मनां च विविध-वाक्यामृतानामनुवादा· । विन्ध्याटवी वर्णनपर्यन्तं कादम्बरी अपि अनेन पद्यैः प्रस्तुता ।

तस्य चैतस्य सुकवेः 'सौन्दर्य-सप्तशती'-काव्यं सौन्दर्य-सम्भार-सम्भृतं

विहारीकवेः 'विहारी-सतसई' इत्याख्यस्य 'मृद्वीकामध्यनिर्यन्मसृणरसझरी-माधुरीभाग्यभाजः' काव्यस्यानुवादभूतं सुतरां साहित्यरसिकान् रसयति। सम्पूर्णस्य विहारी-काव्यस्य सप्तशत-पद्येषु कविना रुचिरतया अनुवादोऽत्र प्रस्तुत.। यद्यपि पण्डितप्रवरस्य श्रीपरमानन्दस्यापि 'शृङ्गारसप्तशती'ति नाम्ना विहारीकाव्य-संस्कृतानुवाद उपलब्धचर आस्ते, तथापि श्रीप्रेमनारायणस्य कृतिर्भाषाया लालित्येन सौकुमार्येण सौष्ठेन च विशिष्य मनोहरति। अथ च मौलिककाव्यवन्मनोहारिता अनेकत्र स्फुरति। अतीव सरलसरलाया भाषया-अभिव्यक्तेः प्रौढत्वमाधातुमनुवादक क्षमः। तथाहि—

विशाले नयने त्वस्याः सेवेते कर्णकाननम्।
कामेन मुनिना मन्ये युक्तिर्योगस्य दर्शिता ॥१३॥

× × ×

मयि ब्रुवाणे नहि सा ब्रवीति
स्नेहे कृते कुप्यति दृष्टिपाते।
विलज्जमाना हसतीव मुग्धा
गेहे जने सत्यपि नेत्रवार्ता ॥३२॥

× × ×

वध्वा यथा द्युतिर्देहे यौवनस्य समेधते।
सपत्न्याननमालिन्यं वर्धते च तथा तथा ॥४०॥

× × ×

क्षीणा प्रतिदिनं बाला जायते साति सुन्दरी।
कर्पूरवन्न लुप्ता स्यादिति मे वर्तते भयम् ॥

× × ×

विहस्य तद्दिने दत्तां गुञ्जामालां त्वया हृदि।
प्राणेभ्योऽपि प्रियां मत्वा कर्पूरमिव रक्षति ॥

हरे मुरारे मम नाथ नाथे—
त्युक्त्वा समुत्तिष्ठति सा विपन्ना।
श्रान्तास्म्युपायैश्च पुन. प्रयत्नै—
र्ज्वरस्त्वया वैद्य विमोचनीयः ॥११९॥
मुरारे. रूपलोभेन नेत्राभ्यां वञ्चनेच्छया।

व्यापारेऽहं तु विक्रीता तूर्णी मत्सम्मतिं विना ॥१८५॥

अस्या नवाया दधिमन्थकर्त्र्याः
पश्याद्य ध्यानेन दशां विचित्राम् ।
भाण्डोऽपि तस्या सविवेऽस्ति दध्नो
मथ्नाति मन्थेन जलस्य भाण्डे ॥२४५॥

एवं चायमनुवादो यथा विहारीकवेः शृङ्गाररसच्छटां दर्शयितुं तथैव तदीय-सूक्ति-सौरभमपि संस्कृतेन समाधातुं प्रभवति । तथा च —

नरः कुसङ्गाद् विकृतो न बुद्धिं
प्राप्नोति सत्सङ्गगतोऽपि काञ्चित् ।
धृता हि कर्पूरपुटेष्‌ हिङ्गु—
र्भवेत् सुगन्धिर्न युगैः सहस्रैः ॥२२८॥

समये प्राप्य सौभाग्यं कुरु गर्वं वृथा नहि ।
यासीज्ज्येष्ठे प्रिया छाया माघमासे न रोचते ॥३१३॥

नौकां कृत्वा हरेर्नाम मालां तरणदण्डवत् ।
गृहीत्वा तरितुं शक्यः संसाराब्धिर्न चान्यथा ॥३६१॥

दिनानि दश काक त्वं स्वकीर्तेर्गायनं कुरु ।
यावद्धि श्राद्धपक्षोऽस्ति सम्मानं तावदेव ते ॥४३४॥

अनुवादकस्य कवित्वश्रमः सर्वथा श्लाघ्यः । विहारिकवेर्भावाः संस्कृतद्वारेण समग्रे भारते भावनीयाः ।

—राधावल्लभ ।

## अशस्त्र-संग्राम (हिन्दी)

लेखक पं० सीताराम पाण्डेयः, एम० ए०, प्राप्ति स्थानम्—नर्मदा बुक डीपो, अन्धेरदेव, जबलपुर, पाण्डेय बुक स्टोर्स कटनी (म० प्र०) मूल्यम् रूप्यकत्रयम् १८७८ ई०

गान्धी—विचारधारायामवगाहनेन राष्ट्रवासिनां पावनतां विधातुं श्री सीताराम पाण्डेय-महाभागेन गीतकाव्येऽस्मिन् सफल प्रयासो विहितः । कविना स्वयमेवात्मानमुद्धृत्य गान्धीयुगे सत्याग्रह-प्रवृत्तिषु मनसा वाचा कर्मणा देशोत्थानाय नितरां चेष्टितम् । भारतीय-स्वातन्त्र्य-संग्रामस्य प्रत्यक्ष-द्रष्टा कविर्यथान्वभवत्तथा ऐतिहासिक दृष्ट्या काव्येनामरीकृत्य पाठकान् गान्धी-मार्गेण देशमुज्ज्वलयितुं प्रोत्साहयति । अस्मिन् चारित्रिक ह्रासयुगे कविकीर्तिः प्रकाश रेखां वितरति ।

पाण्डेयस्य सरल-संवादशैली भृशं मनोहरति। यथा,

—शैलेन्द्रः

अरे आ तरु से काटी डार
आज चली तू भी मेरे संग में कारागार।
जन्म-मरण-जीवन उनका ही सफल लीजिये जान।
जननी जन्म-भूमि सेवा में जो होते बलिदान॥

—शैलेन्द्रः

## सुभाषित-सुमनोऽञ्जलिः

लेखिका मिथिलेशकुमारी मिश्रा, वाणी-वाटिका-प्रकाशन, १९८० ई० मूल्यं रूप्यकत्रयम्।

सुभाषितानां माहात्म्यं वैदिककालत एव समीक्षकैः सुगीतम्। अमृत-रसादपि सुभाषितरसः श्रेष्ठतरः सम्मतः। लेखिका संगायने प्राचीनं तत्त्वं नवीनेन सम्यक् मिश्रयति सोत्साहं च प्रतिपादयति—

सेवा सदा विजयते जयते धृतिश्च
सद्भावना विलसते लसते कृतिश्च।
तुष्टिः परञ्च सकलोपरि राजते नु
पुष्टिर्लतेव ललिता सुखमात्रसारा॥

मुद्रणस्याशुद्धयो व्याकरण-स्खलनैः सम्भृताः पुस्तकस्य श्रियम-पहरन्ति।

—शैलेन्द्रः

## श्रीनिवास-शतकम्

लेखकः विट्ठलदेवुनिसुन्दरशर्मा, प्राप्तिस्थानम् लेखकस्य सविधे २-१-४२८ नल्लाकुण्टा हैदराबाद—मूल्यं रूप्यकद्वयम् १९७८ ई०।

गीतकाव्येऽस्मिन् कविः भक्तिपुरस्सरं परिहासपथेन भागवतीं कथां प्रस्तौति। तथाहि—

चक्रादिकायुधवरान् धरसीह लोके
शिष्टैकरक्षणकृते खलु दीनबन्धो
न त्वं प्रयोजयसि तान् समयेऽपि देव
हे श्रीनिवास परिपालय मां विमूढम्॥

सुन्दरशर्मणः कविदृष्टिः सम्यक् प्रशंसार्हा लोकहितार्था च वर्तते।

—शैलेन्द्रः

## काव्य सत्यालोक.

लेखक: डा० ब्रह्मानन्दशर्मा। प्राप्ति स्थानम् डा० ब्रह्मानन्द शर्मा पारसी मन्दिर के पास नसीराबाद रोड, अजमेर। मूल्यम् २० रूप्यकाणि। लघुग्रंन्थेऽस्मिन् लेखकस्तर्कधिया प्राचीन नामाधुनिकाना च काव्यशास्त्रीयम भिमतं सत्य-धर्म-व्यापार-भाव काव्यलक्षणादीन् विषयाननुसृत्य विविनक्ति। तत्र पंचषष्टिकारिकासु काव्यशास्त्रविवादा. सूक्ष्मेक्षिकया विभाविता। शर्मण: प्रतिपादनशैली नितरां मनोहारिणी वर्तते। तथाहि—

त्रिप्रकारं मतं काव्यं, उत्तममध्यमाधमम्।
सत्यं कारणभुत्कर्षे तस्य च जगतिस्थितिः ॥६५॥

कर्मक्षेत्रं जगत्क्षेत्रं कर्मणो योग उत्तमे।
अन्यदलौकिकं क्षेत्रं मध्यमे तस्य योजनम् ॥६६॥

पुस्तकस्य महार्घता तस्य प्रचारे बाधा समुपस्थापयेत।

## तत्त्वशतकम्

लेखकः डा० ब्रह्मानन्द शर्मा मूल्यम् रूप्यकद्वयम्। डा० ब्रह्मानन्द शर्मणोऽपराकृति. 'तत्त्वशतकम्' हिन्दीभाषानुवादेनसहितम् राजते। शतकमिदं प्राचीनपरम्परामनुसरति। अत्र युगपरिवर्तनानुरोधेन कवि नवीनां विचाराचार-सरणि प्रस्तावयति। तथाहि—

लोकोमूल हि सत्यस्य लोके सत्य प्रतिष्ठितम्।
लोकेऽपि यदि सन्देह: सर्वत्र तर्हि संशयः ॥२८॥

मोहपङ्के वयं मग्ना तत्त्व परमगोचरम्।
आवरणे वय लग्ना तत्त्वमत्र प्रकाशते ॥९९॥

पुस्तकेऽस्मिन्राष्ट्रजागरण-सन्देशो विलसति। यदि नाम भारतीया स्वार्थं परित्यज्य लोकहितार्थमेव परमं न मन्यन्ते तर्हि न केवलं भारतस्य विश्वस्यापि विनिपात: सुनिश्चित एव।

— शैलेन्द्र.

## श्रीहर्षप्रणीत नाटिकायें (हिन्दी)

लेखक: अशोक पाराशर: प्रकाशकः अजयकुमार, जयपुर मूल्यम् रू० १२/५०। १९८० ई०

शोधनिबन्धेऽस्मिन् पाराशरो हर्षनाटिकानां समाश्रयेण कविपरिचयं, ग्रन्थपरिचयं, संस्कृतिं, समाजसंरचनां, राजनीतिकस्थितिं च विशदयति।

हर्षस्य कृतित्वमधिकृत्य प्रागेव बहुलिखितं वर्तते। तथापि पाराशरस्य सामंजस्यपरायणा शोधदृष्टिः नवीनं किञ्चित् पाठकेभ्यो वितरति' इत्यत्र नास्ति सन्देह लव.।

शैलेन्द्रः

**Metres of Kalidasa**

Dr. Madhusudana Mishra. Taraprakashana— 4/15 Model Town Delhi 110009 Price Rs 40/—

डॉ० मधुसूदनमिश्रस्येयं कृति भारतीय संस्कृतानुसन्धान विदुषा महदुपकरोति। छन्दसामनुशीलनेन बहुविध ज्ञान-विज्ञान विषयकाणा सूत्रप्रवेशोऽत्राभूतपूर्वमेव निलसति। तद्यथा

Stages in kalidasa's Poetic life, Chronology of Kalidasa's Works and Glimpses into his personal life इति

एतादृशो विषयाः छन्दसां विवेचनेन सुसाधिता सम्यक् प्रतिभान्ति। मिश्र महाभागो विदुषां सभाजनमर्हति।

—शैलेन्द्रः

## शाङ्करदर्शने स्वात्मनिरूपणम्

लेखक. डॉ० सत्यनारायण प्रकाशक· कुसुम प्रकाशनम्, ५०४, राजेन्द्रनगरम् लखनऊ मूल्यम् पंचदशरूप्यकाणि, १९७८ ई० दर्शन-प्रवणे ग्रन्थेऽस्मिन् गुरुमहिमवर्णनम्। मायानिरूपणम्, ब्रह्मणः स्वरूप विचार, ईश्वर-स्वरूप विवेचनम्, जीवस्वरूप-विवेचनम्, तत्त्वमसीति वाक्य विश्लेषणम्, वाक्यबोधे वेदानां परमं प्रामाण्यम्, विद्यायाः स्वरूपम्, आत्मतत्त्वविवेचनम् अद्वैत विचार-प्रकारः, मोक्षस्य स्वरूपम् इत्यादि विषया विवेचिताः। अनेनाद्वैतविचारसरणिः सम्यक् प्रकाशिता रोचते। दर्शन-विषयस्यैका भाषा भवति। सा लेखकेन प्रकरणेऽस्मिन् सम्यगधिकृता।

—शैलेन्द्रः

## संस्कृतपरिषदः प्राप्यपुस्तकानि

●

| ● डॉ० रामजी उपाध्यायेन रचितानि-सम्पादितानि च | | मूल्यम् |
|---|---|---|
| १. | संस्कृत साहित्य का आलोचनात्मक इतिहास (प्रथमो भागः) | रु० १२.०० |
| २. | संस्कृत साहित्य का आलोचनात्मक इतिहास-(द्वि० भाग·) | रु० १०.०० |
| ३. | मध्यकालीन संस्कृत नाटक, पृ० सं० ५२० | रु० २५.०० |
| ४. | आधुनिक संस्कृत नाटक—भागद्वयं, पृ० १३५० | रु० ६०.०० |
| ५. | प्राचीन भारतीय साहित्य की सास्कृतिक भूमिका | रु०२००.०० |
| ६. | Sanskrit & Prakrit Mahakavyas (D Phil. Thesis) | रु० ५०.०० |
| ७. | महाकवि. कालिदास· (संस्कृतम्), पृ० सं० १६० | रु० १०.०० |
| ८ | भारतस्य सांस्कृतिकनिधिः (संस्कृतम्), पृ० सं० ४११ | रु० २५.०० |
| ९. | दशरूपक-तत्त्वदर्शनम् पृ० २०० | रु० २५.०० |
| १०. | आधुनिक-संस्कृत-साहित्यानुशीलनम्, पृ० सं० ३०० | रु० ७.०० |
| ११. | सागरिका—१–१९ खण्डाः वस्त्रपटावृताः | रु०५००.०० |
| १२. | विंशशताब्दिकं संस्कृतनाटकम्, पृ० सं० २२५ | रु० १५.०० |
| १३. | दशरूपकम्—नान्दी-भाषा-टीकासहितं सावलोकम् | रु० १४.०० |
| १४. | मध्यकालिकः संस्कृत नाटक लोकः | रु० २५.०० |
| १५. | नाट्यशास्त्रीय-पारिभाषिक शब्दानुक्रमणिका | रु० १५.०० |
| १६. | नाट्यशास्त्रीय प्रयोग-विज्ञानम् | रु० २५.०० |
| ● डॉ० वनमाला भवालकर-रचितानि | | |
| १. | महाभारत मे नारी—(हिन्दी) शोध प्रबन्धः, पृ० सं० ५२५ | रु० ४०.०० |
| २. | पाददण्डम् रूपकम् (संस्कृतम्) | रु० २.०० |
| ३. | रामवनगमनम् संगीतिका (संस्कृतम्) | रु० १.०० |
| ४. | पार्वतीपरमेश्वरीयम् (संस्कृतम्)—सगीतिका | रु० १.५० |
| ५. | पंचमहाकाव्येषु चन्द्रः (निबन्धः) (संस्कृतम्) | रु० २.०० |
| ● डॉ० राधावल्लभ त्रिपाठी-विरचितानि | | |
| १. | संस्कृत कवियो के व्यक्तित्व का विकास —शोधग्रन्थः | रु० ५० ०० |
| २. | वाल्मीकि विमर्शः | रु० १०.०० |
| ३. | मुकुन्दविलासम् | रु० १५.०० |
| ● अन्यानि | | |
| १. | सिद्धान्तसम्राट्—स० मुरलीधर चतुर्वेदी | रु० १५.०० |
| २. | सुसंहतभारतम्—(नाटकम्) पुल्लेलरामचन्द्रः | रु० ८.०० |
| ३. | साहित्यसन्दर्भा.—डा० रेवा प्रसाद द्विवेदी | रु० ३.०० |
| ४. | रसार्णवसुधाकर·—सिंहभूपाल., सम्पादक-डा० रेवा प्रसाद द्विवेदी | रु० ८.०० |

प्राप्तिस्थानम् : सागरिका समितिः, गौरनगर, सागर (म० प्र०)

# सागरिका



ऊनविंश-वर्षे चतुर्थोऽङ्कः

२०३७ विक्रम-संवत्सरे

प्रकाशकः

सागरिका-समितिः, गौरनगर

सागर (म० प्र०)

# सागरिका

## ऊनविंश-वर्षे चतुर्थोऽङ्कः


सम्पादकाः

डॉ० रामजी उपाध्यायः ( प्रधानः ) डॉ० रेवाप्रसाद द्विवेदी

डॉ० राधावल्लभ त्रिपाठी डॉ० रामगोपाल मिश्रः



व्यवस्था-कार्यालयः

सागरिका-समितिः,

गौरनगर

सागर (म० प्र०)

सम्पादन-कार्यालयः

भारतीय-संस्कृति-संस्थान

नारीबारी

इलाहाबाद

डा० राधावल्लभ त्रिपाठी
अध्यक्षः
सागरिका-समिति
गौरनगर, सागर

देयम्

| | |
|---|---|
| प्रत्यङ्कम् | ४.०० रूप्यकाणि |
| वार्षिकम् | १५ ०० रूप्यकाणि |
| आजीवनग्राहकस्य | २००.०० रूप्यकाणि |
| प्राचीनाः सर्वेऽङ्काः सवस्त्रपुटबन्धाः Cloth Bound Vols. | ५००.०० रूप्यकाणि |
| वर्षे १-५ प्रत्यङ्कम् | ७.०० रूप्यकाणि |
| वर्षे ६-१० ,, | ६.०० रूप्यकाणि |
| वर्षे ११-१५ ,, | ५.० रूप्यकाणि |
| वर्षे १६-१९ ,, | ४.०० रूप्यकाणि |
| अङ्कप्रकाशः | प्रतिवर्षम् आषाढाश्विन-पौष-चैत्र मासेषु [ जून-सितम्बर-दिसम्बर-मार्च |

मुद्रकः
हनुमान मुद्रण यन्त्र
पियरीकलाँ वाराणसी

# विषयानुक्रमणिका

| क्रमाङ्का : | लेखा: लेखकाश्च | पृष्ठाङ्काः |
|---|---|---|
| १—व्यञ्जनाविषये राजशेखर. | डॉ० रेवा प्रसाद. द्विवदी | १ ७ |
| २—काव्ये वाच्चार्थव्यतिरेक | डॉ० राममूर्त्ति त्रिपाठी | ८—१२ |
| ३—राष्ट्रस्य शिक्षानीतौ संस्कृतस्य स्थानम् | डॉ० प्रभुदयाल अग्निहोत्री | १३—२३ |
| ४—वाल्मीकेर्वर्णरचनाप्रकर्षः- | डॉ० श्री अयोध्याप्रसाद. द्विवेदी | २३—३१ |
| ५—सूत्रधार. एको वा द्वावपि वा | ओम्प्रकाशराजपाली | ३२—३४ |
| ६—कालदासीया दायव्यवस्था | कु० सुशीला वत्स शोधछात्रा | ३५—३६ |
| ७—सप्तदशशताब्दिक-संस्कृतमहाकाव्यानि- | श्री रामलखनपाण्डेय: | ३९—४६ |
| ८—आद्यशकराचार्यस्य तर्कगवेषणा | गणेशीलालः सुथार | ४६—५५ |
| ९—भासस्य वार्णिकबिम्बानि | डॉ० अयोध्या प्रसाद द्विवेदी | ५६—६१ |
| १०—दशरूपकावलोकयोः समीक्षा- | रामलखनपाण्डेय: | ६२—७१ |
| ११—ग्रन्थ समीक्षणम् | डॉ० राघावल्लभः, क्षेत्रवासी च | ७२—८० |
| १२—महाराष्ट्र-पतञ्जलिः | पण्डित दीवि श्रीनिवासदीक्षितः | ८१—८५ |
| १३—वैदिक साहित्ये अश्विनौ | डॉ नेति अनन्तरामशास्त्री | ८६—८८ |

# व्यञ्जनाविषये राजशेखरः

डॉ० रेवाप्रसादः द्विवेदी
अध्यक्षः साहित्यविभागस्य
प्राच्यविद्यासंकाये हिन्दू वि० वि० वाराणसी

आलंकारिकमहत्तरस्तत्रभवानानन्दवर्धनाचार्यो विक्रमसंवत्सरस्य दशमे शतके स्वोपज्ञार्थान्तरप्रत्यायनेनौपयिकं व्यापारं शब्दगतातिरिक्त-व्यापारतया प्रख्याप्य व्यञ्जनानाम्ना प्रत्यस्थापयत [1]। किन्तु तमिमं तच्छतकीया एव साहित्यवेधसो नात्यरोचन्त। राजशेखरस्तच्छतकीय एव [2]। स हि ध्वन्यालोककर्तारमानन्दवर्धनं नाम्नोद्धरति. ध्वन्यालोकगतान् विषयांश्च तत्र तत्रोपनिबध्नाति। यथा चैतत् तदधो निर्दिष्टेभ्यः संदर्भेभ्य. स्पष्टम्। तथाहि

१—आनन्दवर्धनो व्युत्पत्त्यपेक्षया प्रतिभा प्रगुणा श्रेयसी च मनुते।

तद्यथा—

अव्युत्पत्तिकृतो दोषः शक्त्या संव्रियते कवेः।
यस्त्वशक्ति कृतस्तस्य स झटित्येव भासते [3] ॥ इति।

तमेतं सन्दर्भ राजशेखर एवं स्मरति—

प्रतिभाव्युत्पत्त्योः प्रतिभा श्रेयसीत्यानन्द. [4]।
सा हि कवेरव्युत्पत्तिकृतं दोषमशेषमाच्छादयति॥

तदाह—

अव्युत्पत्तिकृतो दोष. शक्त्या संव्रियते कवे.।
यस्त्वशक्तिकृतस्तस्य झटित्येवावभासते॥ इति।

---

१—वाचकत्वाश्रयेणैव गुणवृत्तिर्व्यवस्थिता। व्यञ्जकत्वैकमूलस्य ध्वने स्याल्लक्षणं कथम्। ध्व०। १। १८॥

२—राजशेखराश्रयदाता कान्यकुब्जाधीश्व महेन्द्रपालो वि० ९६०-वर्षे राज्यमधिरूढः। आनन्दवर्धनाश्रयदाता कश्मीराधिपः अवन्तिवर्मा च ६४१-वर्षे राज्यादवारुरोह! ततश्च पितामह-पौत्रवदनयोराचार्ययोर्वयोभेदः।

३—ध्वन्यालोके—३।६-वृत्तिः

४—काव्यमीमांसायाः पंचमाध्यायारम्भे।
बड़ौदासंस्करणस्य १६—पृष्ठे।

२—आनन्दवर्धनो ध्वन्यालोकस्य चतुर्थ उद्योते कवीनां बुद्धिसंवादं—

संवादास्तु भवन्त्येव बाहुल्येन सुमेधसाम् ।
नैकरूपतया सर्वे ते मन्तव्या विपश्चिता ॥ ४ । ११ ॥

एवमुदारतया प्रतिष्ठाप्य तद्भेदांश्च—

संवादो ह्यन्यसादृश्यं तत् पुनः प्रतिबिम्बवत् ।
आलेख्याकारवत् तुल्यदेहिवच्च शरीरिणाम् ॥ ४ । १२ ॥

एवमुपस्थाप्य तेषां हेयोपादेयतामेवमुपश्लोकयति—

तत्र पूर्वमनन्यात्मं तुच्छात्मं तदनन्तरम् ।
तृतीयं तु प्रसिद्धात्म नान्यसाम्यं त्यजेत् कविः ॥४॥१३॥
आत्मनोऽन्यस्य सद्भावे पूर्वस्थित्यनुयाय्यपि ।
वस्तु भातितरां तन्व्याः शशिच्छायमिवाननम् ॥४॥१४॥
अक्षरादिरचनेव योज्यते यत्र वस्तुरचना पुरातनी ।
नूतने स्फुरति काव्यवस्तुनि व्यक्तमेव खलु सा न दुष्यति ॥४॥१५॥

अमुमेवसंवादवृत्तान्तं राजशेखरोऽप्येवमुपनिबध्नाति—

अर्थः स एव सर्वो वाक्यान्तरविरचना परं यत्र ।
तदपरमार्थविभेदः काव्यं प्रतिबिम्बकल्पं स्यात् ॥
कियतापि यत्र संस्कारकर्मणा वस्तु भिन्नवद् भाति ।
तत् कथितमर्थचतुरैरालेख्यप्रख्यमिति काव्यम् ॥
विषयस्य यत्र भेदेऽप्यभेदबुद्धिर्नितान्तसादृश्यात् ।
तत् तुल्यदेहितुल्यं काव्यं बध्नन्ति सुधियोऽपि ॥ काव्य मी०
१२ पृ० ६३ ॥

संवादवृतान्त एष संस्कृतकाव्यशास्त्रे ध्वन्यालोकोपक्रमान्त एव वैशद्येन विद्यते वामनेऽस्य सूत्रात्मतामात्रस्यैवोपलम्भात्[१], भामह-दण्डिभ्यामस्पृष्टत्वात्, उद्भटग्रन्थस्य चानुपलम्भाच्च ।

---

१—अर्थो द्विविधः । अयोनिरन्यच्छायायोनिर्वा—वा० का० सू० वृ० ३।२।७

एवमेव आनन्दवर्धनस्तत्र तत्र रचना, मार्गः, अलंकारः इत्येवंविधानन्यानपि काव्यधर्मान् स्मरति। राजशेखरोऽप्येषु सर्वेष्वपि विषयेष्ववधत्ते। तत एव बहुशः रचनाकविः अलंकारकविः, उक्तिकविः, मार्गकविः, शास्त्रार्थकविः[1] इत्यादिषु वचनसन्दर्भेषु तस्य नितरां संरम्भः।

वस्तुतो राजशेखर आनन्दवर्धनस्य निविष्टितमोऽध्येता। आनन्दवर्धनः "शब्दार्थौ सहितौ काव्यम्" इति भामहोक्तिमभ्यन्तरीकृत्य—

अनपेक्षितार्थविशेषाक्षररचनेव बन्धच्छायेति नेदं नेदीयः सहृदयानाम्। एवं हि सति अर्थानपेक्षचतुरमधुर-वचन-रचनायामपि काव्यव्यपदेशः प्रवर्तेत। शब्दार्थयोः साहित्येन काव्यत्वे कथं तथाविधे विषये काव्यव्यवस्थेति चेत् परोपनिबद्धार्थविरचने यथा तत्काव्यत्वव्यवहारः तथा तथाविधानां काव्यसंदर्भाणाम्—इति[2]

यदेव साहित्यतत्त्वं अनवहिततयैव साहित्यशब्दोपन्यासपूर्वमुदगिरत् राजशेखरस्तदेवादाय अलकार-प्रस्थानस्याभिख्यामेवाभिनवामारचयत् साहित्यविद्येति, उज्जगार च प्रथमवारं कृत्स्नेऽपि साहित्येतिहासे—

आन्वीक्षिकी-त्रयी-वार्त्ता दण्डनीतयश्चतस्रो विद्या इति कौटिल्य, पंचमी साहित्यविद्येति यायावरीयः। सा हि चतसृणामपि विद्याना निष्यन्दः। शब्दार्थयोर्यथावत् सहभावेन विद्या साहित्यविद्या[3]।

इत्येव साहित्यविद्यायाः पृथग्विद्यात्वम्।

साहित्यसंतत्त्वगाथायामप्यस्यामानन्दवर्धनः सूत्रमेवासौ व्याचिख्यासति,[4]भोज-कुन्तक-साहित्यमीमांसाकृद्भ्यो विचारमार्गं च प्रदिशति बहुविधम्।

---

१—तत्रैव अ० ब, पृ० १७

२—ध्वन्यालोकचतुर्थोद्योते पृ० ५३७—८

३—काव्य मी० अ० ४, पृ० ४—५

४—आनन्दवर्धनो लिखति— शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते।
वेद्यते स तु काव्यार्थतत्त्वज्ञैरेव केवलम्॥१॥

राजशेखरोऽनुवदति— शब्दार्थशासनविदः कति नो कवन्ते—इत्यादि,
का० मी० अ० १३, पृ० ७८

आनन्दवर्धनमसौ नितान्तमेवाभ्यासयदिति तत्तद्वाक्यघटकीभूत-पदतदभिव्यक्ति प्रकाराभ्यामपि सुगममुन्नेतुं शक्यते[1]। एवं सत्यपि राजशेखरः शब्दवृत्तिविषये आनन्दवर्धनस्यानन्दं न वर्धयति।

यथा चैतत् विशदीभवति तदस्यानुषंगपतितायाः शब्दार्थमीमांसायाः। तत्र-शब्दविषये आचार्य एवं लिखति—

व्याकरणस्मृतिनिर्णीतः शब्दो निरुक्तनिघण्ट्वादिभिर्निर्दिष्टः।[2] इति अर्थविषये तस्य त्रिविधानि दर्शनान्युपलभ्यन्ते। तत्र मीमांसा, बौद्ध-दर्शनं चेति द्वयमेव प्रस्तुतानुरूपम्। तत्र—
मीमांसकीयं मतम्—

शब्दस्य सामान्यमभिधेयम्, विशेषस्त्वर्थः। यथा—

सामान्यवाचि पदमप्यभिधीयमानं[3] प्राप्य जातमभिधेयविशेषनिष्ठम् स्त्री काचिदित्यभिहिते मनसो मनो यत् तामेव वामनयना विशेषीकरोति[4] इति।

बौद्धीयं च मतम्—

विधिशून्यो हि शब्दः, तामेव निषेधमनुवदेत्। यथा—

भवति विदितं शब्दा यत्र विवक्षितशून्यका
स्मरयति यतः कान्ते कान्ता बलात् परिरम्भति।
न न म म मा मा स्प्राक्षीर्निषेधपरं वचो
भवति शिशिरे मानवत्यो नदेव विधायकम्॥[5] इति।

संक्षिपति। अत्रेदं निष्कर्ष्यं यन्मताभ्यामाभ्याम्—

---

१—अस्माकं ग्रन्थः साहित्यसन्दर्भः। तत्रापि साहित्यतत्त्वविमर्शनामा द्वितीयोल्लासः।

२—का० मी० अ० ६

३—सा मीमांसकाभिमतार्थः। सामान्यावच्छादिता विशेषरूप एवासौ प्रतिपद्यते इति मम्मटोपस्थापितोऽन्विताभिधानवादोऽत्र स्पष्टं कृतपदः। अभिहितान्वये सामान्यं जातिः, विशेषश्च व्यक्तिः।

४—का० मी० अ० ८, पृ० ३६

५— ,, ,,

१—अन्विताभिधानम्, २—अभिहितान्वयः, ३—तात्पर्यं चेति वादत्रयं क्रोडीक्रियते । नास्ति चात्र कुत्रापि व्यञ्जनासंस्पर्शः ।

व्यापारः—

व्यापारमधिकृत्य राजशेखरो यदपि ब्रवीति तत इदमेव केवलमायाति यदसावभिधामेव केवलां शब्दव्यापारतयाभ्युपैति । तथाहि—

१—पदानामभिप्सितार्थग्रथनाकरः सन्दर्भो वाक्यम् । स त्रिधाभिधाव्यापारः वैभक्तः, शाक्तः, शक्तिविभक्तिमयश्चेति ।[1]

२—शब्दार्थयोश्चाभिधानाभिधेयव्यापार-प्रगुणतामवबुध्येत[2] । इति ।

३—व्याकरणस्मृतिनिर्णीतः शब्दः, तदभिधेयश्चार्थः[3] । इति ।

४—उक्तिगर्भमभिधानम्, सर्वतो रहस्यान्वेषणं च[4] । इति ।

इति यान्यस्य वचनानि एतेभ्योऽभिधाया एव शब्दवृत्तिता प्रमाणिता भवति, न लक्षणाया नापि च व्यञ्जनायाः ।

**अत्रेदमवधेयम्**—ध्वन्यालोकं प्रातिपद्येनाधीतवानपि राजशेखरो व्यञ्जनां कण्ठरवेण कथं नोल्लिखति, असौ रसमूरीकुरुते, तद्गतं विप्रलम्भनामानं भेदमुल्लिखति, रसनिबन्धे नीरसत्व परिहाणे च ध्यानातिशयं वितरति, किन्तु एतत्सर्वप्राणभूतां व्यञ्जनां न स्मरति । किमत्र कारणम् ?

अर्थविचारे राजशेखरः अर्थयोनिं नवमे, अर्थव्याप्तिं दशमे, अर्थाहरणोपायांश्च त्रयोदशेऽध्याये काव्यमीमांसायां सविस्तरमुपस्थापयति । तत्र अर्थव्याप्तिप्रस्तावे रसं प्रतिगृह्णन्नपि स व्यञ्जना व्यञ्जनाप्रतिपाद्यतां वा अर्थस्य परिहरति । अर्थहरण प्रसंगेऽआलेख्यप्रख्यस्य अष्टौ, अष्टौ च तुल्यदेहितुल्यस्य अर्थस्य भेदानुल्लिखति, सभेदप्रभेदोपन्यासं च तानुपपादयति, किन्तु तत्रापि प्रतीयमानतामर्थस्य नोल्लिखति । अस्ति चानयोर्भेदयोर्व्यञ्जनाया एव साम्राज्यम् आनन्दवर्धनमतेन ।

---

१—का० मी० अ० ६, पृ० २२  ३—का० मी० अ० ९, पृ० ४८

२—का० मी० अ० ६, पृ० २१  ४—का० मी० अ० १०, पृ० ४६

एतेन स्पष्टं यद् राजशेखरो ध्वन्यालोककारस्य व्यञ्जनाख्य शब्द-व्यापारं तं प्रति तथैव विप्रतिपत्तिकषायितो यथा तदव्यवहितोत्तरभावी भोजदेवः यथा च तदव्यवहितपूर्वभावी जयन्तभट्टः। भोजदेवो हि ध्वनि तात्पर्यरूपतां मनुते,[1]। जयन्तभट्टस्तु तस्य नामापि न स्मरति। स हि वैयाकरणमतोपन्यासभूमिकायां स्फोटविचारे स्फोटस्य ध्वनिव्यञ्जकता यद्यपि स्मरति तथापि नास्ति तेन ध्वनिकृतो गोष्ठिसिद्धिः। भिन्न एव हि स ध्वनिर्भिन्नैव च सा व्यञ्जना। नास्ति तस्यानयोरानन्दवर्धनीययोर्ध्वनिव्यञ्जनयोः सम्बन्धः।

सर्वथा व्यञ्जनायाः, तस्याः शब्दगतातिरिक्तव्यापारतायाश्च राजशेखरो ध्वनिकारेण नास्त्येव सवादभाक्। यत एव तद् विषये वाचंयमः, तत एकतरपक्षनिर्णये यद्यपि नह्येव लभामहे विनिगमनां तथापि साधकबाधकप्रमाणोपन्यासमहता क्रियमाणे विचारे तु राजशेखरे साधनप्रमाणसम्पन्नता न वीक्षामहे॥ इति।

---

१—एतदर्थं द्रष्टव्योऽस्माकं "भोजदेवस्य ध्वनिसम्बन्धिनो विचाराः" इति लेखः। साहित्यसन्दर्भ इति ग्रन्थे प्रकाशितः।

# काव्ये वाच्यार्थ–व्यतिरेकः

डॉ० राममूर्ति–त्रिपाठी

व्यवहारे शास्त्रेषु च प्रयुक्तानि पदानि सङ्केतितार्थबोधायैव केवलं कल्प्यन्ते। काव्ये पुनरन्यैव सरणि। तथाहि व्यवहारे प्रयुक्त 'कमल' मिति पदं पदार्थमात्रबोधने विश्रान्तं स्यात्। काव्ये त्विदं प्रयुज्यमानं रक्तदलसंवलितस्य मनोज्ञपुष्पस्य रसिकमानसे चित्रमुपस्थापयति। काव्यस्येयमेव प्रक्रिया अर्वाक्तनैर्बिम्बविधानमित्यभिहिता। तद्यथा—रामचन्द्रशुक्ल आह—'बाह्यकरणाना सर्वेऽपि विषयाः काव्यार्थबोधकाले चित्ते चित्रीकृताः स्युः। तेषां सहृदयान्तःकरणे प्रतिबिम्बितानि दृश्यान्येव बिम्बतयोच्यन्ते।' एतस्य च बिम्बस्य ग्रहणमभिधयैव स्यात्। इत्थं चाभिधाद्विविधं सङ्केतग्रहणविधिं साधयति–सामान्यार्थे, चित्रोपमेऽर्थे बिम्बे वा।

अत्रेदं चिन्त्यम्। 'संस्कृत–काव्यशास्त्रे तावत् जातौ जात्यादिचतुष्टये वा सङ्केतं स्वीकुर्वद्भिराचार्यैरभिधायाः बिम्बोद्बोधसामर्थ्यं न विचारित' मिति प्रत्नानालङ्कारिकान् दूषयन्नाचार्यशुक्लोऽवादीत्। यत्सत्यं मम्मटादिभिरालङ्कारिकैः सङ्केतग्रहविचारे बिम्बविधानं न निरूपितं, किन्तु व्यवहारगत–वाच्यात् काव्यगतवाच्यस्य व्यतिरेकं विचारयद्भिस्तैर्बिम्बार्थः सर्वथोपेक्षित–इति कथनं तु नितरां वितथमेव। काव्यसर्जनायां तद्रसास्वादे च न खलु साधारणेनार्थेन अपितु असाधारणेन, विशेषेण बिम्बात्मकेनैव वार्थेनाभीप्टसिद्धिः स्यादिति नैतादृशोऽर्थः कथमपि प्रत्नानामालङ्कारिकाणामुपेक्षाविषयः स्यात्। एतैराचार्यैर्बिम्बविचारः क्वचित् स्वभावोक्त्यलङ्कारनिरूपणे क्वचिद् भाविकलक्षणे क्वचित् प्रतिभास्वरूपपरामर्शे वा विहितः। प्रतिभाया अपूर्वत्वं बिम्बोद्बोधनक्षमतायामेव पर्यवस्यति।

अथ ध्वनिप्रस्थानपरमाचार्यः आनन्दवर्धनस्तु स्पष्टतयैव काव्यगतवाच्यस्य व्यतिरेकं बिम्बात्मकतायामेव निदर्शयति। तद्यथा—

'वाच्यानां च काव्ये प्रतिभासमानानां यद् रूपं तत् तु ग्राह्यविशेषाभेदेनैव प्रतीयते ।'

( ध्वन्यालोके, पृ० ५४३ )

इति तस्य कथनं नितान्तमेवाभिप्रायगर्भितं विम्बविधानवैशिष्ट्यं च क्रोडीकरोति । व्यवहार-शास्त्रयो. प्रतिभासमानाद् वाच्यात् काव्ये प्रतीतो वाच्योऽर्थो व्यतिरिच्यत इति आनन्देनात्र निगदितम् ।[१] अभिनवश्च स्थलमिदमाटीकमानो लोचने बभाण यत्–सङ्केतो जातौ स्यात्, जातिविशिष्टाया व्यक्तौ वा, आहोस्विद् अपोहे अतद्व्यवृत्तौ वा भवेत्, काव्यगतवाक्यार्थस्य विशेषस्तु न केनापि विप्रतिपद्यते ।[२] अभिनवगुप्तस्य व्याख्या वाक्यार्थमेव विशेषगर्भं प्रतिपादयति, मूलग्रन्थे पुनर्वाच्यार्थ एव विशेषगर्भं उक्तः प्रसङ्ग-परिशीलनेन मूलगतो 'वाच्यार्थ' इति पाठ एव साधीयानिति प्रतीयते । यतो हि महाकवे प्रतिभागुणं प्रतिपादयता ध्वनिकारेणात्र काव्यगतवाच्यार्थ विशेषो निरूपितः शास्त्रे, व्यवहारेऽपि वा त एव वाचका प्रयुज्यन्ते, किन्तु, तत्र तैर्बोधितोऽर्थः सामान्य एव । काव्ये तु महाकवेः प्रतिभा तेभ्य एव वाचकेभ्यो विशेषसंवलितमर्थं प्रत्याययति ।

ननु–इत्थं प्रत्यय नीतोऽर्थः कथं वाच्य एव ? अत्र सङ्केतग्रहणमभिधयैव स्यादन्येन वा व्यापारेण ? अभिधा तु अधिगतार्थस्यैव बोधिका, नानधिगतार्थस्य । काव्ये च 'विशेष-संवलितो वाच्यार्थग्रहः' 'ग्राह्यविशेषो' वा

---

१— अवस्थादेशकालादिविशेषैरपि जायते ।
आनन्त्यमेव वाच्यस्य शुद्धस्यापि स्वभावतः ॥ ( ध्वन्या० ४।७ )

इत्यपि द्रष्टव्यम् । तथा च — 'शुद्धस्यानपेक्षितव्यङ्ग्यस्यापि वाच्यस्यानन्त्यमेव जायते'—इति वृत्तौ ।—सम्पादकः ]

२—पदानां तावत् सामान्ये वा तद्वति वा अपोहे वा यत्र कुत्रापि वस्तुनि समयः किमनेन वादान्तरेण ? वाक्यात् तद्विशेषः प्रतीयत इति कस्यात्र वादिनो विमतिः ? अन्विताभिधानतद्विपर्ययससर्गभेदादि–वाक्यार्थपक्षेषु सर्वत्र विशेषस्याप्रत्याख्येयत्वात् ।

[ ध्वन्यालोकलोचने, पृ० ५४३ ]

अनधिगतार्थयुक्तोऽपि भवितुमर्हति, अनधिगत-विशेषश्च नाभिधाया विषय.। तद्यथा-पण्डितराजोऽपि काव्यगतस्यार्थस्य व्यतिरेकं तद्रमणीयत्वे मन्यमानः प्रतीयमानसम्पर्कविरहिते वाच्येऽर्थे रामणीयक-सस्पर्शलवमपि न सहते—

'न तादृशोऽस्ति कोऽपि वाच्यार्थो यो मनागनामृष्टप्रतीयमान एव स्वतो रमणीयतामाधातु प्रभवति।'

( रसगङ्गाधर-प्रथमानने, पृ० २३ )

तथैव कुन्तकोऽपि काव्यगतवाच्यवाचकयोः शास्त्रव्यवहारापेक्षया व्यतिरेकं प्रतीयमानपरामर्शादेव मनुते—

शब्दो विवक्षितार्थैक-वाचकोऽन्येषु सत्स्वपि।
अर्थः सहृदयाह्लादकारि-स्वस्पन्द—सुन्दरः॥

( वक्रोक्तिजीविते प्रथमोन्मेषे, पृ० १४ ).

तथैव नरेन्द्रप्रभसूरिरप्याह—

सामान्यतः शब्दस्य स्वरूपमुक्त्वा व्यतिरेकोक्तिपूर्वं काव्याङ्गवैचित्र्यमुपदिशति—

किन्त्वेकार्थप्रवृत्तेषु शब्देष्वन्येषु सत्स्वपि।
अभीष्टार्थविधायी यस्तस्य वैचित्र्यचारुता॥

सन्त्येव तुल्यार्था भूयासः शब्दाः। किं पुनस्तेषु मध्ये यस्य विवक्षितार्थाभिधायित्वं तस्यैव वैचित्र्यं रामणीयकं, स एव काव्यार्थः।'

( अलङ्कारमहोदधौ, पृ० १६ ).

इत्थं काव्यगतवाच्यार्थव्यतिरेकं रामणीयके मन्यमाना पण्डितराज-कुन्तक-नरेन्द्रप्रभसूरयः अनधिगतप्रतीयमानार्थसंस्पर्शं तत्रानुमन्यन्ते। आनन्दवर्धनस्तु अनधिगत-प्रतीयमानार्थसंस्पर्शं विनैव काव्यगत-वाच्यस्य व्यतिरेकं निदर्शयति ग्राह्यविशेषाभेदादेव तन्मतेन काव्ये वाच्योऽर्थः प्रतिभासते। तथैव महिमभट्टोऽपि स्वभावोक्तिगत-वैचित्र्यमर्म उद्घाटयन्—

उच्यते वस्तुनस्तावद् द्वैरूप्यमिह विद्यते।
तत्रैकमत्र सामान्यं सद्विकल्पैकगोचरः।
स एव सर्वशब्दाना विषयः परिकीर्तितः।
अत एवाभिधेयं यत् सामान्यं बोधयत्यलम्।
विशिष्टमस्य यद् रूपं तत् प्रत्यक्षस्य गोचरः।
स एव सत्कविगिरां गोचरः प्रतिभाभुवाम्।
रसानुगुण- शब्दार्थचिन्ता- स्तिमितचेतसः।
क्षणं स्वरूपस्पर्शोत्था प्रज्ञैव प्रतिभा कवेः।
सा हि चक्षुर्भगवतस्तृतीयमिति गीयते।
येन साक्षात्करोत्येष भावास्त्रैलोक्यवर्तिनः॥

(व्यक्तिविवेके, पृ० ३९०-९१)

इत्यत्र वस्तुनः सामान्य-विशेषयोः रूपयोः विशेषमपि प्रत्यक्षगोचरमाह। तदेव च विशिष्टं रूपं महाकवीना सरस्वत्यपि विषयीकुरुते। प्रतिभया प्रत्यक्षं गोचरीकृतमिदं विशिष्टंरूपं काव्यगत-वाच्यार्थान्त.पाति एव। एतेन च शास्त्र-व्यवहारापेक्षया काव्यगतवाच्यार्थस्य व्यतिरेकः प्रसक्त एव। व्यतिरेकाच्चास्मान्निष्पद्यते रामणीयकम्, रामणीयकाधाने च निमित्ततामायाति वाच्यगत-विशेषस्य संस्पर्शः। अयं च विशेषः वाच्ये स्वत एव सिद्ध इति आनन्दवर्धनस्य पक्षः। महिमभट्टोऽपि स्वगतं प्रत्यक्षग्राह्यमेव वा विशेषमिमं मनुते।

ननु भावयित्र्या प्रतिभया ग्राह्ये वाच्यार्थे प्रसक्तोयं विशेषः सकेतितः स्याद्वा असङ्केतितो वा? यदि सङ्केतित एव गृह्यते तदा तु तस्य क्षुण्णत्वान्न तत्र स्यात् नवोन्मेषः, तथात्वे च न स्यात् चारुता-निष्पत्तिः। असङ्केतितः सन् पुनरयं वाच्य एव न स्यात्। सङ्केतितार्थस्य विशेषगर्भत्वे स्वीक्रियमाणे नावीन्यस्य रामणीयकस्य चाभावादिष्टापत्तिः, असंङ्केतितस्य तु पुनर्न वाच्यत्वम्। ननु वाच्यगतविशेषस्य असङ्केतितत्वेऽपि सङ्केतजातीयकत्वं स्वीकरणीयमेव, जातिरूपेण च सिद्धयत एवास्याधिगतत्वम्, तेन नेष्टापत्तिः,

काव्यगतवाच्यस्य च विशेषसंवलितत्वं सिद्धयते। एवं च शास्त्रव्यवहारापेक्षया वाच्यस्य व्यतिरेकस्तस्य बिम्बात्मकत्वे निहित इति दिक्।[1]

प्राध्यापकाध्यक्षः
हिन्दी विभागे
विक्रम विश्वविद्यालये:,
उज्जयिनी।

---

१—पाश्चात्येषु काव्यबिम्बमित्यभिहितस्य तत्वस्य विमर्शः प्रतिभा-विचारे भारतीयैराचार्यैर्वैशद्येन विहितः। तद्यथा—

दर्पणबिम्बे यद्वन्नगरग्रामादिचित्रमविभागि।
भाति विभागेनैव च परस्परं दर्पणादपि॥
(परमार्थसारे–१२)

भासा नाम च प्रतिभा महती सर्वगर्भिणी।
स्वस्वभावशिवैकात्मदेशिकात्मकचिन्मयी॥
यस्या हि भित्तिभूताया मातृमेयात्मकं जगत्।
प्रतिबिम्बतया भाति नगरादिव दर्पणे॥
(महार्थमञ्जरी–१७५)

# राष्ट्रस्य-शिक्षा नीतौ संस्कृतस्य स्थानम्

## डॉ० प्रभुदयालु अग्निहोत्री

भारतस्य-शिक्षा नीतौ संस्कृतस्य किं स्थानम् स्यादिति विचारणाया पूर्वं तस्या ऐतिहासिक्या सामाजिक्या वा पृष्ठभूमौ स्वल्पो दृष्टि-निक्षेपो नासमीचीनः स्यात्।

एकोनविंशतितमायाः खिस्त्रीयशताब्द्या उत्तरार्धे, भारतस्योत्तर भागेषु, यो राजनीतिको विप्लवो जातस्तेन ब्रिटिशशासनं भारतीय शिक्षा-नीति-विषयेऽधिक-सावधानतया विचारणाय प्रेरितमभूत्। बहु-कालिक-विचार विमर्शानन्तरं तात्कालिकेनाङ्ग्लशासनेन नूतन-पुरातन-मध्यवर्तिनी काचित् सरणिर्विनिश्चिता यया नूतनवादिनः पुरातनवादिनश्चोभयेऽपि सन्तोष भजेरन्। तदा फारसी उत्तर-भारतीयशासन कार्यालयेषु न्यायालयेषु चाङ्गीकृत भाषा आसीत्। पञ्चाप-दिल्ल्युत्तर प्रदेशादि प्रान्तेषु साऽतीव प्रभावसपन्ना व्यराजत। फारस्या सहारवीभाषाऽपि वर्चस्वती समविद्यत। उर्दू भाषा युवराज्ञीव भविष्यत स्व-राजस्य भार-वहनाय प्रक्रममाणावर्तत। हिन्दी भाषायाश्चरणौ तु तदा स्वेच्छं चलन-शक्ति-सम्पन्नौ नाभूताम्। अन्यासामाधुनिकभाषाणा स्थितिस्तु हिन्द्यपेक्षया दृढतराभवत्। स्नेह मय्या जनन्या सदृशी संस्कृतभाषा पतिष्यन्तीनां तासां करावलम्बनाय सविध एवस्थिताऽदृश्यत। अन्यतश्च भारतस्य सर्वेष्वपि दिगञ्चलेषु ब्रिटिश-संपर्क प्रभाव पूरिताना जनाना समवाया आङ्गलभाषां, तत्साहित्य, संस्कृतिञ्च सस्पृहमवलोकमाना अतिष्ठन् आङ्गलशासकैरस्याः परिस्थितेः सूक्ष्माकलनं विधाय परम्परागताना संस्कृतपाठशालानामरबी-मकतवानां फारसी मद-रसाना च कार्यकलापेषु न केवलं व्यवधानं नोत्पादितमपितु तेषा यत्किञ्चित् साहाय्यमपि विहितम्। तैः ग्रामीणाञ्चलेषु विद्यालया अपि प्रारब्धा येषु प्रथमतः सप्तमकक्षापर्यन्त शिक्षणस्य व्यवस्यासीत्। तेषु चतुर्थ-कक्षां यावत् मातृभाषा तदनन्तरं चैकान्यापि भाषा शिक्ष्यते स्म। सा च भाषोत्तरीय-प्रान्तेषु हिन्दी किं वा उर्दू, दाक्षिणात्येषु प्राच्येषु प्रान्तेषु आङ्गल भाषाऽभवत्

मण्डलानां मुख्यालयेषु उच्च विद्यालयाः स्थापिता आसन्, येषु आङ्लभाषाया अध्यनमनिवार्यमासीत् प्रारम्भत एव। संस्कृता चापि सप्तमकक्षातः पठितुं शक्यासीत् तदिच्छकैः। ग्रामीणेषु माध्यामक विद्यालयेषु संस्कृताध्ययनस्य कोपि प्रबन्धोनाविद्यत। उच्च विद्यालयेषु संस्कृतस्य शिक्षकाः पण्डिता इत्यभिधीयन्ते स्म। तेषां मासिकी भृतिश्चान्यविषयाणां शिक्षकाणा वेतनापेक्षयाऽल्पतरा बभूव। प्रायेण विद्यालयेषु एक एवाध्यापको हिन्दी संस्कृतं चोभेऽपि पाठयति स्म। बहुकालं यावदेतेषु विद्यालयेषु संस्कृतमपि आङ्लभाषयैव शिक्ष्यते स्म। परम्परागतपद्धत्याऽधीतवन्तः पाठका विद्यालयानामभिनव नवं परिवेशमात्मसात्कर्तुं क्षमा नाभवन्। द्वादशवर्षाणि यावदेकमेव शास्त्रमभ्यस्यता छात्राणा, पञ्चाना विषयाणां भारोद्वहनेन वर्षत्रयमेव संस्कृतस्याध्ययनं चिकीर्षतां छात्राणां शिक्षणपद्धतौ केनचिदन्तरेण भवितव्यमिति ते वोद्धुमसमर्था एवाभवन्। ते च रटनशैलीमेवाश्रयन्त, न सस्कृतस्याध्ययनं प्रति उत्साहो नावर्धत प्रत्युत संस्कृताद्विरक्तिरेवाजायत छात्राणाम्। एवमेभिर्विद्यालयैरेकतः संस्कृत भाषाया प्राणधारणे न केवलं साहाय्यं व्यधायि प्रत्युत सामान्यछात्रेषु तस्याः प्रचारायापि प्रयतितम्। परमपरत तैः तस्याः विपन्नावस्थायां निमज्जने तद्विषये भ्रान्तिमथ्याः हीनाया भावनायाश्चापि प्रसारे किमपि पाटवमपि प्रदर्शितम्। शिक्षणविधेस्तु दूषितैषा सरणिरद्यावधि पूर्ववदेवानुसर्यतेऽमीभिर्विद्यालयैः।

विद्यालयैः सहैवाङ्ग्ल-शासकैस्त्रयः संस्कृत—महाविद्यालयाअपि स्थापिताः। अस्मिन्नेव काले खिस्तीय-मिशनैरपि भारते शिक्षा संस्थानां जालमिव प्रसारितम्। तेषु सस्कृतभाषायाः स्थितिः राजकीय-विद्यालयापेक्षयापि दयनीयतराऽऽसीत्। बहुषु महाविद्यालयेषु संस्कृताध्यापनस्य व्यवस्थैव नासीत्। कतिपयेषु च संस्कृतस्य हिन्द्याश्च विभागौ संयुक्तावेवास्ताम्। संयुक्तविभागाध्यापकाश्चार्थिकैरन्यैश्चानेकैराकर्षणैः संकृष्टा आधुनिकभाषायै एव महत्त्व प्राददुः, सस्कृतं तु वैवश्येन नासिकासक्तां वन्धनरज्जुमेवामन्यन्त। प्राचीनपद्धत्याः सस्कृतविद्यालयान् प्रति सामान्यजनानां मनःसु समादरः एवभूतायां स्थितावपि दीर्घकालं यावत् स्थिर आसीत्। एषु वित्तादि साधानानां सर्वथाऽभाव आसीत्। शिक्षकाणा मासिको वृत्तिरपि

-स्वल्पैवाभवत् तथापि लब्धप्रतिष्ठाना वैदुष्यलाभ एषामासीत्। अत्र शिक्षिताना स्नातकानांकृते न शिक्षणादृते किमप्यन्यद्द्वारमनावृतमासीत्। अध्यापने च कति विद्वांसो नियोजिता भवेयुः। किञ्चित्कालानन्तरमार्यसमाजस्य सनातनधर्मस्यचान्दोलनै देशस्य ध्यानं भारतीय शिक्षा पद्धति प्रति समाकृष्ट, राजकीयसहायतां विनैव च शिक्षाध्वररताना गुरुकुलर्षिकुल-संस्थाना च बाहुल्यमुत्तरापथे समदृश्यत। एषु विद्याकुलेपु संस्कृतस्य महत्त्व सर्वाधिकमासीत्। अस्मिन् काले इङ्गलैण्डजर्मनी फ्रांस देशेपु तत्रत्यैर्मनीषिभि संस्कृत-साहित्ये सविशेषा रुचिः प्रदर्शिता। भारते नियुक्तै आइ. सी एस. इति पदमलङ्कुर्वद्भिरन्यैश्च भारतीयाभारतीयाधिकारिभिरनेके संस्कृतविषयकाः ग्रन्थास्तेषामनुवादाश्च प्रकाश्यं नीता। अनेन नवीन-पद्धत्या शिक्षिताना पाश्चात्यविद्यापटूनां मनःस्वपि संस्कृतविषये समादरो जनितः। देशे संस्कृतं प्रति श्रद्धा स्फुरिता। अस्यायं परिणामो जातो यत् प्रारम्भतो हण्टर कमीशनादारभ्य कोठारी-कमीशन पर्यन्तं या. काश्चित् समितयो ये केचिदपि वाऽयोगाः शासनेन संघटिताः तैः सर्वैरपि संस्कृतस्योन्नतये पृथक्तो विचाराः प्रकटिता., तदध्ययनाध्यापन-विषये चापि उपाया प्रस्ताविता.। एव सत्यपि तेपु न कोऽप्याङ्ग्लशासकै निर्धारिताया शिक्षानीतेर्भिन्नं प्रकृष्टतर वा मार्ग सन्दर्शयितु शक्तोऽभूत्। आङ्ग्ला च नीतिरासीत्-संस्कृतं भारतस्य पैतृको निधि. तस्य रक्षा पुराण-स्मारकवत् कर्तव्या, प्राचीनसंस्कृतेरितिहासस्य चाध्ययने तस्याः साहाय्यं ग्राह्य, तदर्थ च सातत्येन केचन जनास्तदध्ययने प्राध्यापने च नियोज्या इति। एव संस्कृत-भाषा ,अरवी फारसी भाषाभ्या सह तत् समानभूमौ प्रतिष्ठिता तत्समभेव समादरमलभत। आङ्गलानां विदेशीयाना च दृष्ट्या इदं समीचीनमप्यासीत्। तैः संस्कृत साहित्यस्यमूल्यम् इतिहासदृष्ट्या निर्धारितम्। सामग्र्येणास्याः शिक्षानीतेः तस्याः कार्यान्वयन-प्रणाल्याश्चैते परिणामाः समदृश्यन्त—

(१) उच्चकोटिक-ग्रन्थानां तदनुवादाना च सम्पादन प्रकाशनं च
(२) हस्तलिखिताना ग्रन्थाना संग्रहः (३) शोध कार्यारम्भः

(४) इतिहास-संस्कृत-दर्शन-भाषा-शास्त्रादि – विषयाणामध्ययने संस्कृतस्य महत्त्वस्वीकरणम् (५) कठिनायाः जीविकोपार्जनार्थमनुपयोगिन्याः विद्यायाः रूपेण संस्कृतस्य कृच्छ्रेण जीवनयापनम् (६) राज्ञां, धनवतां भूमिधराणां व्यापारिणां च दानेष्वाश्रयिता (७) निर्धनैः ब्राह्मणैरध्येयायाः, ज्ञानालोक-विहीनेषु पश्चात्स्थितेषु प्रदेशेषु समादृताया- विचारजडानां भाषायाः रूपेण संस्कृतस्य समाख्यातिश्च। तथापि किन्त्वायमाश्चर्यस्य विषयो यत् शासनेनोपेक्षिता जीविकायाः स्रोतोभिश्चासंलग्नाप्येषा भाषा सपादशत-वर्षाणि यावत् केवलया स्वीययान्तःशक्त्या जीवितं धारयन्ती तस्थौ। भविष्यत्कालमुद्दिश्य शिक्षानीते- विनिश्चये इमानि तथ्यजातान्यप्यस्माभिः मनःसु धार्याणि। शिक्षानीतेः कस्याप्यङ्गस्य परीक्षणकाले इदमेव प्रष्टव्य यत्तस्याङ्गस्य राष्ट्रियजीवने किं महत्त्वम्। आङ्ग्लाना दृष्ट्या संस्कृतस्या-वयश्कता केवल प्राचीनेतिहासंस्कृत्योः स्वरूपज्ञानायास्ति पर भारतीयानां कृते तस्य महत्त्वं ततोऽधिकम्। आङ्ग्लानां कृते सा मृता पर भारतीयाना-कृते सा सप्राणा समुच्छ्वसन्ती भाषा वर्तते।

भारतस्य सर्वमपि येनकेनापि रूपेण संस्कृतेन संबद्धम्। विन्ध्य-हिमालय-सह्य-मलयारावली प्रमुखाः पर्वताः, गङ्गा-नर्मदा-सिन्धु-ब्रह्मपुत्रादिका आपगाः, सिन्धु-पञ्जाप-विहार-गुजरातासमकेरलादीनि राज्यानि, जाल-न्धरतः गोहट्टीपर्यन्त, श्रीनगरात्त्रिवेद्रंपर्यन्तञ्च विस्तीर्णानि नगराणि, वन-वृक्ष लता-पुष्पाणि. मासतु नक्षत्राणि, पशवः पक्षिण इत्येतेषां व्यक्ति-सूचक-शब्दाना मध्ये प्रतिशतं नवतितोऽन्यूनाः संस्कृतजेभ्यः सप्राणाः सजीवाः, आत्मीयाः, जीवनावयवरूपा इव प्रतिभान्ति। त एतैः सह हसितुं, संलपितुं च शक्नुवन्ति, सम्बन्धं स्थापयितुं पारयन्ति, मैत्री सम्बन्धेन च तेषु विश्रान्ति लब्धुं क्षमन्ते। असंस्कृतज्ञानां कृते तु ते निष्प्राणाः, कल्पित-प्रतीकवदाभासमात्रा- स्वरव्यञ्जनानां चाकस्मिकाः संयोगा एव। असंस्कृत-ज्ञानां समीपे गङ्गागैञ्जेजयोः, प्रयागेलाहाबादयोः, काशीवनारसयोः, हिमालय-हिमालेत्यनयोः, केरलकेरालेत्येतयोः, इन्दिरेन्द्रेत्यमुयोः, वाजेपेयि-वाजपायीत्युभयोः आपातकालापत्कालयोश्च मध्ये न किमप्यन्तरम्। सस्कृत-

मधीतवते दण्डकारण्य-शब्दो रोमाञ्चकारी परमन्येभ्यः स शरणार्थि शिविरेभ्यो वेलाडीलाखनिभ्यश्च ऋते न कमप्यन्यमर्थं वहति। सत्यन्त्वेदद् यत् भारते यत्किञ्चिदपि तस्य स्वीयपद वाच्यं-तस्य दर्शन शास्त्रं, साहित्यं भाषाः, प्राचारव्यवहारा- समग्रा वा जीवनपद्धतिः-तत् सर्वं साक्षाद्रूपेण संस्कृतेनाभिसंबद्धम्। नहि संस्कृतज्ञानमन्तरेण एर्वमेतज्ज्ञातुं सुशकम्। राजनीतिकस्पर्धायाः मिथोविग्रहस्य च युगेऽस्मिन् संस्कृतं सेतुवदुभय-पक्षयोजकम्। प्रायेण सम्पूर्णस्य भारतीयस्य साहित्यस्य जीवनस्य च स्पन्दनं श्वासोच्छ्वासाश्च संस्कृतहृदयपिण्डे कर्णौ निधाय श्रोतुं शक्यन्ते। अस्यैव साहाय्येन, आधुनिक-भारतीय-भाषाणां व्यञ्जनाशक्तौ वृद्धिः सभाव्यते। अनेनैवाधारेणैतासामभिव्यक्तिसामर्थ्यं वर्धयितुं शक्यते। अस्यैवाश्रयेणैता आधुनिकं तन्त्रं विज्ञानं च वाणीं प्रदातुं शक्ष्यन्ति। नवीनशब्दानां निर्माणस्य, नूतन संकेतानां ग्रहणस्य चाद्भुतमक्षयं च सामर्थ्यं संस्कृते दरीदृश्यते। भारतस्य सर्वमतीतमस्य क्रोडशायि, वर्तमानं च स्तनन्धयनिभमस्मात्पोषणं लभमान राजते, भाविभारतस्य च भ्रूण मस्मिन्निर्मीयमाण तिष्ठति। संस्कृतं भारतीय-जीवन-धाराया अभेद्यम-विच्छिन्नं चाङ्ग वरीवर्तते।

भारतस्य शिक्षानीतिविषये विचारं कुर्वद्भिरेतत् सर्वं मनसि सन्धार्यैव कार्यमारब्धव्यम्। न वैतद्विस्मर्तव्यं यत् संस्कृतं भाषाऽस्ति; भावानां विचाराणां वाऽभिव्यक्तेः वाहनमस्ति। नहि संस्कृतं भूगोलेतिहासवदध्य-यनस्य विषयविशेषः। प्राचीनकाले भारते गणित-रसायन-भौतिकी-यान्त्रि-की-जलयान्त्रिकी-खनिकर्म-वास्तु कर्म-खगोल-विज्ञान-कृषि विज्ञानायुर्विज्ञान-पशुविज्ञानादीः तान्त्रिकीर्वैज्ञानिकीश्च विद्या अधिकृत्य प्रभूतं गद्यपद्यमयं साहित्यं विरचितमभूत्। चित्र-मूर्ति-नृत्य-नाट्य-सगीतकला विषयक, काव्यनाटक-कथा-चम्पू-निवन्ध सम्बन्धि, अर्थ-राज्य-धर्म दर्शन-नीति विवेचकं च तादृग्विपुलपरिमाणमुच्चकोटिकं च साहित्यं संस्कृते समुपलभ्यते, यदनेके मनीषिण स्तद्गौरवाभिभूताः संस्कृतमुच्चविचाराणां वाहिनी भाषेति भणन्ति सादरम्। तेन संस्कृतं न केवलं वैदिकेन लौकिकेन वा

ललितेन साहित्येन, प्रत्युत सर्वैरप्याधुनिकैरध्यापनविषयैः प्रत्यक्षं सम्बद्धा। तस्याध्ययनं सर्वैरपि विषयैः सह तदयव रूपेण कर्तुं युज्यते, तथापि संस्कृते निबद्धं ललित साहित्यमन्यसाहित्यवदध्ययनस्य विषयो भवितुमर्हति।

तत् कथन्न प्रारम्भत एव बालकाना सम्बन्धोनया समृद्धया सह स्थापयितुं यत्नो विधीयते? अयं सम्बन्धः साक्षाद्भवितुं शक्नोति तथैवाप्रत्यक्ष रूपोऽपि। आङ्ग्ल-भाषायाः पद्यानां स्थाने तेभ्यस्तद्योग्यतायाः रुचेश्चानुसोरण संस्कृतगीतयः दातुं शक्यन्ते। जैकस्य जिलस्य च हिलारोहणस्थाने रामः श्यामश्च यदि वृक्षमारोहेता कस्मिंश्चिद् सुरभिपूरिते कुसुमिते भारतीये उद्याने भ्रमणं कुर्वीयातां तत् प्रशस्यतरं भवेत्। यदि कण्ठस्थीकरणे आग्रहः स्यात् तत् सरलानि सरसानि अनुष्टुभादीनि छन्दांसि साधीयांसि स्युः। प्रथम कक्षातः पञ्चमकक्षां यावदुत्तरोत्तरं वर्धमान-संख्यानुसारेण पञ्चसप्ततितोऽनूनाना श्लोकाना कण्ठस्थाकरणे न किमप्यसौविध्यं जायते। मातृभाषायाः पाठेषु तादृशा अनेकेशब्दा दृष्टिपथमवतरिष्यन्ति येषां प्रयोगः संस्कृत-श्लोकेषु भवति? आङ्गलभाषायाः भ्रान्तिजनकस्य व्यायामस्यापेक्षया इमेऽभ्यासा अधिकतरं सार्थकाः मनोरञ्जकाश्च सेत्स्यन्ति। अनेन मातृभाषाया उच्चारणे लेखने च शुद्धता वर्धिष्यते। हिन्दी क्षेत्रेषु सातत्येन वृद्धिं गच्छता नुच्चारणदोषाणामिद भैषज्यम्। अप्रत्यक्ष रूपेण मातृभाषायाः पाठेषु तादृशाना शब्दाना समावेशः कर्तव्यः ये बालकाना परिवेशेन साक्षात् सबद्धाः स्यु। कौटुम्बिक-सम्बन्धविषयकाः वृक्ष-पशु-पुष्प फल-पशु विहग खाद्य-सख्या-मास-दिनर्तु-पर्वाद्यभिधायिनश्च तथाविधा एव। एषां नामानि सरलैः संस्कृतशब्दैरेव शिक्षितव्यानि। गणितभूगोलादिविषयेषु सर्वासु भारतीयभाषासु समानरूपेण प्रयुज्यमाना संस्कृता न्निष्पन्ना पारिभाषिक शब्दावली इत एव कालाद् व्यवहर्तुं प्रारब्धव्या। माध्यमिकेषु उच्चतरेषु च विद्यालयेषु मातृभाषाया संस्कृतस्य चैकीकृतः समन्वितश्च पाठ्यक्रमः संस्कृत-प्रसूत-मातृभाषावतां छात्राणा कृते निर्मातव्यः। तत्र द्वाभ्यामपि भाषाभ्या समान महत्त्वं दातव्यम्। द्वयोरपि भाषयोः पाठ्यक्रमौ यदि परस्परोपजीविनौ भवितुं न शक्नुयाता तत्परस्परोपयोगिनौ त्ववश्यं-

स्यातामिति प्रयत्नो विधेयः नवीनया शब्दावल्या, भारतीयसंस्कृत्या ज्ञानेन च सह छात्राणां सागत्यस्यायं क्रमोऽविच्छिन्नस्तिष्ठेदिति यत्नः कार्यः, येनोच्चतर-माध्यमिक परीक्षायमुत्तीर्णस्छात्रः स्वदेशस्यातीतं वर्तमानेन संयोज्य पठितु क्षमो जायेत; स्वीयौ पादौ मातृभूमितले दृढी-कृत्य भविष्यते जीवनाय सार्थकान् स्वप्नान् सज्जीकर्तुं शक्त स्यात्। अस्मिन् सोपाने यस्मिन् कस्मिन्नपि सकाये प्रवेष्टुमच्छिन्तश्छात्राः यथा सरल संस्कृतमवबोद्धुं समर्थास्युस्तथा व्यवस्था कर्तव्या। ये चात्रवोधेन सहात्मनः संस्कृतेनाभिव्यक्तीकर्तुं सामर्थ्यं काङ्क्षेयुस्तेभ्यः पृथग्विषय-रूपेण संस्कृतभाषाया अध्ययनस्य सौविध्य प्रदेयम्। संस्कृतभाषाया अध्यापने नवीनतमानामाविष्कृतानां शिक्षणविधीनां प्रयोगः कर्तव्यः व्याकरण-ज्ञानं स्वप्रत्यक्ष विधिना प्रदेय पर तत्प्रदानं नोपेक्षितव्यम्।

महाविद्यालयेषु तु निरपवादं संस्कृताध्ययनस्य प्रबन्धो विधातव्यः। नह्येतदर्थं छात्रसंख्याया सीमबन्धन हितकारि स्यात्। पुस्तकलयाद्यर्थं वितीर्यमाणेषु अनुदानराशिष्वपि छात्रसंख्या विचारः सर्वथा परिहर्तव्यः। महाविद्यालय प्रविष्टाः छात्राः संस्कृतस्य ललितं साहित्य तदितिहासं च सविस्तारं यथा पठेयुस्तथा पाठ्यक्रमो निर्धार्यः। परं संस्कृतेतरविषयाणां पाठ्यक्रमेषु प्रारम्भ एव तथाविधा अध्याया निबद्धव्या ये तद्विषयस्य प्राचीन भारतीय परम्पराया ज्ञानस्योत्पादने सहायका भवेयुः। यथा अर्थशास्त्रस्याध्यापने भारतीयस्य अर्थशास्त्रस्य इतिहासः तस्य सिद्धान्ता अपि शिक्षितव्याः। एष एव परामर्श राजनीति-मनोविज्ञान-वाणिज्य रसायन-गणितादि विषयार्थमपि सगतो भवति। स्नातकोत्तर-कक्षयोः भारतीयस्य पैतृक-ज्ञान-निधेरवगमनं यथा सूक्ष्मतर प्रामाणिकं च स्यात् तथा मूलग्रन्थेभ्य उद्धरणानामुपयोगो विधेयः। तथैव प्राचीनेतिहास-पुरातत्त्व-दर्शनायुर्वेदादि विषयेषु प्रवेशस्तेभ्य एव देयो यैः पूर्वपरीक्षायां विशिष्टतया संस्कृतस्याध्ययनं विहितं भवेत्।

अत्र शिक्षक-प्रशिक्षण-पीठाना विषयेऽपि कश्चिद्विचार उपयुक्तः। देशे-ऽस्मिन् प्रभूतसंख्याकाः शिक्षक-प्रशिक्षण-महाविद्यालयाः सन्ति, येषु च

संस्कृतभाषाध्यापन नैपुण्यार्थं प्रशिक्षणं प्राप्तुं शक्यते। परमेषा व्यवस्था केवलं नियमावल्यामेव लिखिता दृश्यते। साधारणाना प्रशिक्षण-महाविद्यालयाना तु कथैव का, केन्द्रीयशासनान्तर्गतेषु प्रशिक्षण-महाविद्यालयेष्वपि संस्कृत-शिक्षण-विधेः प्रशिक्षणस्य समुचित. प्रबन्धो नास्ति। संस्कृत-संस्थानेष्वपि चायं विषय उपेक्षाभागिव प्रतिभाति। केन्द्रीयशासने संस्कृत-भाषा शिक्षण-विधेः शोधपीठस्य स्थापना कर्तव्या। सम्पूर्णे देशे; चतुर्भ्यो ऽन्यूनास्तादृशा विद्यापीठा निर्मातव्याः। प्रशिक्षण-महाविद्यालयानां च पाठ्यक्रमास्तत्परामर्शानुरूप विधेयाः। बी० एड० एम० एड० कक्षयोश्च प्राचीन भारतीय-शिक्षण-पद्धतिं शिक्षणपीठाँश्चावलम्ब्यैकं पृथक् प्रश्नपत्र निर्धायम्। प्रशिक्षण-महाविद्यालयेषु संस्कृत-शिक्षणे नैपुण्यमाप्तुं प्रबन्धस्तु परमावश्यकः। इमे महाविद्यालया. साम्प्रतं प्रायेण संस्कृत भाषा-प्राध्यापक-विहीना एव। अज्ञात कारणेन तेषा पदानि रिक्तान्येव रक्ष्यन्ते। यत्र कुत्रचिद् यदि प्राध्यापकाः लभ्यन्तेऽपि तत्ते स्वविषयज्ञान दरिद्रा एव प्रायेण। तेन तेषा भावोऽप्यभाव एव। छात्राश्चात्र संस्कृत विहायान्य विषयं स्वीकर्तुं विवशा भवन्ति। वरं भवेत् यदि प्रतिराज्यमेकः पृथक् संस्कृत-शिक्षक-प्रशिक्षण-महाविद्यालयः स्थापितः स्यात्।

प्रशिक्षित-संस्कृत-शिक्षकाणां कार्य व्यापृति-प्रश्नोऽपि कठिन एव। माध्यमिककोटौ यदि संस्कृत शिक्षकाणामावश्यकता स्यात्। शासनस्य शिक्षा विभागा संस्कृतस्य व्याख्यातॄणां शिक्षकाणा च नियुक्तौ अत्यन्तं कृपणा दरीदृश्यन्ते। ते व्याख्यातृकार्येषु बी० ए० पर्यन्त संस्कृत मधीतवतः शिक्षकान् योजयन्ति। एवं च व्याख्यातॄन् विनैव कार्यं निर्वाहयन्ति। शासकीय-विद्यालयानां प्राचार्याश्छात्रान् संस्कृतं विहायान्यं विषयमध्येतुं प्रेरयन्ति। बहुधा छात्रसंख्या न्यूनेति व्याजेन संस्कृताध्ययन-प्रबन्धो निरस्यते। महाविद्यालयेषु एषा स्थितिः प्रायेणावलोक्यते। संस्कृतं प्रत्यौदासीन्यस्यातोऽधिकं किं प्रमाणं भविता यद् राज्यानां माध्यमिक-शिक्षा-मण्डलेषु संस्कृतविषयिकेषु अध्ययन-समितिसु अनेके सदस्याः

बी. ए. पर्यन्तमेव संस्कृतमधीतवन्तो भवन्ति। पुनरिमे सदस्याः सम्पूर्णाय राज्याय संस्कृताध्ययनस्य नीतिं तत्पाठ्यक्रमं च निर्मान्ति।

संस्कृत-शोध कार्याय भूयसीनां तदर्थाना च छात्रवृत्तानामावश्यकताऽनुभूयते विद्वद्भिः। पर शोधकार्येणापि तथैव सीमवद्धेन नियन्त्रितेन सोद्देश्येन च भाव्यम्। साम्प्रतमस्यां दिशि शक्ति-समय-धनानां च निरुद्देश्यो व्ययो भवति। शोधकार्यस्य विस्तारेण सह ज्ञानस्य गाम्भीर्यमनुदिन क्षीणतां गच्छदवलोक्यते शोधकार्यं सार्थकमुपयोगि राष्ट्रहितदृष्टिक यथास्यात्तथा प्रयतितव्यम्। शोधनिर्देशकाश्चोच्चकोटिका विद्वांस एव नियोजितव्याः। शोधकार्येणैव सवद्धाऽस्ति सम्पूर्णे देशे विकीर्णानां हस्तलिखित-ग्रन्थाना संग्रहस्य संपादनस्य प्रकाशनस्य च समस्या। एतदतिदुष्करं कार्यम्। तदर्थं प्रत्येकराज्ये पृथक् स्वतन्त्रेण मण्डलेन सघटितेन भाव्यम्। बहवो विद्वासोऽस्मिन् संलग्ना भविष्यन्ति तदैव कार्यमेतत्सेत्स्यति। यदि विविध संस्थानेषु विश्वविद्यालययेषु राजकीयपुस्कालयेषु चोपलब्धानां हस्तलिखित-ग्रन्थाना प्रतिलिपीर्निमाय तासां परस्पर विनिमय-व्यवस्था समवेत् तदाऽध्येतॄणां महद्धितं संपादित भवेत्।

भारते संस्कृताध्ययनस्य काचिदन्यापि सामान्य-महाविद्यालय-व्यतिरिक्ता पद्धतिः प्रचलिताऽस्ति या कालकृतस्य दुर्दम्य-झञ्झावातस्याघातानां मध्ये व्यतीतेष्वपि वहुषुवर्षेष्वद्यापि स्वतन्त्रां सत्तां धारयन्ती जीवन्ती चास्ते। वयमेना प्राच्यां प्राचीना पद्धतिं व्याहरामः। प्रारम्भिक-पाठशालाभ्य आरम्य संस्कृत विश्वविद्यालयान् यावदेतस्या अविच्छिन्ना शृङ्खला प्रवृत्ता वर्तते। कालिकात्ता, वाराणसी, पाटलिपुत्रं जयपुरं मद्रासमित्यादीनि नगराणि अस्याः पद्धतेः प्राचीनानि केन्द्राणि अभूवन्। वाराणसेये संस्कृत-विश्वविद्यालये, काशी हिन्दू विश्वविद्यालयस्य प्राच्यसंकाये, तिरुपते संस्कृत-संस्थाने केन्द्रीयशासनाधीनेषु संस्कृत-विद्यापीठेषु, बहूनां विश्वविद्यालयानां प्राच्यसंकायेषु बहुशत-संख्याकेषु संस्कृतविद्यालयेषु चाद्यापि अनयैव पद्धत्याऽध्ययनाध्यापनं च प्रचलित क्रियते! एते विद्यालयाः शासकीयविद्यालय-व्यतिरिक्ताः संस्कृतेश्रद्दधानाना वदान्याना दानस्याश्रयेणैव च जीवन धारयन्तोऽतिष्ठन्नद्यावधि। परं साम्प्रतं

तेषां प्राणाः सङ्कटग्रस्ता इव प्रतिभान्ति। राज्यशासनानिर्नैनान् भर्तुमनुमन्यन्ते नापि जीवनधारणसाधनानि तेभ्यो वितरन्ति। सत्यपि समीक्षात्मिकायाः परस्परतोलनात्मिकायाश्च दृष्टेरभावे एते विद्यालयाः शास्त्राणि सर्वथा विनाशादरक्षन्। सत्यमपि च विचारगणा ननुदारतायामस्याः पद्धतेरनुयायिभिः विद्यां प्रति समर्पणस्याद्भुता क्षमता प्रदर्शिता। समग्रेऽपि देशे कार्यरतानामेतासां संस्कृतपाठशालानां परिरक्षणं पैतृकनाथमिव कार्यम्। तदर्थं काचिद् विशिष्टा राष्ट्रियनीतिरपेक्ष्यते या च शासनद्वारेण कार्यान्विता भवितुमर्हति। एतेषां विद्यालयानां प्रमुखा आवश्यकता इमाः सन्ति—

(१) वैत्तिक स्थितौ परिष्कारः (२) भवनानां, पाठ्य साधनानां पुस्तकालयानां चावस्थायाः सुधारणा (३) पाठ्यक्रमं गतिशीलं व्यापकं च विधाय तस्य राष्ट्रियाभिः सांस्कृतिकीभिश्चावश्यकताभिः समन्वितिः (४) स्नातकेभ्यः जीविकोपार्जन व्यवस्थां विधाय तेषां साधारण्या जनधारया सह संयोजनम् (५) विश्वविद्यालयैः लोकसेवायोगैश्च संचालितासु परीक्षासु एषां स्थाननिर्धारणम्।

संस्कृतं भारतीय संविधानेन स्वीकृतासु चतुर्दशभाषास्वन्यतमा। अतस्तस्याः प्रचारः प्रसारश्च भारतीय शासनस्योरीकृतं कर्तव्यम्। एतदस्य प्रमाणं यत् संस्कृतं पुरातात्त्विकसामग्रीवत्केवलं परिरक्षणीयं वस्तु नास्ति न वा तस्योपयोगित्वं केवलं प्राचीन संस्कृतेर्वाहनरूपेणैव। सा ससत्त्वा, शक्तिमती भाषा। संस्कृतेऽनेकाः साप्ताहिक मासिकादि पत्रिका प्रकाशिताः भवन्ति। प्रतिवर्षं च अनेक शतानि मौलिकपुस्तकानि मुद्रितानि प्रकाशितानि च भवन्ति। अस्यामेव भाषायां यत्रतत्र भाषणानि वादविवादाः, संगोष्ठ्यः, कविसम्मेलनानि च भवन्ति। सहस्राणि जना संस्कृतं भाषन्ते, लक्षाणि चैतदवबोद्धुं शक्नुवन्ति। संस्कृतस्य वक्तारो बोद्धारश्च सम्पूर्णेऽपि भारते समुपलभ्यन्ते न तु कस्मिंश्चिद्विशिष्टे राज्ये। अतः प्रतिराज्यमेकस्य संस्कृत विद्यापीठस्य, शोधकेन्द्रस्य, एकस्याः संस्कृत परिषदः स्थापना अवश्यं कर्तव्या। श्रेष्ठानां हस्तलिखितग्रन्थानां संग्रहः संपादनं प्रकाशनं चावश्यकम्। मौलिकसाहित्यस्य रचना च प्रेरयितव्या।

अस्मिन् देशे यत्किञ्चिदपि श्रेष्ठमुपादेयं चास्ति तस्य परिरक्षणे, युगानुरूप च तस्य सामञ्जस्यविधाने संस्कृतमद्यापि क्षमम्। भारतस्य राष्ट्रियशिक्षा नीतौ च यदि संस्कृतायोचित स्थानं प्रोत्साहनं-प्रदीयते चेत् तन्नून शुद्ध' लोकतन्त्रीयभारत भारतं भूयाद् विश्वगुरु ।

---

## वाल्मीकेर्वर्णरचनाप्रकर्षः

( डॉ० श्री अयोध्याप्रसादः द्विवेदी )

कविकर्मणोऽलौकिकत्वं प्रकृष्टमिति न सन्देहविषयः। तत्र काव्यसम्पदा सम्यक् समायोजनमेव कर्तु'. साफल्यम्। वस्तुतः, एष विनियोगविशेष एव काव्यशिल्पस्य सम्मूर्त्तनपक्ष; यत्र काव्यार्थस्य प्रत्यक्षतुल्योपस्थापने वर्णविन्यासः ( रङ्गयोजना ) कवीनां मुख्यो रचनाप्रकार.। चित्रकारस्य रेखाचित्रेष्विव कवेः शब्दचित्रेष्वपि वर्णदीप्तिः याथातथ्येनार्थ–प्रकाशनाय प्रकाम प्रभवति। यतो वस्तुस्वभावस्य यावती स्फुटा अर्थव्यक्तिः वर्णरचनामाध्यमेन जायते, नान्यथा तावती। अत एव तु आचार्यो वामनः 'अर्थव्यक्ति' विवृण्वन् शंखा–लक्तक–गोरोचनादिवर्णसंश्लेपेण पल्वलकुमुदविकासवस्तु इत्थमुदाहरतिः—

पृष्ठेषु शखशकलच्छविपुच्छदाना
राजीभिरङ्कितमलक्तकलोहिनीभिः।
गोरोचनाहरितवभ्रु वहिःपलाश—
मामोदते कुमुदमम्भसि पल्वलस्य ॥

( काव्या० सू० ३।२।१४ )

सुस्पष्टमेव यत् स्वाभाविकी भवति वर्णविन्यासस्य प्रवृत्तिः कवीनाम्। तेनैव सम्पूर्ण संस्कृतकाव्यजगति वर्णयोजनाया मनोरम. प्रकारः प्राप्यते। आदिकविरपि स्वप्रतिभया 'चिरनिवृ'त्तमपि वृत्त' यत्प्रत्यक्षमिवानयति'

तत्तस्य वर्णाभरणप्रकर्ष एव एको हेतुः। कविः कुत्रचित् प्रतिकूलवर्णविधानेन अर्थं विशदयति कुत्रचिच्च विविधवर्ण-सश्लेषणेन स्वाभिप्रायं प्रकाशयति। तद्यथेह सर्वमुपनिवध्यते।

कस्यापि वर्ण्यस्य वस्तुन उल्लेख एव तद्रागतामाविष्करोति। तद्यथा 'किसलय' इति चिन्तनेऽपि तस्य ताम्रवर्णता प्रस्फुरति। 'सिन्दूरस्य' स्मरणमपि तद्रक्तिमानमनुपस्थापयति। पीतिम्ना विना 'हरिद्रायाः' का कल्पना? श्वेतिमानमपहाय 'क्षीरं' केन रूपेण जानीयात्? नैतावदेव, अपितु रक्त-श्वेत-नील-पीतादिवर्णानाम् अभिधानमपि सामान्यतः तत्तद्रूपाणि प्रत्याययति। इत्थं प्रत्येकं वार्णिकं पदं रागमहिम्ना स्वत एव चाक्षुषं भवति रूपविषयत्वात्। अस्माद्धेतोरेवादिकविर्वाल्मीकिः रूपाङ्कनप्रसङ्गेऽक्षिरक्तिमानं विवक्षू रक्त-संरक्तेतिपदैः संविशेष्य रक्ताक्ष[1]-रक्तेक्षण[2]-रक्तलोचन[3]-संरक्तलोचन[4]-संरक्तनयन[5]-इत्यादिपदबिम्बानि वहुधा प्रयुङ्क्ते। पात्राणां मनोदशां सम्मूर्त्तयितुं यत्र-यत्र एतस्मादपि पूर्वं स शोक-क्रोधपदयोः विशेषणसन्निवेशमपि करोति। यथा—'शोकरक्तेक्षणः' 'क्रोधसंरक्तनयन[6]:'। किन्तु, इमे प्रयोगा नहि नूतनत्वमावहन्ति सामान्यवर्णाभिधानात्। यतो नहि सामान्यकथनमात्रं बिम्बविधानहेतुकं तस्य विशेषाभिधानमूलकत्वात्। अत एव यदा कवो 'रक्ताक्ष' इत्यस्य स्थाने 'लोहिताक्ष[7]'-'ताम्राक्ष[8]'-इत्यादिपदप्रयोगं करोति, तदा ताम्राभस्य रक्तिम्नश्चाक्षुषत्वमधिकं रोचिष्णु भासते।

सुग्रीवस्य प्रमादेन क्रुद्धस्य लक्ष्मणस्य कोपसंरक्तनयने[9] यदधिकतरं प्रभविष्णुनी; तत्र तु 'दीर्घोष्णमहोच्छ्वास' इतिपदगुम्फनमेव हेतुः। तत्रापि

१. अयो० ८८।१९, ७७।२६, युद्ध० ६५।२८.
२. अर० ६०।१०. ३—अर० ५६।२०. ४—अर० ३।८, ३१।३, ४५।२०
५. यु० १०४।१, कि० ३४।५, अर० २०।१२.
६—अर० ६०।१०, यु० १०४।१
७—'लोहिताक्ष महाबाहुं रक्तोष्ठ दुन्दुभिस्वनम्' बाल० १८।११
८—अयो० २।४३, ५०।४, ६२।२८, अर० ६८।१६
९. स दीर्घोष्णमहोच्छ्वासः कोपसरक्तलोचनः।
बभूव नरशार्दूलः सधूम इव पावकः॥ कि० ३१।२६॥

'सधूम इव पावकः' इत्युपमागर्भितं वक्रोक्तिविम्बं तद्रूपसंवेदने काममुपकरोति, येनाखण्डत्वेन रामानुजस्य क्रोधाविष्टदशाऽनुभूयते। सीताहरण-प्रसङ्गे सीतया वहुशो विगर्हितस्यातः क्रुद्धस्य राक्षसेन्द्रस्य नयने कोपेन दहृतः[1]—यत्र कविना मेघवर्णिनो रावणस्य देहे तप्तकाञ्चन भूषणैः सह तस्य संरक्तनेत्रयोर्वर्णनेन कृष्ण–रक्त–पीतवर्णाना सश्लिष्टयोजनमकारि, येन राक्षसेन्द्रस्य दुर्धर्षं रूपमुत्तिष्ठति। रामायणे रक्तोष्ठस्य,[2] रक्तनखस्य,[3] ताम्रवर्णिनः केशकलापस्य[4] मुखस्य[5] च स्वतन्त्रोल्लेखस्तु वहुधा प्राप्यत एव। परम्, जम्बुमालिनो वाणेन रक्तरञ्जितं ताम्रमुखस्य हनूमतो मुखं द्रष्टव्यमस्ति—

> तस्य तच्छुशुभे ताम्रं शरेणाभिहतं मुखम्।
> शरदीवाम्बुजं फुल्लं विद्धं भास्कररश्मिना॥
> तत्तस्य रक्तं रक्तेन रञ्जितं शुशुभे मुखम्।
> यथाकाशे महापद्मं सिक्तं काञ्चनविन्दुभिः॥
>
> (सु० ४४।८–९)

अत्र हनूमान् पृथ्वीतलमुपरि आकाशे चैत्य-प्रासादस्य तोरणविटङ्कमधिष्ठितो वर्तते अधश्च स्थितो राक्षसो जम्बुमाली तीव्रनिशितशरेण तन्मुखमभिलक्ष्य प्रहृतवान्, येन कपीन्द्रस्याननं रक्तरञ्जित वभूव। तथ्यमिदं कविरत्र पृथक्त्वेन द्विधा अप्रस्तुतविम्बाभ्यामुत्थापयति—वाणविद्धाननदशां 'सूर्यरश्मिसंलग्नविकसितशरत्कालिकरक्ताम्वोजेन' रक्तरञ्जितमुखञ्च 'स्वर्णाभजलविन्दुभिरार्द्रेणाकाशस्थेन विशालरक्ताम्वोजेन'। इह हनूमतो मुखस्य ताम्रता, शरस्य[6] स्वर्णाभद्युतिः, अम्बुजस्य ताम्रता, सूर्यरश्मीनां

१. अर० ४९।५–६।
२. वाल० १८।११, अर० ५२।२१
३. अर० ३४।१७, सु० १२।१५
४. अर० १७।१०
५. सु० ५३।२४
६. महद्रुचिरसायकम् सु० ४४।२.

कनकद्युति· रुधिरस्य च राग–इत्येतेषां संश्लिष्टप्रतीति । किन्तु रक्तविन्दूनां कृते काञ्चनविन्दूनामसदृशवर्ण योजना न हृद्या प्रतिभाति। परं यदा रामेण त्यक्ताः पावकोपमा वाणा विराधस्य शरीरं भित्त्वा रुधिराप्लुता सन्तः पृथिव्यामापतन्ति[1] तदा ज्वलद्भिरङ्गारैस्सह रुधिरस्य च समानधर्मिणी कल्पना रोचतेतराम्। रक्तबिम्बोद्धरणाय सौमित्रिणा नासाकर्त्तनेन रक्त रञ्जितायाः शूर्पणखाया हस्तच्छेदेन रुधिरक्लिन्नस्य कबन्धस्य च रूपाङ्कने क्रमशः 'शोणितोक्षिता'[2], 'शोणितौघपरिप्लुतः'[3] इतिपदबिम्बप्रयोगोऽपि स्मरणीयः। फेनिलस्य रुधिरस्य प्रयोगो बहुशः प्राप्यते[4]। शोणित[5] परीताङ्गं क्रौञ्चमवलोक्यादिकवेः करुणापगा निरगादिति तु सुविदतमेव।

पात्राणामलङ्करणप्रकरणे प्रायेण रक्तमालारक्तचन्दन[6] मिति सामान्यरक्तोल्लेखस्तु नहि विवृतिमपेक्षते। तथापि, रक्तमाल्यदाम्न· शोणितस्य च समन्वितो राग· कृष्णपीतसंश्लिष्टप्रयोगेण सह युद्धाय प्रस्थितेन कुम्भकर्णेन गृह्यमाणे विपुलत्रिशूलचित्रणे द्रष्टव्यो वर्त्तते—

सर्वं कालायसं दीप्तं तप्तकाञ्चनभूषणम्।
रक्तमाल्यमहादाम स्वतश्चोद्गतपावकम्।
आदाय विपुलं शूलं शत्रुशोणितरञ्जितम्॥

यु० ६५।१९-२१॥

---

१. अर० ३।१२

२. अर० १८।१

३. अर० ७०।११

४. अद्य ते भिन्नकण्ठस्य फेनवुद्‌बुदभूषितम्।
विदारितस्य मद्‌बाणैर्मही पास्यति शोणितम्॥ अर३०।६
तं दीनं दीनया वाचा सफेनं रुधिरं वमन्।
अभ्यभाषत पक्षी तु रामं दशरथात्मजम्॥ अर० ६७।१४

५. तं शोणितपरीताङ्गं चेष्टमानं महीतले। बाल० २।११

६. २२।१९, अयो० ६९।१५, ९१।५८

वाल्मीकिर्विविधवर्णाना संश्लिष्टचित्रणेऽतीव कुशलः। एतादृशेषु संश्लिष्टचित्रणप्रसङ्गेष्वपि तस्य महाकवेरकृत्रिमा बिम्बनभारती तथैवासंश्लिष्टेव देदीप्यते। युद्धोपरान्तम् अग्निपूता चरित्रशुद्धां जनकजा रामो यदा स्वीचकार तदानीतना तस्या प्रदीप्ता रूपसम्पद्—

तरुणादित्यसंकाशा तप्तकाञ्चनभूषणाम्।
रक्ताम्बरधरां बालां नीलकुञ्चितमूर्धजाम्॥

यु० ११८।३॥

मृगमारीचस्य रूपाङ्कनन्तु अनया दिशा अतीव मनोहारि—

स तु रूपं समास्थाय महदद्भुतदर्शनम्।
मणिप्रवरशृङ्गाग्र सितासितमुखाकृतिः॥
रक्तपद्मोत्पलमुख इन्द्रनीलोत्पलश्रवाः।
किञ्चिदभ्युन्नतग्रीव इन्द्रनीलदलाधरः॥
कुन्देन्दुवज्रसंकाशमुदरं चास्य भास्वरम्।
मधूकनिभपार्श्वश्च कञ्जकिञ्जल्कसंनिभः॥
वैदूर्यसंकाशखुरस्तनुजङ्घः सुसंहतः।
इन्द्रायुधसवर्णेन पुच्छेनोर्ध्वं विराजित॥

अर० ४२।१५–१८॥

अतः परं 'रौप्यैर्बिन्दुशतैश्चित्रः[१]' 'राजीवचित्रपृष्ठः[२]' 'रुचिरदन्तोष्ठम्[३]', 'जाम्बूनदमयत्वचि[४]' 'काञ्चनरोम्णा[५]' इत्यादिविशेषणैस्तस्य हेममृगस्य रूपमुद्भासते। अद्भुतदर्शनोऽयं मृगो यदा विजृम्भते तदा तन्मुखान्निःसरन्ती जिह्वा चपलेव विद्योतते—

पश्यास्य जृम्भमाणस्य दीप्तामग्निशिखोपमाम्।
जिह्वां मुखान्निःसरन्तीं मेघादिव शतह्रदाम्॥

अर० ४३।२८॥

---

१. अर० ४२।२२ २. अर० ४२।२४ ३. अर० ४२।३३
४. अर० ४३।२० ५. अर० ४३।२२

आदिकवेर्विम्बशिल्पं लोकोत्तरतां भजते। तस्य काव्ये सर्वत्र स्वर्णिमद्युतिर्विराजते। तस्य दिव्यकल्पनासु न केवलं मृगोऽपितु, वृक्षा–वन–रथ–अस्त्र–भवनादिः सर्वोऽपि परिवेषो हेममय एव। मयस्य माययोत्पादितं तपस्विन्या स्वयंप्रभया च परिरक्षितमृक्षगह्वरहर्म्यमिहोल्लेख्यं यत्र तरुणादित्यवर्णिनो वृक्षाः स्वर्णिमकुसुमस्तवकैर्हेमलताभिश्च सार्द्धं वैडूर्यमणिवेदिकासु नितरां दृश्यन्ते। बालारुणाभ्रैर्विशाल–काञ्चनवृक्षैस्तत्रत्यास्सरोवरा आच्छन्नाः सन्ति। तेषामन्तश्च कनकमया विपुलकायमत्स्याः कनककमलानि च शोभन्ते। तत्रत्यानि सर्वाण्यपि भवनानि रजतकनकमयान्येव। काञ्चन–निर्मितेषु तेषां गवाक्षेपु च मुक्तामयानि जालानि संग्रथितानि। नैतावता, तत्र भवनेषु स्वर्णराशयोऽपि यत्रतत्र विलसन्ति[1]। रामस्य क्रोधेन भीतः सागरः स्वयं मूर्तिमान् सन् समुद्रमध्यादुत्तिष्ठन् प्रतीयते यत् 'महाशैलस्य सुमेरोः एकभागादुदयाचलात् सूर्य उदेति'। स्निग्धवैडूर्यमणिरिव तस्य वर्णः दीप्ताननैः नागैः परिवृतः, स आसीत्। तस्य शिरसि अनेकविधकुसुमग्रथिता दिव्यमाला सुशोभिता आसीत्। रक्ताम्बरैः सः परिवेष्टितः। कण्ठे अपरा रक्तमाला अङ्गेषु च प्रदीप्ताभरणानि। अतो बहुविधधातुभिरलङ्कृतो हिमवानिव[2] सः प्रतिभासते स्म। एवमेव समुद्रमुल्लङ्घयतो हनूमतो विश्रमार्थं मैनाकः सागरमध्यादुदेति तदा स 'शस्त्राभं नीलाकाशं स्वादित्यवर्णिस्वर्णिमोत्तुङ्गशिखराणां प्रभापुञ्जैः रेखाङ्कितमिव कुर्वन् सूर्याणां शतमिव' प्रतीयते[3]।

चित्रकूटस्थाः शिलाखण्डास्तु नील-पीत-श्वेतारुणाः सन्ति[4] एव, तस्य प्रदेशा अपि बहुवर्णिनः—

केचिद्रजतसंकाशाः केचित्क्षतजसन्निभाः।
पीतमाञ्जिष्ठवर्णाश्च केचिन्मणिवरप्रभाः॥
पुष्पार्ककेतकाभाश्च केचिज्ज्योतीरसप्रभाः।
विराजन्तेऽचलेन्द्रस्य देशा धातुविभूषिताः॥ अयो० ९४।५-६

---

१. किष्कि० ५०।२६–३७ २. युद्ध० २२।१७–२१

३. सु० १।१०८–१०९ ४—अयो० ९४।२०

स्वर्ण–रजत-ताम्रवर्णाभिः धातुभिः सुशोभिता पञ्चवटी शृङ्गार-रचनालङ्कृतो हस्तीव शोभते—

सौवर्णै राजतैस्ताम्रैर्देशे देशे तथा शुभैः।
गवाक्षिता इवाभान्ति गजाः परमभक्तिभिः॥

अर० १५।१५॥

ध्यातव्यमिदं यद् वाल्मीकिः एकस्यैव वस्तुनः सूक्ष्मवर्णभेदान् एकत्रोपस्थापयति। तद्यथा सुवर्णस्य सूक्ष्मरूपाण्युद्भासयितुं स शातकुम्भ–जाम्बूनद-काञ्चन-जातरूप शब्दान् समाहरति[1]। तथैव बहुविधाम्बुजप्रतीतये एकत्रैव नीलोत्पल– रक्तोत्पल-कुमुद–पद्मानि समायोजयति। अत एव तु पम्पासरसी बहुवर्णा कुथेव राजते—

पद्मसौगन्धिकैस्ताम्रा शुक्लां कुमुदकुड्मलैः।
नीला कुवलयोद्घाटैर्बहुवर्णा कुथामिव॥

अर० ७५।२०

पराक्रमशालिना वानरयूथपाना दीर्घपुच्छेषु विविधवर्णाः ताम्रपीत-सित-श्वेताः रोमराजयो दिनकर किरणा इव प्रतिभान्ति[2]। न केवलं लाङ्गूलरोमराजय एव विचित्रवर्णा अपितु, वानरसेनायाः कपियूथान्यपि बहुवर्णानि—

तरुणादित्यवर्णैश्च शशिगौरैश्च वानरैः।
पद्मकेसरवर्णैश्च श्वेतैर्मेरुकृतालयैः॥

कि० ३९।१३॥

यदा अपमानतापदग्धा शूर्पणखा तत्प्रतीकारप्रेरणाय रावणमुपागमत् तदोत्तमस्वर्णासनमासीनो राक्षसेन्द्रस्तथैवाशोभत यथा हेमवेद्यां स्थापितोऽग्निर्घृताहुतिभिर्ज्वलन्नराजत—

आसीनं सूर्यसंकाशे काञ्चने परमासने।
रुक्मवेदिगतं प्राज्यं ज्वलन्तमिव पावकम्॥

अर० ३२।५॥

---

१—सु० १।१०५
२—य० २७।२

सूर्य–स्वर्ण–अग्नीनां सवर्ण आदिकवये समधिकं रोचते। दृश्यतां रावणेनापह्रियमाणायाः सीताया रूपदीप्ति —

तप्ताभरणवर्णाङ्गी पीतकौशेयवासिनी।
रराज राजपुत्री तु विद्युत्सौदामिनी यथा॥
तस्याः कौशेयमुद्धूतमाकाशे कनकप्रभम्[1]।
बभौ चादित्यरागेण ताम्रमभ्रमिवातपे॥

अर० ५२।१४ तथा १६॥

इह तप्तकाञ्चन–पीतकौशेय–विद्युत्–सूर्य प्रकाशाणां सवर्णता संश्लिष्टा सूर्यप्रकाशोपरक्तस्य मेघस्य ताम्राभ्रवर्णता चापि उपमिता।

कविना श्वेतपीतयोर्मनोहारी संश्लेषोऽपि प्रस्तूयते। अनया दृष्ट्या अशोकवनिकाया सीतामनु-कूलयितुं गच्छतो रावणस्य चित्रमवलोकनीयम्–

दीपिकाभिरनेकाभिः समन्तादवभासितम्।
मथितामृतफेनाभमरजोवस्त्रमुत्तमम्॥

सु० १८।२२ व २४॥

रत्नखचितायाः कनकमय्या लङ्काया गोपुरशृङ्ग-मधिष्ठितं राक्षसेन्द्रं रामो ददर्श। तदानी स श्वेतरक्त-कृष्ण-पीतद्युतिभिरुद्भासित आसीत्। तस्य पार्श्वयोः उभे श्वेतचामरे, शिरसि छत्रम्, शरीरे रक्तचन्दनलेपः, अङ्गेषु बहुविधरत्नाभरणानि, स्वर्णसूत्र–पिनद्धं शशरुधिररागवद्रक्तं च वस्त्रम्, अत एव सान्ध्यातपाच्छन्नो मेघ इव स रराज[2] सम्प्रति रावणेन सह योद्धुमिन्द्रेण रामाय प्रेपितस्य रथस्य चित्रम्––

ततः काञ्चनचित्राङ्गः किङ्किणीशतभूषितः।
तरुणादित्यसंकाशो वैडूर्यमयकूबरः।

---

१. सूर्यप्रभेव शैलाग्रे यस्याः कौशेयमुत्तमम्।
असिते राक्षसे भाति यथा वा तडिदम्बुदे॥ किष्कि०५।८१७॥

२. युद्ध ४०।४–६।

सदश्वैः काञ्चनापीडैर्युक्तः श्वेतप्रकीर्णकैः ॥
हरिभिः सूर्यसंकाशैर्हेमजालविभूषितैः ।
रुक्मवेणुध्वजः श्रीमान् देवराजरथो वरः ॥
सु० १०२।१०–११ ॥

स्वतन्त्रश्वेतवर्ण विन्यासेऽपि वाल्मीकिः प्रभवति । शंखक्षीर-मृणालवच्चन्द्रः आकाशे तथैवोदेति यथा सरोवरे कश्चिद्धंसस्तरति—

शंखप्रभं क्षीरमृणालवर्ण—
मुद्गच्छमानं व्यवभासमानम् ।
ददर्श चन्द्रं स कपिप्रवीरः
पोप्लूयमानं सरसीव हंसम् ॥ सु० २।५८॥

श्वेतवर्णस्येदं बिम्बनमतीव सरल स्वाभाविकञ्च । श्वेतवर्णस्य संरचनायाम् अधिकतरं कल्पनाप्रावीण्यं त्रिजटायाः स्वप्नवृत्तान्ते उज्जृम्भते ।

गजदन्तमयीं दिव्यां शिबिकामन्तरिक्षगाम् । सु० २७।६
... .. ... ...... . . ...............
क्षीरोदधिजले मध्ये श्वेतः शैलः समुत्थितः ।
तस्य मूर्ध्नि ततः श्वेतश्चतुर्दन्तो महागजः ॥
सु० २७।१६ ॥

इत्थम्, साम्प्रतिके स्वर्णस्यातीव महार्घेऽस्मिन्युगे अविश्वसनीयमपि नियतत्वेनेह निष्कण्टु शक्यते यद् वाल्मीकेर्वर्णयोजनायां तत्काव्यार्थस्यालौकिकत्वमुत्कृष्टत्वञ्चोद्गातुमिव काञ्चनमतिवर्तते । तदनु आदित्यवर्णोत्कर्षं आदिकाव्यस्य सार्वकालिकं महत्त्वमुद्घोषन्निव सराजते । पश्चाद्रक्तवर्णस्य विविधभेदाः प्रस्फुरन्ति । अनेकवर्णानां संश्लिष्टचित्रोपस्थापने तु कविविशेषेण प्रभवति । मयूक-गजदन्त-मथितदुग्धफेन-शशरुधिरादि प्रयोगाः क्वाचित्का अपि वर्णविन्यासदृष्ट्या नवीनत्वेनोद्भावनीयाः ।

संस्कृत-प्राध्यापकः
महाराज-महाविद्यालये
छतरपुरम् ( म० प्र० )

# सूत्रधार एको वा द्वावपि वा

## ओमप्रकाश राजपाली

नाट्यशास्त्रे मुनिना भरतेन वर्णितं पूर्वरङ्गस्वरूप मुपलब्ध-नाटकेषु सर्वथा प्रतिबिम्बित नास्ति। भवितव्यमत्र केनचित्कारणेन। प्रथमं तावत्पूर्वरङ्गस्य परिधिरेव विवादगतः। अथैकत्र भरतेनोदितं यत्पूर्वरङ्गस्यावश्याङ्गभूता नान्दी प्रयोज्य नान्याङ्गविस्तारे व्यर्थः श्रमो विधेय इति।[1] नाटकेषु नान्दी दृश्यत सदा प्रयुज्यत एव। इदमपि दृश्यते यत्पूर्वरङ्गस्याङ्गभूता प्ररोचना ऽप्रस्तावनायामन्तर्वभूव इति। कुत इयं परम्परा समुद्गतेति न निश्चितम्।

प्रस्तावनायाः प्रस्तावयितुः सूत्रधारस्य प्रश्नस्तत्राधिकं विचारमर्हति। नान्दी पठित्वा सूत्रधारो गच्छतु स्थापकः प्रविश्य काव्यार्थं स्थापयत्विति नाट्यशास्त्रे उक्तम्। स्वरूपतः वेषादितश्च सूत्रधार इवायं स्थापकः काव्य-स्थापनात्स्वसंज्ञामन्वेति।[2] अथ चायं स्थापको नाट्य-कथाभिव्यञ्जक-वेषभूषादिभियुक्ततया रङ्ग प्रविशेद्येन दर्शका नाट्यप्रकारमवगन्तु शक्नुयुरित्यपि भरतवचनम्। नाट्यकथायां दिव्यत्वे दिव्यम्, मर्त्यत्वे मानवीयम्, दिव्यादिव्यत्वे च दिव्यं मर्त्यं वा वेषादिकं कृत्वा प्रविशेदिति[3]। अत्र जायते प्रश्नः किं वस्तुतो द्वौ सूत्रधारौ भवेताम्, ययोरेकः पूर्वरङ्ग परश्च प्रस्तावनां प्रस्तावयेदिति। भरतेन सहैव परवर्त्तिनाट्यशास्त्रि-णोऽपि तथा स्वं स्वं मतं प्रकटयन्ति, यस्मात्प्रतीयते यदेते सूत्रधारं स्थाप-कनटादन्यं जनं स्वीकुर्वन्तीति। तद्यथा नाट्यशास्त्रे—

---

१. नाट्यशास्त्रं ५·१६२, १६३, १६४

· ,, ५·१७०

३. दिव्ये दिव्याश्रयोभूत्वा मानुषे मानुषाश्रयः।
दिव्यमानुषसंयोगे दिव्यो वा मानुषोऽपि वा॥
नाट्यशास्त्रम् ५।१७५

प्रयुज्य रङ्गन्निष्क्रामेत्सूत्रधारः सहानुगः ।
स्थापकः प्रविशेत्तत्र सूत्रधारगुणाकृतिः ॥[1] ना० शा० ५.१७२

यथा वा धनञ्जय.—

पूर्वरङ्गं विधायादौ सूत्रधारे विनिर्गते ।
प्रविश्य तद्वदपरः काव्यमास्थापयेन्नटः ॥ द० रू० ३'२

शारदातनयो वक्ति—

इत्थं रङ्गं विधायादौ सूत्रधारे विनिर्गते ।
तद्वन्नटः प्रविश्यान्यः सूत्रधारसमाकृतिः ॥ भा० प्र० १२६

विश्वनाथस्यमतमस्ति—

पूर्वरङ्गं विधायैव सूत्रधारो निवर्तते ।
प्रविश्य स्थापकस्तद्वत्काव्यमास्थापयेत्ततः ॥ सा० द० ६'२६

भरतकोशानुसारेण

'नान्द्यन्ते सूत्रधारो वा सूत्रधारगुणाकृतिरन्यो वा यो रङ्गं प्रविश्य प्रस्तावनां करोति स स्थापकः ।

नाटकलक्षणरत्नकोशे सागरनन्दिना स्पष्टमुक्तं यत्सूत्रधारः स्थापकश्च भिन्नाविति । तन्मतेन नान्दी सूत्रधार. पठति, नान्द्यनन्तरं च पुनस्तस्यैव प्रवेशः न युज्यते । अतस्तत्र तद्रूपानुगतस्यान्यस्यैव नटस्य प्रवेश. स्वीकरणीयः स च स्थापक इति कथ्यते ।[2]

उपर्युक्तविवेचनेन स्पष्टमायाति यन्नाट्यशास्त्रिणः प्रस्तावनाप्रस्तावयितुर्द्वित्वमामनन्ति । प्रथमः पूर्वरङ्गं प्रस्तौति, अपरश्च प्रस्तावनाम्, किन्त्वभिनवगुप्तेन सुस्पष्टमभिहितं यत्सूत्रधार एव स्थापकोऽपि भवति । यतः

---

१. अत्रेदं विचारणीयं यन्नाटकेषु तदैव सूत्रधारस्य प्रवेशः कार्यते यदात्र तस्य प्रस्थानमभिहितम्

२ नाटकलक्षणरत्नकोशे, पृ० ११४

स एव पूर्वरङ्गं प्रस्तूय पुनः स्थापकस्वरूपेण प्रविशतीति ।[१] एक एव जनः पूर्वरङ्गे सूत्रधार इति कथ्यते प्रस्तावनायां च स्थापक इति ।

तदेवं मतद्वयमत्र विषयेऽवलोक्यते । तत्र द्वितीयमभेदवादिमतमेव समीचीनम् । भिन्नत्वगतप्रथममताङ्गीकरणेऽपि उपलब्धनाटकेषु मतमिदं विसंवदति । ऐक्यं पुनः संवदति । प्रायशो नाटकेषु एक एव सूत्रधारो दृश्यते । कस्मिंश्चिदपि नाटके नैतदवलोक्यते यद्रङ्गपीठात्सूत्रधारस्य प्रस्थानान्तरं तत्स्थाने कश्चिदन्यो नरः प्रविश्य प्रस्तावनां प्रस्तौतीति । अतः "सूत्रधार एव स्थापकः ।" इत्यभिनवगुप्तस्य मतमेव युक्तम् । तद्यथा—सोमेश्वर-प्रणीत उल्लाघराघवनाटके एक एव जनः सूत्रधारः स्थापकश्चेत्युक्तः । स एव च प्रस्तावनामुपस्थापयति ।[२] तेन च स्थापकः सूत्रधारादभिन्न एवेति दिक् ।

अनुसन्धाता संस्कृतविभागे,
विश्वविद्यालयः सागरम् ।

---

१. सूत्रधार एव स्थापक इति सूत्रधारः पूर्वरङ्गं प्रयुज्य स्थापकः सन् प्रविशेदिति न भिन्नकर्तृकता ।

नाट्यशास्त्रम् ५.१७० अधिकृत्य वृत्तिः ।

२. उल्लाघराघवम्— (गायकवाड ओ० सीरीज ) पृ० १—२

# कालिदासीया दायव्यवस्था

कु० सुशीला वत्स, शोधछात्रा

'धर्मशास्त्रेषु दायविभाजनम्' इति विषयमधिकृत्य विचारे प्रवर्तमाने इयं स्वाभाविकी जिज्ञासा उज्जृम्भते यत् सामाजिकजीवनस्य दर्पणभूते साहित्ये दायव्यवस्थायाः किं स्वरूपम्? अतएव कालिदासस्य ग्रन्थेषु उपलब्धदायविषयकसन्दर्भान् अधिकृत्य 'कालिदासस्य काव्येषु विहिताया दायव्यवस्थायाः. स्वरूपं निरूप्यते।

कुमारसम्भवे, ऋतुसंहारे मेघदूते मालविकाग्निमित्रे च दायविषयक-संदर्भाः न प्रयुक्ताः केवलं रघुवंशे अभिज्ञानशाकुन्तले विक्रमोर्वशीये च दायविषयकसन्दर्भाः प्रयुक्ताः अत्र सर्वप्रथमं दायविभाजनस्य अवसर-सन्दर्भाः विचार्यन्ते। रघुवंशे 'वनं गते पितरि 'इति अयं दायविभाजनस्य अवसरः वर्णितः। यथा दिलीपेन रघोः राज्याभिषेकं कृतम्। तदा—

अथ स विषयव्यावृत्तात्मा यथाविधि सूनवे
नृपतिककुदं दत्त्वा यूने सितातपवारणम्।
मुनिवनतरुच्छाया देव्या तया सह शिश्रिये
गलितवयसामिक्ष्वाकूणामिदं हि कुलव्रतम्॥

तत्रैव राज्ञा नलेन नभसः[2], पुण्डरीकेण क्षेमधन्वनः[3] राज्याभिषेक-मपि वनगमनस्य इच्छया एव कृतम्।

विक्रमोर्वशीये अपि पुरूरवा ऊर्वशी विना राज्यलक्ष्या सुखमुपभोक्तुं नेच्छति। अतएव तेनापि कथितम्—

---

१—रघुवंशम् ३।७०।

२—रघुवंशम् १८।७।

३—रघुवंशम् १८।९।

न हि सुलभवियोगा कर्तुमात्मप्रियाणि
प्रभवति परवत्ता शासने तिष्ठ भर्तुः।
अहमपि तव सूनावेव विन्यस्य राज्यं
विचरितमृगयूथान्याश्रयिष्ये वनानि ॥[1]

अभिज्ञानशाकुन्तले महर्षिकण्वस्य आशीर्वचनेन अपि 'वनं गते पितरि' इति दायविभाजनस्य अवसरः परिलक्ष्यते। यथा—

भूत्वा चिराय चतुरन्तमही-सपत्नी
दौष्यन्तिमप्रतिरथं तनयं निवेश्य।
भर्त्रा तदर्पितकुटुम्बभरेण सार्धं
शान्ते करिष्यसि पदं पुनराश्रमेऽस्मिन् ॥[2]

कालिदासमधिकृत्य दायविभाजनस्य अपरः अवसरः 'उर्ध्वं गते पितरि' इति प्राप्यते। यथा रघुवंशे नभसः मृत्योरनन्तरं तस्य पुत्रः पुण्डरीकः राज्यलक्ष्मीमाप्नोति।[3]

कालिदासेन निर्धारिताभ्यां दायविभाजनस्य अवसराभ्याम् इदं प्रतिभासते यत् तेन पितुरिच्छा सर्वोपरि गणिता। यथा कैकेयीदत्तवचनेन दशरथेन रामः राज्यात् वञ्चितः कृतः।

कालिदासमधिकृत्य दायादक्रमे सर्वप्रथमं दायाधिकारी पुत्र वर्णितः। पुत्रेष्वपि ज्येष्ठपुत्रः वरीयस्त्वमाप्नोति। यथा रघुवंशे चतुर्षु भ्रातृषु रामः कुशादिषु सप्तभ्रातृषु च कुश. उत्तराधिकारे श्रेष्ठाशा राज्यलक्ष्मीमाप्नुतः। यथा—

---

४—विक्रमोर्वशीयम् ५।७०

५—अभिज्ञानशाकुन्तलम् ४।२०।

६—तेन द्विपानामिव पुण्डरीको राज्ञामजय्योऽजनि पुण्डरीकः।
शान्ते पितर्याहृतपुण्डरीका यं पुण्डरीकाक्षमिव श्रिता श्रीः ॥
(रघु० १८।८)

अथतेरे सप्त रघुप्रवीरा ज्येष्ठं पुरोजन्मतया गुणैश्च ।
चक्रुः कुशं रत्नविशेषभाजं सौभ्रात्रमेषा हि कुलानुसारि ॥[१]

पुत्राभावे गर्भवतीपत्नी उत्तराधिकारिणी वर्णिता । यथा

रघुवंशे अग्निवर्णस्य मृत्योरनन्तरं तस्य गर्भिणीपत्नी राज्यश्रियमाप्नोति । तत्र तस्याः गर्भस्य अभिषेकः कृत- ।[२]

अभिज्ञानशाकुन्तले दुष्यन्तेन मृतस्य धनमित्रस्य सम्पत्तेः स्वामिनी तस्य आसन्नप्रसवा पत्नी निर्धारिता । यथा दुष्यन्तेन कथितम्—

'ननु गर्भ- पित्र्यं रिक्थमर्हति ।'

अनेन स्पष्टमेव यत् कालिदासेन पत्नी दायाधिकारिणी स्वीकृता । अत्र शंका जायते यत् रघुवंशे तु स्पष्टमेव यत् अग्निवर्णस्य पत्नी दृष्टशुभगर्भलक्षणा आसीत् । पुत्रः तस्या गर्भे आसीत् । अतएव सा उत्तराधिकारिणी वर्णिता । परन्तु अभिज्ञानशाकुन्तले केवल 'गर्भ' इति पदप्रयोगेण ज्ञायते यत् सन्तति- उत्तराधिकारपात्रम् । पुत्रो वा पुत्री वा नास्ति कश्चिद्भेदः उत्तराधिकारग्रहणे । अन्ये सन्दर्भे एक एव गर्भः चर्चित- । बहुषु किं भवति इति नात्र निर्दिष्टम् ।

इत्थं कालिदासेन अभिज्ञानशाकुन्तले पुत्री अपि दायाधिकारिणी स्वीकृता । एषामभावे मृतस्यधनं राजगामि वर्णितम् । यथा अभिज्ञानशाकुन्तले अमात्येन मृतस्यानपत्यस्य धन राजगामि वर्णितम् । दुष्यन्तेनापि कथितम्—

"एवं भोः संततिच्छेदनिरवलम्बानां कुलानां मूलपुरुषावसाने संपदः परमुपतिष्ठन्ति ।" अत्र 'परम्' पदस्य प्रयोग 'अपरः दायाद- दायमाप्नोति' इति अर्थे कृत- । कालिदासीयदायव्यवस्था धर्मशास्त्रीयदायव्यवस्थया सह अधोवर्णितेषु स्थलेषु समतां धारयति—

---

१—रघुवंशम् १६।१ ।

२— तैः कृतप्रकृतिमुख्यसंग्रहैराशु तस्य सहधर्मचारिणी ।
साधु दृष्टशुभगर्भलक्षणा प्रत्यपद्यत नराधिपश्रियम् ॥
तस्यास्तथाविधनरेन्द्रविपत्तिशोकादुष्णैर्विलोचनजलैः प्रथमाभितप्तः ।
निर्वापितः कनककुम्भमुखोज्झितेन वंशाभिषेकविधिना शिशिरेण गर्भः ॥
( रघु० १९।५५, ५६ )

१—कालिदासस्य कृतिषु पितुरिच्छया वनगमने, ऊर्ध्वं गते च पितरि इमौ द्वौ दायविभाजनस्य अवसरौ वर्णितौ धर्मशास्त्रेषु अपि दाय-विभाजनस्य अवसरेषु इमौ अवसरौ गणितौ।[१]

२—कालिदासेन ज्येष्ठपुत्र. उत्तराधिकारी वर्णितः। धर्मशास्त्रेष्वपि विधानमिदं प्राप्यते, क्वचिच्च ज्येष्ठपुत्रः श्रेष्ठांशमुत्तराधिकारे प्राप्नोति इत्यपि कालिदासेन कूजितम्। धर्मशास्त्रेष्वपि एतादृशं विधानमुपलभ्यते।[२]

३—कालिदासमधिकृत्य पितुराज्ञा सर्वाधिका गणिता। यथा ज्येष्ठपुत्रः रामः पितुः दशरथस्य आज्ञायाः अभावे राज्यलक्ष्मी न प्राप्नोति। महा-भारते[३]अपि पितुराज्ञायाः अभावे ज्येष्ठपुत्रः यदुः राज्यलक्ष्मी न प्राप्नोति।

एकस्मिन् स्थले कालिदासीया दायव्यवस्था धर्मशास्त्रीयदाय-व्यवस्थायाः विषमा सिद्धयति। रघुवंशे मृतस्य अग्निवर्णस्य आसन्नपुत्र-प्रसवापत्नी उत्तराधिकारिणी स्वीकृता। अस्य अयं भावः यत् पुत्रस्य धनमाव्यवहारप्रापणात् मातुः संरक्षणे स्थापितव्यम्। परन्तु धर्मशास्त्रकारेण कौटिल्येन कथितम्—

'अप्राप्तव्यवहाराणां देयं विशुद्धं मातृबन्धुषु ग्रामवृद्धेषु वा स्थापयेयुरा-व्यवहारप्रापणात् प्रोषितस्य वा।'[४]

कालिदासेन विहितदायव्यवस्थया तस्य कालनिर्धारणं कर्तुमपि च शक्यते। धर्मशास्त्रकारेषु वशिष्ठेन सर्वप्रथम पत्नी उत्तराधिकारिणी स्वीकृता। कालिदासेन अपि पत्नीउत्तराधिकारिणी स्वीकृता। वशिष्ठस्य कालनिर्धारणं ६००–१०० ई० पू० कृतम्।[५] अतएव कालिदास. वशिष्ठस्य समकालीनः उत्तरकालीनः वा सिद्धयति। अनेन कालिदासस्य प्रायः स्वी-

---

१—दायभाग. ४७, गौतमधर्मसूत्रम् २८।१।

२—मनुस्मृतिः ९।११२।

३—महाभारतम् १।८५।१६–३१।

४—कौटिलीयमर्थशास्त्रम् ३।५।

५—धर्मशास्त्र का इतिहास ( भाग २ ) डा० पाण्डुरङ्ग वामन काणे।

कृतः कालः प्रथमशतीख्रीष्टपूर्वः पुष्यते । अतश्च दायमधिकृत्य कालिदास-मतेन—

१—पितुरिच्छामनुसृत्य दायविभाजनं भवति ।

२—दायाधिकारः प्रायः ज्येष्ठपुत्रस्य भवति ।

३—सन्ततीनामभावे गर्भिणीमाता दायमधिकरोति । पुनश्च कालिदासस्य दायविभाजनसन्दर्भान् दर्शं दर्शं तस्य स्थितिं ख्रीष्टजन्मतः शतवर्षाणि पूर्वमेव पोषयामः ।

संस्कृत-विभागे

मेरठ विश्वविद्यालयः, मेरठम्

●

## सप्तदश शताब्दिकसंस्कृतमहाकाव्यानि

श्री रामलखन पाण्डेयः

### जानकी परिणयः

चक्रकविप्रणीतं जानकीपरिणयाख्यं महाकाव्यं १९३३ ई० वर्षे गणपतिशास्त्रिणा त्रिवेन्द्रम्-संस्कृत-ग्रन्थमालायाश्चतुर्विंशे क्रमाङ्के प्रकाशितम् । अत्र प्रकाशकः कविपरिचयं लिखति—

"अस्य जानकीपरिणयनाम्नः काव्यस्य प्रणेता अम्बालोकनाथ सुधियो सूनुर्निखिलसामनिगमवेदिनः श्रीरामचन्द्रस्य पिता चक्रकविर्नामेति, उपनयात्प्रभृति कवित्वमस्य समुल्लसितमासीदिति । अस्य काव्यं पाण्ड्यभूपति-केशवनीन्द्र-नीलकण्ठाध्वरिभिर्भृशं श्लाघितमिति, अनेनान्ये द्वे काव्ये

रुक्मिणीपरिणयपार्वतीपरिणयाभिधाने निर्मिते इत्येतावदेतत्काव्यसर्गान्तिक-पद्यांशेभ्यो ज्ञायते ।[1]

रुक्मिणीजानकी गौरी द्रौपदी परिणीतयः ।
कृतयो यस्य तस्यैषा कृतिश्चक्रकवेः शुभा ॥

इति चित्ररत्नाकरस्य शब्दचित्रपरस्यारम्भे कथनात् चित्ररत्नाकर-द्रौपदीपरिणयावपि चक्रकविना प्रणीतावित्यवगम्यते । अत्र परामृष्टो नीलकण्ठाध्वरी सुप्रसिद्धः शिवलीलार्णव-नीलकण्ठविजयादिकर्त्ता संभाव्यते । तेन तत्सकालोऽयं चक्रकविर्भवन् खीस्ताब्दीय-सप्तदशशतकस्य पूर्वार्धे स्थित इति शक्यमुन्नेतुम् ।"

जानकीपरिणये रामस्योत्पत्तितो विवाहं यावत् रामायणी कथा वर्णिता । अत्राष्टौ सर्गा मर्यादितश्लोकसंख्याका विलसन्ति । प्रथमसर्गस्यादिमानि पञ्चविंशतिपद्यानि काव्यामुखत्वेनोपयुक्तानि । तथा हि अयोध्यायां नृपतिर्दशरथो राजन्यगुणरत्नाकरो निदर्शितः । सर्गोत्तरार्धे तस्य सन्तति-विषयिणी चिन्तामुद्भाव्य तदुपायभूतस्य पुत्रेष्टियजनस्योपक्रमः प्रस्तावितः । तदत्र प्रसङ्गागतं वस्तु वक्तुं रावणाकुलितदेवानां वैकुण्ठोपगमनवर्णनेन सर्गः पूर्यते । अनुष्टुब्भिरपि सर्गेऽस्मिन् काव्यसौन्दर्यं युक्तमाविष्कृतम्—

---

१–( क ) यं सूनुं जनयांबभूव महितः श्रीलोकनाथः सुधीः ख्यातं चक्रकविं सतीसमुदयैः सम्मानिताम्बाभिधा । यत्पुत्रो भुवि वेत्ति साम-निगम श्रीरामचन्द्रोऽखिल... ...८-६६ ।

( ख ) सावित्र्या सममेव यं श्रितवती वाग्देवता सादरम्— ३. ६६ ।

( ग ) पाण्ड्यमहीभुजा बहुमते नव्ये तदीये महाकाव्ये—२. ७४ ।

( घ ) चेरावनीवासवश्लाघसीमनि—४. ७० ।

( ङ ) श्रीनीलकण्ठाध्वरिश्लाघसीमनि—६. ७६ ।

( च ) रुक्मिणीपरिणयभ्रातरि—५. ७१ ।

( छ ) पार्वतीपरिणयभ्रातरि—७. ८० ।

यत्र कान्ता रतिश्रान्ता सौधेपूच्चेष्वनुक्षपम् ।
शयानाश्चन्द्रिकां सान्द्रां सेवन्तेऽनन्यसेविताम् ॥ ३१ ॥
...स कोसलेन्द्रसुतां तनयां केकयस्य च ।
पुत्रीं च मगधेन्द्रस्य सपत्नीमकरोद्‌भुवः ॥ ५९ ॥

द्वितीये सर्गे पूर्वोपक्षिप्तं वस्त्वेव प्रायेण वितन्यते। तदेतदवान्तर-वस्तुविन्यासोऽत्र काव्ये रसनिर्भरां प्रकरणवक्रतां साधयति। प्रथमं समुद्र-मुपवर्ण्य देवैर्विहिता शेषशायिनो नारायणस्य स्तुतिर्विनिवेशिता। अथ देवतामुखाद्रावणस्योपप्लवं श्रुत्वा विष्णुस्तदुपशमविधौ भाविनं स्वावतारं संकेतयति। ते च देवा विष्णोराज्ञया भूमौ वानरकुलेषु समजायन्त। सर्गान्ते पुन. पुत्रेष्टियज्ञस्योल्लेखनमनु राजमहिषीणां गर्भधारणं सूचितम्। प्रथमसर्गादुद्‌गतं काव्यसौन्दर्यं सर्गेऽस्मिन् क्रमेण गाढतामुपयाति। तद्यथा विष्णुवर्णनम्—

फणीन्द्रनिःश्वासमरुत्तरङ्गैः प्रतिक्षणक्षिप्तकुचोत्तरीयाम् ।
वक्षःस्थलस्थां कमलां कटाक्षपरम्पराणां पदमादधानम् ॥ १९ ॥
उरस्तटे कौस्तुभनामधेयमम्भोधिवर्तं मणिमुद्वहन्तम् ।
अधीतकाठिन्यमिवाब्धिकन्यापयोधराभ्यां परिरम्भणेषु ॥ २० ॥

यथा वा तद्वचोगतम्—

इतीरिते खेचरमण्डलीभिर्मुखान्मुरारेरजनिष्ट वाणी ।
यथारविन्दान्मकरन्दधारा यथा सुधा मण्डलतः सुधांशोः ॥ ५३ ॥

तृतीये सर्गे दोहदवर्णनादारभ्य रामलक्ष्मणयोर्विश्वामित्रेण सह वन गमनं यावत्कथा विन्यस्ता। एकैकेषु श्लोकेष्वत्र कविकल्पना विलसति। क्वचित्पुनः साधारणमेव वस्तु ऋजुकं वितन्वन्नपि कविस्तथागतं सामान्यार्थ-मेव कयाचिदभिनवसमाख्यया मण्डयति। तद्यथा दोहदकाले दम्पती—

प्रियां निजोत्सङ्गभुवो विभूषणं विधाय पप्रच्छ तदीप्सितं नियः ।
समुन्नमय्य त्रपया नतं मुखं मुदा समाघ्राय च नैदिनीश्वरः ॥ ५ ॥
तदक्षरं शोकहरं सुखावहं मनोवचोगोचरतामनाश्रितम् ।
भवत्प्रसादान्मयि वस्तु वर्तते किमर्थयेऽन्यद्दयदनोक्षां विनो ॥ ६ ॥

इति ब्रुवाणामभिनन्द्य वल्लभां चुचुम्ब मृद्गन्धि तदीयमाननम् ।
तदुक्तिसारं च सुधी पदे पदे विनिःसरन्तं तरसा लिहन्निव ॥ ७ ॥

यथा वा दशरथस्य सविनया स्पष्टवादिता—

न दीयते वत्स इति त्वदग्रतो बिभेमि वक्तुं तदये मुनीन्द्र मे ।
स्वयं विदित्वाशयमत्र दारके दयस्व लब्धे विविधैर्व्रतैर्मया ॥ ५६ ॥

चतुर्थे सर्गे मिथिलाधिगमनं यावद्वस्तु विवेचितम् । द्वितीयसर्गे कृतं समुद्रवर्णनं यथा भाविवस्तुविषयस्य विष्णोः पराक्रमस्य परिधिनिनिर्मुक्तता व्यंजयति, तथैवात्र मिथिलोन्मुखमार्गे विश्वामित्रमुखादुद्गता गङ्गाकथापि भाविवस्तुव्यापिन्याः सीतायाः पावनतां प्रकाशयति । परिणयादिगतविषयमुख्यत्वानुरोधेन यज्ञविधिदुष्कृतां रक्षसां विनाशस्त्वत्र लघुकं वर्णितः—

अथ राघवोऽध्वनि निरीक्ष्य राक्षसी प्रजिहीर्षयोद्यतभुजाग्रमायतीम् ।
दहता शरेण यमदण्डचण्डतां जगदापदा सह निनाय तां क्षयम् ॥१८॥

रघुनन्दनः समतनोन्निशाचरीकदनं प्रयासलवमन्तरेण यत् ।
समशिश्रियत्सपदि पूर्वरङ्गतां क्षणदाचरोन्मथननाटकस्य तत् ॥१९॥

पञ्चमे सर्गे मिथिलावासिनां मुखेन रामलक्ष्मणयोर्विस्मयविमुग्धकारि सौन्दर्यवर्णनं प्रारभ्य धनुर्भङ्गं यावत् कथा लभ्यते । धनुर्भङ्गे सति तत्रागतसीतायाश्च सौन्दर्यं प्रपञ्चितम् । षष्ठसर्गीयकथानुसारेण दूतमुखात् जनकसन्देशं विदित्वा दशरथः सावरोधः ससैन्यः सबन्धुवर्गश्च सोल्लासं मिथिलां प्रत्यचलदिति मार्गवर्णनेन सर्गोऽयं सम्पूरितः । प्रारम्भे दूतस्यावधपुरीप्रयाणे वसन्तो वर्णित । अत्रवपुरवासिनां मिथिलापथे श्रमापनोदनां रात्रिमवतार्य तत्प्रसङ्गतः सूर्यास्तस्य चन्द्रोदयस्य स्मरमहोत्सवस्य च माधुरी समुद्भाविता । तत्र स्मरोत्सववर्णने यौवतस्य मधुसेवनम्, मत्तालपितम्, अक्षिविघूर्णनम्, आलिङ्गनं तदग्रिमं च पर्याप्तं स्वविषयीकृतम्—

चषकमिन्दुमुखीवदनाभिधं मणिमयाच्चषकादपि कामिनाम् ।
अधिकमिष्टममून्मधुसेवने न किमकृत्रिमकृत्रिमयोर्भिदा ॥ ५७ ॥

रतिपतेरपि विस्मयकारि यद् विटजनैरपि यन्न विचारितम् ।
कविगिरां च न यत्खलु गोचरस्तदुदभूद् वनिताभिकयोरतम् ॥६५॥

विषमसायककेलिषु भूषणैर्विगलितै रहितं कुटिलभ्रुवाम् ।
नखपदैः कमितुर्दशनक्षतैरखिलमङ्गमशोभत भूषितम् ॥७३॥

सप्तमे सर्गे तदीययात्रागतवैतालिकमुखेन सूर्योदयं चित्रयित्वा तेषां दशरथादीनां क्रमेण मिथिलाधिगमनं निरूपितम् । अथ जनकादिभिस्तदातिथ्यमुपपाद्य परिणयः प्रपञ्चितस्तत्र—

विभावसौ प्रज्वलिते समद्गिममुंमोच लाजावलिमुत्पलाक्षी ।
सघातुरागे चरमाद्रिसानौ प्रभातवेलेव घटामुडूनाम् ॥७२॥
स्फीतानि गीतानि तदुत्सवर्द्धिशंसीनि पङ्केरुहलोचनानाम् ।
वधूवरौ कर्णपुटैः पिबन्तौ दोलाविहारं सुखमन्वभूताम् ॥७६॥

अष्टमे सर्गे वधूभिरुपशोभितेन कुमारवर्गेण सह दशरथादीनामयोध्यानिवर्तनं निरूप्य रामादीनां परिणय फलं सौख्यं व्यक्तीकृतम् । सर्गेऽस्मिन् मिथिलामार्गे समापतितस्य परशुरामस्य क्रोधस्तदुपशमश्चान्तभूतौ—

अग्रतोऽथ विकटभ्रुकुटीकः प्रादुरास धृतघोरशरासः ।
भार्गवः परुषरोषकठोरः क्षत्रियक्षतिपटिष्ठकुठारः ॥१०॥

इत्येवं चक्रकवेः कृतिरियं महाकाव्यत्वगुणसंवलिता नैसर्गिकसौन्दर्येण सहृदयानां हृदयं नूनमावर्जयति । नैकधा विवेचितमपि विषय कविरसौ कुतश्चित्तथावैलक्षण्येन समुद्भावयति यत्पूर्वतो विश्रुतमपि वस्तु स्वकीयमभिनवसौन्दर्यमाविष्कृत्य धन्यतामुपैति । काव्येऽत्र समाश्रिताः प्रतिपदमर्थालङ्काराः सर्वथा रसेष्वेव पर्यवसीयन्त इत्यस्यापरो विशेषः । शब्दालङ्कारास्त्वत्र विरल एव । काव्यगतिश्चाद्यन्तं मनो मोदयते । आदिकविकाव्यपथानुगामी कविरिह तत्काव्यक्षौमस्य स्वकाव्यवल्कलस्य सभावयति—

वाल्मीकेरिव वाचं मे वाचमङ्गीकरिष्यति ।
राम- क्षौममिवावस्त कदाचिद्वल्कलं न किम् ॥ १-२५ ॥

## भूवराहविजयम्

भूवराहविजयं नाम महाकाव्यं सप्तदशशतकस्य श्रीनिवासस्य कृतिः । दक्षिणभारते समुद्भूतःसुकविरयं प्रतिसर्गान्तश्लोकेषु स्वस्य स्वपितुश्च

नामोल्लेखं करोति[1]। अधुनाप्यमुद्रितं प्रकृतमहाकाव्यं हस्तलिखितं गवर्नमेन्ट ओरियान्टल मैनुस्क्रिप्टस् लाइब्रेरी, मद्रास, ग्रन्थाङ्कः आर० ५२१३' इत्यत्रोपलभ्यते। एतदुपलब्धादर्शपुस्तकस्यान्ते "श्रीभूवराहविजयकाव्यं सम्पूर्णम्"-इत्यस्ति पूर्णतावाचकं वाक्यमुल्लिखितम्। परं विषयवस्तुदृशा नूनमपूर्णमेवेदम्। अत्राष्टौ सर्गाः प्राप्यन्ते। पदपाठत्रुटिस्तु प्रायेण प्रतिपृष्ठमस्ति।

## कथावस्तु

पूर्वाम्बुधेः पश्चिमतीरे श्रीमुष्णनाम्नी नगरी चकास्ति। तदुत्तरस्यां दिशि वेतापगाप्रवहति दक्षिणस्यां च सह्यात्मजा। नगरी काव्यापेक्षित सम्पत्तिं वितनोति। कदाचिन्नारदो वीणां वादयंश्चरंश्च भूलोकस्यास्मिन् प्रदेशे समागतः। स महानदी नाम नदी कीर्तयन्नग्रे वृद्धगिरिं व्यलोकयत्। तमारुह्य सानुगतश्चासौ तत्रत्यशंकरं सप्रणाममपृच्छत् "कैलासं त्यक्त्वा किमर्थं भवानिह वसती" ति। शंकरस्त्वेतदुदतरत्—

कदाचिद् ब्रह्मणो वरप्रसादमधिगम्य हिरण्याक्षो रसातलस्य राजा बभूव। एकदासौ क्रुद्धमनाः पृथिवीं रसातले नीतवान्। भीताश्च देवाः ब्रह्माणं निवेदिवन्तः। ब्रह्मणो दक्षिणनासिकापुटादुद्गतं तेजो वराहरूपमासाद्य हिरण्याक्षं च हत्वा पृथिवीं रसातलादुद्धार। किन्त्वसौ हिरण्याक्षः वराहेण सह पुनः योद्धुकामः दितिगर्भादुद्भूय पुनरपि पृथ्वीं रसातलमनयत्। देवैराराधितो नारायणः पुनरपि महावराहरूपमाधृत्य हिरण्याक्षं च संहृत्य महीमुद्धृतवान् देवादिवन्दितश्चासौ महावराह एतस्मिन्नेव भूभागे स्वेदजलेन पुष्करिणीं निर्माय स्त्रवाष्पेण चाश्वत्थतरुमुत्पाद्य चिरं तन्मूले पृथिव्या सह व्यरंसीत्।

हिरण्याक्षस्य पुत्री झिल्लिका आसीत्। झिल्लिकाया द्वेऽपि कन्ये शुक्ला कृष्णा चेत्याख्यया नद्यौ बभूवतुः। तेन संततिविरहिता झिल्लिका

---

१—वीरवल्लिवरदार्यतनूजश्रीनिवासकविकेसरिणोक्ते।
भूवराहविजयाभिधकाव्ये शोभनः प्रथमसर्ग इहासीत्॥

तपसा दण्डकनामधेयं पुत्रं प्राप्तवती । कालान्तरे रक्षसा संहारक्रमे विष्णुः झिल्लिकायाः पतिं जघान। तस्याः पुत्रस्तु महापराक्रमी विष्णुप्रियश्च गङ्गानाम्नि नगरे वसतिं चकार। कदाचिन्मेरुगुहान्तरस्थाः स्वरूपेण कर्मणा च मुनित्वमुपगताः झिल्लिकायाः केचन बान्धवा इन्द्रभयादत्र समागताः। इन्द्रो दण्डकेन सह तदसुरवर्गं युद्धे जघान। पुत्रविरहितां झिल्लिकां च समश्वासयन्नारायणस्तस्याः पुत्ररूपेणात्र प्रदेशे न्यवसत्, धवलवराह-नाम्ना च ख्यातिं जगाम ।

तदैव कात्यायनो नाम मुनिर्बभूव। क्रुद्धस्य स्वगुरोरादेशादसौ तच्छ्रुतं तत्याज। सूर्यसकाशाच्च श्रुतिविद्यामवाप्य शुक्लयजुर्वेदमरचयत्। तेन प्रसन्ना लोकमाता कात्यायनस्य कन्यात्वं गता। सा कन्या कदाचित्सखिभिः सह कन्दुकं क्रीडति स्म। धवलवराहनामा मुकुन्दस्तस्यामनुरक्त आसीत्। स क्रीडास्थलमुपेत्य तां कन्यामाश्लिष्य कन्दुकं चोरयित्वा पलायितः। सा कन्यापि तद्रागानुबद्धहृदया विव्यथे कालान्तरे तयोर्विवाहः संजातः। विविधोत्सवादिभिश्च तौ दंपती एतस्मिन्नेव मुष्णधामनि चिरं सुखेन न्यवसताम् ।

काव्यकला—

सर्गादिकतिपयमहाकाव्यसामान्यलक्षणानुबद्धं काव्यमिदं साधारण-कोटिकमेव काव्यीयसौन्दर्यमाविष्करोति। तद्यथा—

> अग्रे सरैर्द्राविडवेदकोटिपारायणस्थैरभिसेव्यमानः ।
> पश्चात्पुनर्वेदचतुष्टयस्य पारायणस्थैरभिसेव्यमानः ।। ८.१४ ।।

वस्तुत इष्टदेवानुकीर्तनमेवात्र कवेरभीष्टम् नात्र काव्य-विलासः प्रचुरः।

> ये सज्जनास्ते विषयप्रभावाज्जडस्य वाक्यान्यपि लालयन्ति ।
> श्रीरङ्गरङ्गेति मुहुर्वदन्तं शुकं जनो मूर्ध्नि करे च धत्ते ।। प्र० सर्गः ।।

तथापि विषयवस्तूद्भावयितुं सरलः पन्था अत्र स्वीकृतः रुचिकर एव। तद्यथा युद्धार्थमागतस्येन्द्रस्य तद्विरोधिनो दण्डकस्य चालपितम्—

अये स्वकीयैः सह शीघ्रमेव विन्ध्याचलं गच्छ न चेन्निहन्मि ।
सोऽप्येनमुद्वीक्ष्य सुरेशदासैः को वापराधः कृत इत्युवाच ।।
इन्द्रो रुषा तं कटु वीक्ष्य मूर्खं स्वायुक्तकारित्वमिहापराधः ।
विष्णवर्चनश्रीरसुरेष्वयुक्तेत्युच्चार्य तन्मस्तकमच्छिनच्च ।। तृ० स० ।।

[ क्रमशः ]

शोधछात्रः
संस्कृत विभागः
सागरविश्वविद्यालयः

# आद्यशंकराचार्यस्य तर्कगवेषणा

गणेशीलालः सुथारः

भगवता शङ्कराचार्येण वेदान्तवाक्यसमन्वयैकप्रयोजनेन श्रीब्रह्मसूत्रादिव्याख्यायां संप्रवृत्तेन तर्क उपात्तो न वा, यद्युपात्तस्तर्हि तदुपादानस्य कीदृशी मर्यादा निर्धारितेति विमर्शमर्हति, यतो हि श्रीमच्छङ्कराचार्यादयोऽद्वैतिन आगममात्रानुयायिनस्तर्कविरोधिन अत एव अपरीक्षका इतीयं भ्रान्तिर्विजृम्भते। न भवेदियं भ्रान्तिः स्वतन्त्रप्रज्ञेषु। परतन्त्रप्रज्ञेषु सांख्यादिस्मृतिव्यपाश्रयिषु तु विद्यत एव। "तर्कावष्टम्भेन चैतेऽर्थं प्रतिष्ठापयन्ति। तस्मादपि (सांख्यादि) स्मृतिबलेन वेदान्ता व्याख्येया इति पुनराक्षेपः[1]।" इत्येवं विध माक्षेपमुपन्यस्य स्वयं भगवता शङ्कराचार्येण भ्रान्तिरियं सङ्केतिता। प्रथमं तावदेतत् स्पष्टमवगन्तव्यं यच्छङ्कराचार्यानुसारेण तर्को युक्तिः, युक्तिश्चार्थापत्तिरनुमानं वा प्रमाणमेव। अत एव भामत्यां वाचस्पतिमिश्रेण भाषितम्—"अनुमानं वेदान्ताविरोधि तदुपजीविचेत्यपि द्रष्टव्यम्। शब्दाविरोधिन्या तदुपजीविन्या च युक्त्या विवेचनं

१—ब्रह्मसूत्रभाष्यम्, २, १. १.

मननम्। युक्तिश्च अर्थापत्तिरनुमाननं वा"।[१] अतो न्यायदर्शनाभिमतात् तर्कस्वरूपात् शङ्कराचार्यतर्किततर्कस्वरूपस्य स्फुटो भेद इति बुद्धौ संग्राह्यम्।

बादरायणव्यासेन सूत्रनिबद्धं वेदान्तशास्त्रं श्रुत्यैकसमधिगम्यं परमार्थतत्त्वं विविनक्ति। अतो न तत् तर्कप्रधानमनुमानप्रधानं वा तर्कशास्त्रम्। 'जन्माद्यस्य यतः'[२] इतीदं सूत्रं व्याचक्षाणेन श्रीमच्छङ्कराचार्येण वस्तुस्थितिरेषा विशदीकृता—"...वेदान्त वाक्यकुसुमग्रथनार्थत्वात् सूत्राणाम्। वेदान्तवाक्यानि हि सूत्रैरुदाहृत्य विचार्यन्ते। वाक्यार्थविचारणाध्यवसाननिर्वृत्ता हि ब्रह्मावगतिः, नानुमानादि प्रमाणान्तर-निर्वृत्ता। सत्सु तु वेदान्तवाक्येषु जगतो जन्मादिकारणवादिषु, तदर्थग्रहणदार्ढ्याय अनुमानमपि वेदान्तवाक्याविरोधि प्रमाणं भवत् न निवार्यते, श्रुत्यैव च सहायत्वेन तर्कस्याप्यभ्युपेतत्वात्। तथा हि—'श्रोतव्यो मन्तव्यः' (बृह० उ० २।४।५)... ...इति च पुरुषबुद्धिसाहाय्यमात्मनो दर्शयति"[३]। अत्रेदं निगदव्याख्यातमस्ति यद् ब्रह्मसूत्रं वेदान्तवाक्यकुसुमानि ग्रथितुमुपनिबद्धम्। अनुभवावसानं ब्रह्मविज्ञानं वेदान्तवाक्यार्थ-विचारणाध्यवसानान्निर्वर्तते आविर्भवति वा, न तु अनुमानादिप्रमाणान्तरात्। श्रुत्यनुकूलस्तर्कस्तु सहायत्वेन अभ्युपेयत एव। अतो वेदान्तशास्त्रं सर्वतर्कविरोधि नाऽस्ति अपि तु श्रुत्यननुकूलतर्कस्य विरोधीति निर्दिदेश आचार्यशङ्करः। अद्वैतिन सर्वतर्क विरोधिन इतीमा भ्रान्तिमपाकर्तुम् आदावेव अर्थात् प्रथमसूत्र-भाष्य एव स्पष्टं निर्दिष्टं शङ्कराचार्येण—"तस्माद् ब्रह्मजिज्ञासोपन्यास-मुखेन वेदान्तवाक्यमीमांसा तदविरोधितर्कोपकरणा निःश्रेयसप्रयोजना प्रस्तूयते"[४]। वेदान्तवाक्यानुसारितर्कस्य साहाय्यं शङ्कराचार्येण न क्वचिदपि न्यक्कृतम्। यतो हि स्वयं भगवती श्रुतिरपि तदविरोधिनं तर्कं

१—भामती, १. १. २

२—ब्रह्मसूत्रम्, १. १. २

३—ब्रह्मसूत्रभाष्यम्, १. १. २

४— " " १. १. १

सहायत्वेन अभ्युपगच्छति श्रुतिसमधिगम्ये परमगम्भीरेऽर्थे तर्क एव मौलिकं प्रमाणमिति तु सर्वथा अपाक्रियते।

शङ्कराचार्येण प्रसन्नगम्भीरे[1] ब्रह्मसूत्रभाष्ये वारवारमेतदुद्घोषितं यदिदं शास्त्रं वेदान्तवाक्यानामैदंपर्य (तात्पर्यं) निरूपयितुं प्रवृत्तम्, न तु तर्कशास्त्रवत् शुष्कैस्तर्कैः कञ्चित् सिद्धान्तं स्थापयितुं प्रत्यवस्थातुं वा प्रवृत्तम्। एतच्छास्त्रं द्वेषपूर्वकं परपक्षनिराकरणे न प्रवृत्तम्, अपि तु अत्र मन्दमतीनां भ्रान्तिमुन्मूलयितुमेव निराकरणे यत्नः कृतः[2]। परमगम्भीरस्य तर्कानवगाह्यस्य[3] जगत्कारणस्य सच्चिदानन्दस्वरूपब्रह्मणः स्वरूपमवगमयितुं शङ्कराचार्यः प्रववृते, अतस्तार्किकवच्छुष्केर्न योजयति कमप्यर्थम्।' अवगतिपर्यन्तं ब्रह्मविज्ञानं शुष्केण तर्केण न कोऽपि आप्तुमर्हति न च केनाऽपि शुष्केण तर्केण तदपनेतव्यम्। तथा च कठोपनिषच्छ्रुतिः—"नैषा तर्केण मतिरापनेया" (कठ० उ० १।२।९)। अन्याः साख्यादितर्कस्मृतयस्तर्कोपपत्तिभ्यां तत्त्वज्ञानाय उपकुर्वन्तीति चेत्, अनुगृह्णन्तु नाम। शङ्करमतानुसारेण परमार्थं तत्त्वज्ञान वेदान्तवाक्येभ्य एव भवति। 'नावेदविन्मनुते तं बृहन्तम्' (तै. ब्रा० ३।१२।—(७), 'तं त्वौपनिषदं पुरुषं पृच्छामि इत्यादिश्रुतयश्च तत्समर्थनार्थमुदाह्रियन्ते।

वस्तुतः शङ्कराचार्यस्तर्कविरोधी नासीत्, अपि तु आगममात्रसमधिगम्येऽर्थे ब्रह्मकारणतावादे आगमविरोधितर्कं निराकर्तुं श्रुत्यनुगृहीततर्करूप सदर्शनचक्रोद्यतकरो बद्धपरिकरोऽभूत्। स खलु श्रुत्यनुगृहीतं तर्कं सर्वथा उपाददे। तेन ब्रह्मसूत्रभाष्यादिषु तर्कप्रधाना शैली व्यपाश्रिता। यदि शङ्कराचार्यस्तर्कविरोध्यभविष्यत्। अस्मिन् प्रसङ्गे श्रीहुपरिकर-

---

१— नत्वा विशुद्धविज्ञानं शङ्करं करुणानिधिम्।
भाष्यं प्रसन्नगम्भीरं तत्प्रणीतं विभज्यते॥

भामती, १. १. १

२—ब्रह्मसूत्रभाष्यम्, २. २. १

३—अणीयान्ह्यतर्क्यमणुप्रमाणात्।
कठोपनिषद्, १।२।८

महाभागेन सुष्टूक्तमेतत्—"He ( Sankara ), however, does not discard the Logical Method, which should be followed, according to him, without contradiction to the purport of श्रुति. It may be remarked here that few philosophers in India have resorted to the Logical Method to the extent to which Sankaracharya has resorted to it."[१]

ब्रह्मसूत्रभाष्ये स्वपक्षस्थापनाय परपक्षासारताप्रतिपादनाय चोपन्यस्तानि वाहुल्येन एतादृशानि वाक्यानि सन्ति यानि यान्यनुमानवाक्यावयवस्वरूपाणि वर्तन्ते । तद् यथा—"भव्यश्च धर्मो जिज्ञास्यो न ज्ञानकालेऽस्ति, पुरुषव्यापारतन्त्रत्वात् ।"[२] "यदुक्तं ब्रह्मैव सर्वज्ञं जगतः कारणमिति, तदयुक्तम् । कुतः ? स्मृत्यनवकाशदोषप्रसङ्गात् ।"[३] "यदुक्तं चेतनं ब्रह्म जगतः कारणं प्रकृतिरिति तन्नोपपद्यते । कस्मात् ? विलक्षणत्वादस्य विकारस्य प्रकृत्याः ।"[४] "निरागमाः "पुरुषोत्प्रेक्षामात्रनिबन्धनास्तर्का अप्रतिष्ठिता भवन्ति । उत्प्रेक्षाया निरङ्कुशत्वात् ।"[५] अपि च, स्वप्रतिज्ञातार्थग्रहणदार्ढ्याय शङ्कराचार्येण हेतुद्वयमपि प्रयुक्तम् । यथा-"न तावदयमेकान्तेन अविषयः, अस्मत्प्रत्ययविषयत्वात्, अपरोक्षत्वाच्चप्रत्यगात्मप्रसिद्धेः" ।[६] एभिर्वाक्यैः शङ्कराचार्यकृतप्रचुरतरतर्कप्रयोगः स्फुटतरं प्रमाणीभवति । कृतेऽप्येवं प्रचुतरप्रबलतरतर्कप्रयोगे शङ्कराचार्य आगममात्रसमधिगम्ये तर्कानवगाह्येऽर्थे तर्कप्रयोगमर्यादां सावधानचेतसा संस्मरन् रेखामात्रमपि नातिचक्राम । अभेददर्शिनामृषीणामनुभवस्तु यथासंभवं तत्र प्रमाणं भवन्न

---

१. The problem of Sanskrit teaching (संस्कृतानुशीलनविवेकः) Prof. G. S. Huparikar, p. 290

२. ब्रह्मसूत्रभाष्यम्, १. १. १.

३. तदेव, २. १. १

४. तदेव, २. १. ४

५. तदेव, २. १. ११

६. तदेव, १. १. १

निवार्यते । श्रीहुपरिकरमहाभागस्य कथनमेतत् समीचीनताकोटिमाटीकते–
"The fact that many sentences in his Bhasyas can easily be transformed into syllogisms testifies to his prominent use of the Logical Methon, which he employs while refuting his opponents and oonvincing them of his conclusions also. Yet he fully recognizes the limitations of the Logical Method or Reasoning in trancendental matters, where S'rat must be the final authority."[१]

साङ्ख्यादिस्मृत्यनुयायिभिरिदमाक्षिप्यते—भव्ये धर्मे इव भूते परिनिष्पन्ने वा ब्रह्मणि प्रमाणान्तरनिरपेक्ष आगमः प्रमाणं भवितुं नार्हति । यथा परिनिष्पन्नेषु पृथिव्यादिषु प्रमाणान्तराणां प्रवेशोऽस्ति तथैव परिनिष्पन्ने भूतार्थे वा ब्रह्मणि प्रमाणान्तराणामवकाशोऽस्ति । यथा श्रुतीनां परस्परविरोधे सति प्रबलतरश्रुत्यनुसारेणान्यासां श्रुतिनामर्थं योजयन्ति, तथैव प्रबलतर्कानुसारेण श्रुत्यर्थो योजनीयः अपि च, प्रत्यक्षतयास्वार्थं प्रतिपादयन्ती अनुभवसंनिकृष्टा न भवति । अवगतिपर्यन्तं ब्रह्मविज्ञानं च भवद्भिः (शङ्करादिभिः) अनुभूतफलत्वेनैव अभिप्रेयते । अतः 'सावकाशनिरवकाशयोर्निरवकाशो बलीयान्' इति न्यायेन निरवकाशोऽनुभवसंनिकृष्टः प्रबलतरतर्कः श्रुतिनिरपेक्षः सन्नपि अभ्युपगन्तव्यः । किञ्च, स्वयं भगवती श्रुतिरपि 'श्रोतव्यो मन्तव्यः' इति श्रवणभिन्नं मननरूपं तर्कमादरणीयं दर्शयति ।

अत्रैव प्राप्ते आक्षेपे शङ्कराचार्यः समादधौ–सन्मतानुसारेण परिनिष्पन्ने ब्रह्मणि परिनिष्पन्नेषु पृथिव्यादिषु इव प्रमाणानि अवकाशं नाप्नुवन्ति ब्रह्म इन्द्रियगोचरं न भवति । यदि ब्रह्मण इन्द्रियविषयत्वं स्यात्तर्हि इदं कार्यं ब्रह्मणा सम्बद्धं गृह्येत । इन्द्रियाणि स्वभावतया घटपटादीन् विषयीकुर्वन्ति, तथा च कठोपनिषच्छ्रुतिः—

१. The Problem of Sanskrit Teaching (संस्कृतानुशीलनविवेकः) Prof G. S. Huparikar, p. 290

"पराञ्चि खानि व्यतृणत्स्वयंभू—
स्तस्मात्पराङ् पश्यति नान्तरात्मन् ।"[1]

रूपाद्यभावाद्[2] ब्रह्मणः प्रत्यक्षाविषयत्वम्। लिङ्गाद्यभावान्नायं ब्रह्मरूपार्थोऽनुमानादीनां विषयत्वमाप्नोति। अयमर्थस्तु श्रुत्यैकसमाधिगम्यः। तथा च श्रुतिः–"नैषा तर्केण मतिरापनेया" (क० उ० १।२।६)। 'कोऽद्धा वेद क इह प्रवोचत्', 'इयं विसृष्टिर्यत आबभूव' इत्यनेन ऋगृद्वयेन कपिलादीनां सिद्धानामपि जगत्कारणस्य दुर्ज्ञेयत्वमवगम्यते। अचिन्त्ये खलु ब्रह्मणि तर्को मौलिकत्वेन न योजनीय। तथा च स्मृति.—'अचिन्त्याः खलु ये भावा न तास्तर्केण योजयेत् इति। अतः शङ्कराचार्यस्य निष्कृष्टमेतन्मतम्—"शब्दमूलं च ब्रह्म शब्दप्रमाणकं नेन्द्रियादिप्रमाणकं तद् यथाशब्दमभ्युपगन्तव्यम्"[3]। अतीन्द्रियब्रह्मस्वरूपस्य तर्कानवगाह्यत्वं गुरुतरतर्केण प्रतिपादयत्येवम्—"लौकिकानामपि मणिमन्त्रौषधिप्रभृतीनां देशकालनिमित्तवैचित्र्यवशाच्छक्तयो विरुद्धानेककार्य–विषया दृश्यन्ते। ता अपि तावन्नोपदेशमन्तरेण केवलेन तर्केणावगन्तुं शक्यन्तेऽस्य वस्तुन एतावत्य एतत्सहाया एतद्विषया एतत्प्रयोजनाश्च शक्तयः। किमुत अचिन्त्यस्वभावस्य ब्रह्मणो रूपं विना शब्देन न निरूप्येत"[4]।

'श्रोतव्यो मन्तव्यः इत्यस्याः श्रवणभिन्नमननरूपतर्कस्यादरणीयत्वं प्रदर्शयन्त्या. श्रुत्या व्याजेन अतीन्द्रिये जगत्कारणरूपाऽर्थे तार्किकाणां श्रुतिनिरपेक्षः शुष्कस्तर्कोऽवकाशं प्राप्तुं नार्हति। शुष्केण तर्केण जगदिदं ब्रह्मण. सम्भूतमन्येन केनचिद्वा समुद्भूतमिति निश्चेतुं न शक्यम्, यतो हि कुतर्कस्य क्वचिदपि प्रतिष्ठा न वर्तते। अत: शङ्करमतेन श्रुतिरेव ब्रह्मावगतये मौलिकं प्रमाणम्। श्रुत्यनुगृहीत एव तर्कस्तत्र उपकारकत्वेन

१. कठोपनिषद्, २. १. १

२. अशब्दमस्पर्शमरूपमव्ययं
तथारसं नित्यमगन्धवच्च यत् ।–क० उ०, १, ३, १५

३. ब्रह्मसूत्रभाष्यम्, २. १. २७

४. तदेव

सहायत्वेन वाभिप्रेतः। 'श्रोतव्यो मन्तव्यः' इतीयं श्रुतिः शङ्करमतानुसारेण श्रुत्यनुगृहीतमेव तर्कमादर्तव्यं दर्शयति, न तु केवलं तर्कम्।[1] यद्यपि ब्रह्म-सूत्रादिभाष्येषु आचार्येण वेदान्तवाक्यमीमांसायां प्रवृत्तेन यद्यत्तर्कितं तत्सर्वं यथाशब्दमेवास्ति, तथापि कीदृशस्तर्कः श्रुत्यनुगृहीतं तर्कमेकं निदर्श-यन्नवोचदेवम्—"स्वप्नान्तबुद्धान्तयोरितरेतरव्यभिचारादात्मनोऽनन्वागतत्व, संप्रसादे च प्रपञ्चपरित्यागेन सदात्मना संपत्तेर्निष्प्रपञ्चसदात्मत्वं, प्रपञ्चस्य ब्रह्मप्रभवत्वात्कार्यकारणानन्यत्वन्यायेन ब्रह्माव्यतिरेक इत्येवंजातीयकः"[2]।

स्वयं भगवता बादरायणव्यासेनापि श्रुतिनिरपेक्षस्य केवलस्य तर्कस्य विप्रलम्भकत्व (तत्त्वाव्यवस्थापकत्वं) दर्शयितु 'तर्काप्रतिष्ठानात् ... ...' इति सूत्रितम्। तथा चाख्यायि भगवता शङ्कराचार्येणाऽपि— "तर्काप्रतिष्ठानात्... ......' (ब्र० सू० २।१।११) इति च केवलस्य तर्कस्य विप्रलम्भकत्वं दर्शयिष्यति"[3]। शङ्कराचार्यो बादरायणव्यासमनुसृत्य स्मृतिबलेन ब्रह्मकारणतावादं प्रत्यवतिष्ठमानानां सांख्यादीनां स्मृतिबलेनैव उत्तमत्त्वमवोचत्। आगमनिरपेक्षतर्कबलेन ब्रह्मकारणवादं प्रत्यवतिष्ठमानाना च तेषां श्रुत्यनुगृहीततर्कबलेनैवावोचदिति वस्तुगतिः। "तर्कावष्टम्भं तु 'न विलक्षणत्वात्' (ब्र० सू० २।१।४) इत्यारभ्य उन्मथिष्यति"[4] "यथा तु तर्केणापि ब्रह्मण एव कारणत्व निर्वोढुं शक्यते न प्रधानादीना तथा प्रपञ्चयिष्यति—'न विलक्षणत्वादस्य' इत्येवमादिना"[5] इत्येताभ्या भाष्यपङ्क्तिभ्यामवगम्यते यच्छ्रुत्यनुगृहीत एव तर्को सूत्रकारस्य अभीष्ट आसीत् श्रुत्यनुगृहीततर्कबलेन च ब्रह्मण एव जगत्कारणत्वं स्थातुमर्हति न तु प्रधानस्य कारणत्वम्। शङ्कराचार्येण तर्काप्रतिष्ठानात्... .........' (ब्र० सू० २।१।११) इति सूत्रं व्याचक्षाणेन केवलतर्काणामप्रतिष्ठितत्वं गुरुतरतर्कबलेन सम्यक् प्रपञ्चितम्। तदनुसारेण आगमनिरपेक्षास्तर्काः

१. ब्रह्मसूत्रभाष्यम्, २।१।६
२. तदेव
३. तदेव
४. ब्रह्मसूत्रभाष्यम्, २।१।२
५. तदेव, १।१।५

पुरुषाणामुत्प्रेक्षामात्रसमुद्भवा भवन्ति, अत एवाप्रतिष्ठिता भवन्ति। उत्प्रेक्षाणा न कापि मर्यादा भवति[1]। केचित् तार्किका सावधानतया यांस्तर्काभासत्व दर्शयन्ति, तेषामपि तर्काणामन्ये श्रेष्ठास्तार्किकास्तर्काभासत्वं युक्त्याभासत्वं वा उपपादयन्ति। वस्तुतः पुरुषबुद्धिवैचित्र्यात् तर्काणामप्रतिष्ठितत्वमेव प्रतिष्ठितं भवति। यदि सिद्धाना प्रथितमाहात्म्यानां कपिलादीनां सम्मतास्तर्काः प्रतिष्ठिता इत्युच्येत, कृतेऽप्येवं तर्काणाम-प्रतिष्ठा न निवर्तते। यतः प्रसिद्धमाहात्म्या अपि कपिलकणभक्षाक्षचरणादयः परस्परं विप्रतिपद्यन्ते, तेषा तर्केषु सम्प्रतिपत्तिर्न प्राप्यते।

कश्चिदपि तर्कः प्रतिष्ठितो न भवतीति नायं पक्ष प्रेक्षावता चित्तमनुरञ्जयितुं क्षमत इत्याक्षिपन्ति सांख्यादयः। तर्काणामप्रतिष्ठा प्रतिष्ठित-तर्केणैव प्रतिपाद्यते। यदि सर्वे तर्का अप्रतिष्ठिताः स्युः, तर्हि लौकिक-व्यवहारस्योच्छेदः प्रसज्येत। लोक. तर्कपूर्वकं सुख प्राप्तये दुःखपरिहाराय च प्रवर्तते। श्रुत्यर्थमधिकृत्य विप्रतिपत्तौ सत्यानर्थाभासनिराकरणपूर्वकं तर्केणैव सम्यगर्थो निर्धार्यते। "आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना। यस्तर्केणानुसधत्ते स धर्मं वेदनेतर ॥" (मनुस्मृति १२।१०६) इति ब्रुवता मनुनापि तर्केण सम्यगर्थनिर्धारणं समर्थितम्। अत ऊर्ध्वं तर्कप्रतिष्ठां विधातु सांख्यादीना शङ्कराचार्यानुसारेण यो वलिष्ठस्तर्कः संभवेत्, तस्य मौलिकता प्रत्याययितुं भाष्यपङ्क्तय एव मयावतार्यन्ते न त्वनूद्यन्ते— "अयमेव तर्कस्यालङ्कारो यदप्रतिष्ठितत्वं नाम। एवं हि सावद्यतर्कपरित्यागेन निरवद्यस्तर्क. प्रतिपत्तव्यो भवति। नहि पूर्वजो मूढ आसीदित्यात्मनापि मूढेन भवितव्यमिति किंचिदस्ति प्रमाणम्। तस्मान्न तर्काप्रतिष्ठान दोष इति चेत्, ...।"[2]

---

१. तर्क्यमाणेऽणुपरिमाणे केनचित् स्थापित आत्मनि ततो ह्यणुतरम् अन्योऽभ्यूहति ततोऽप्यन्योऽणुतममिति न हि कुतर्कस्य निष्ठा क्वचिद् विद्यते।—

क० उ० भा० १।२।८

२. ब्रह्मसूत्रभाष्यम् , २।१।१२

अलङ्कारो ह्ययं शङ्कराचार्यप्रयुक्तश्श्रुत्यनुगृहीततर्काणां यत्स सांख्यादि-पक्षोपन्यास प्रवृत्तः तस्य बलिष्ठान् तर्कान् संनिवेश्य सांख्यादिपक्ष सम्यगुपन्यस्तवानिति। प्रकृतसांख्यादिपक्षं प्रतिक्षिपता प्रथमन्तावदेतन्निर्दिष्टं यत्स तर्कस्य सर्वत्र प्रतिष्ठां न प्रत्यवतिष्ठते। केषुचिद्विषयेषु तर्कस्य स्थापना प्रतीयते[1]। ब्रह्मणि प्रसिद्धमाहात्म्यानामपि कपिलादीना तर्काः प्रतिष्ठा न लभन्त इत्येतावदेव तेन तर्काप्रतिष्ठितत्वेनाभिप्रेक्षितुमशक्यत्वात्। रूपाद्य-भावाद्धायमर्थः प्रत्यक्षस्य विषय इत्येतत् पूर्वमेव दर्शितम्।

सर्वमोक्षवादिस्वीकृतं मोक्षसाधनं सम्यग् ज्ञानं भूतवस्त्वधीनत्वाद् एकरूपं भवितुमर्हति। एकरूपेण विद्यमानोऽर्थं एव परमार्थः। तच्च पर-परमार्थविषयमेकरूपं ज्ञानमागमनिरपेक्षैरत एवाप्रतिष्ठितैस्तर्कैर्नाविर्भवितु-मर्हतीति प्रतिपादयता शङ्कराचार्येण ये श्रुत्यनुगृहीतास्तर्काः प्रयुक्ता उपात्ता वा तेषा–काप्यभिख्याऽस्ति। तेऽत्रोदाह्रियन्ते—"अपि च सम्यग्ज्ञानान्मोक्ष इति सर्वेषा मोक्षवादिनामभ्युपगमः। तच्च सम्यग्ज्ञानमेकरूप वस्तु-तन्त्रत्वात्। एकरूपेण ह्यवस्थितो योऽर्थः स परमार्थः। लोके तद्विषय ज्ञानं सम्यग् ज्ञानमिष्यते यथाग्निरुष्ण इति। तत्रैव सति सम्यग्ज्ञाने पुरुषाणां विप्रतिपत्तिः। यद्धि केनचित्तार्किकेणेदमेव सम्यग्ज्ञानमिति प्रतिपादितं तदपरेण व्युत्थाप्यते, तेनापि प्रतिष्ठापितं ततोऽपरेण व्युत्थाप्यत इति प्रसिद्धं लोके। कथमेकरूपानवस्थितविषय तर्कप्रभवं सम्यग्ज्ञानं भवेत्। न च प्रधानवादी तर्कविदामुत्तम इति सर्वैस्तार्किकैः परिगृहीतो येन तदीय मत सम्यग्ज्ञानमिति प्रतिपद्येमहि। न च शक्यन्तेऽतीतानागत-वर्तमानास्तार्किका एकस्मिन्देशे काले च समाहर्तुं येन तन्मतिरेकरूपैकार्थ-विषया सम्यङ्मतिरिति स्यात्।

वेदस्य तु नित्यत्वे विज्ञानोत्पत्तिहेतुत्वे च सति व्यवस्थितार्थविषय-त्वोपपत्तेस्तज्जनितस्य सम्यक्त्वमतीतानागतवर्तमानैः सर्वैरपि तार्किकैरप-ह्नोतुमशक्यम्। अतः सिद्धमस्यैवौपनिषदस्य ज्ञानस्य सम्यग्ज्ञानत्वम्"[2]।

१. ब्रह्मसूत्रभाष्यम्, २।१।११
१. ब्रह्मसूत्रभाष्यम्, २।१।११

तर्कविषयं श्रीशङ्कराचार्यमतमधिकृत्य एतन्निगमयितुं शक्यते—"निश्चितं युक्तियुक्तं च यत्तद् भवति नेतरत्" ( गौडपादकारिका ३।२३ ) इत्येवं श्रुत्यनुगृहीततर्कसमर्थकस्य वेदान्तार्यसम्प्रदायविदो गौडपादाचार्यस्य अनुयायिप्रशिष्यः शङ्कराचार्यः श्रुत्यननुसारिणस्तर्कस्य विरोधी आसीत् न तु श्रुत्यनुगृहीतस्य। श्रुत्यनुगृहीत एव तर्कः ब्रह्मानुभावाङ्गत्वेन युज्यते। स द्वैतिनस्तार्किकान् परमगम्भीरभावयाथात्म्यावगमे आगमनिरपेक्षेभ्यस्तर्केभ्यो निवारयामास। तार्किकपरिकल्पितानामनृज्वीना कुदृष्टीनां तत्र गतिर्नास्ति। क्वचिदन्येषु विषयेषु तर्कस्य सत्ता प्रतीयत इति तु शङ्कराचार्येणाऽपि न निवारितम्। तेन अद्वैतवेदान्तसिद्धान्तस्तम्भ आगमापेक्षतर्कभूमौ स्थूणानिखननन्यायेन सुदृढतया प्रतिष्ठापित.। जगत्कारणपरिनिष्पन्नार्थस्य निर्धारणे श्रुतेस्तर्काणा बलीयस्त्वमिति वादिन आगमनिरपेक्षतर्कव्यपाश्रयिणस्तार्किकान् स तर्कमर्यादारेखां निर्धारयन् तर्कप्रयोगपद्धतिं शिक्षयामास।

प्राध्यापकः संस्कृतविभागे
जोधपुरविश्वविद्यालयः, जोधपुरम् ( राजस्थानम् )

# भासस्य वार्णिकबिम्बानि

( डॉ० अयोध्या प्रसाद द्विवेदी )

भासस्य वर्णविन्यासविधिरतीव स्वाभाविको वर्तते। अकृत्रिमो 'हास' इव तस्य वर्णसंरचनाच्छविर्नितरामावर्जयति सचेतसां मनांसि। सर्वोऽपि काव्यार्थश्चक्षुषोरग्रतः परिस्फुरन्निवदेदीप्यते। दृश्यतां तावत्तस्य चन्द्रोदय-वर्णरचनापाटवम्—

उदयति हि शशाङ्कः क्लिन्नखर्जूरपाण्डुः
युवतिजनसहायो राजमार्गप्रदीपः।
तिमिरनिचयमध्ये रश्मयो यस्य गौराः
हृतजल इव पङ्के क्षीरधाराः पतन्ति ॥

(चारु० १।२९) ॥

इह चन्द्रमसमार्द्रखर्जूरमिवेति कथयन् कविः तस्योदयकालिकं पाण्डुत्व-मभिदधाति। 'राजमार्गप्रदीप.' इत्यनेन सकलोऽपि राजमार्गः शुभ्रज्योत्स्नया प्रकाशित इति ज्ञायते। अन्धकारस्य निबिडिता तु जलविहीनेन सान्द्रकर्दमेन प्रतिबिम्बिता। 'उदीयमानेन्दोः शुभ्रकिरणाः तमसि तथैवा-पतन्ति यथा घने पङ्के दुग्धधाराः पतन्ति' इति सर्वथा नूतनोऽपि बिम्बः सर्वसाधारणजनगम्य। श्वेतकृष्णयोः प्रतिकूलवर्ण—दीप्तिरिह स्थाने सश्लिष्टा। यतो हि एतेन विपरीतप्रकृतकयोः ( वदान्यतमश्चरित्रैकधनश्चा-रुदत्तः अर्थैकपरा वेषजीविनी गणिका वसन्तसेना च ) चारुदत्तवसन्तसेनयोः मिथोऽनुराग सङ्केतित। 'पङ्के क्षीरधारापतनम्' इति बिम्बमापाततो विरुद्धमतिकृत्। किन्तु क्षीरं स्वधवलिम्ना यथा पङ्कमपि धवलयितुं क्षमते तथैव चारुदत्तः स्वचारित्र्यसस्पर्शेण गणिकामपि पावयितुं प्रभवति। पङ्कम् समाजस्योपेक्षितवर्गस्य सङ्केतकम्, क्षीरन्तु उच्चानामुपस्थापकम्। इत्थं पङ्कक्षीरयोः समागम सामाजिकवैषम्यापनयनाय एवं। पुनश्च,

उदारचेताश्चारुदत्तः चन्द्रवत्सकललोकसुखाय—"सर्वजनसामान्यश्चन्द्रप्रदीपः'। कृष्णरक्तयोः एकत्र पृथक् असंश्लिष्टा स्थितिर्द्रष्टव्या—

पूर्वा तु काष्ठा तिमिरानुलिप्ता
सन्ध्यारुणा भाति च पश्चिमाशा।
द्विधा विभक्तान्तरमन्तरिक्षं
यात्यर्धनारीश्वररूपशोभाम् ॥ अविमा० २।१२॥

सूर्यास्तसमये एकतः प्रतीची सिन्दूरायिता अपरतश्च प्राची तमोविलुप्ता। अतोऽन्तरिक्षं द्विधा विभक्तम् इवाभाति। अर्धनारीश्वरस्येव तस्य शोभा कल्पिता। इह कवेः कल्पनौदार्यं विलसतितराम् 'कृता नीला नागाः शरशतनिपातेन कपिलाः' ( पञ्चरात्रम् २।२२ ) इत्यत्र तु तद्भिन्न इव कृष्णरक्तयोः प्रयोगः। शत्रुशरप्रहारैः कृष्णवर्णितो हस्तिनः रुधिरप्लुतत्वात् 'कपिलाः' सञ्जाता इति तथ्यं कविना एवमुपस्थापितं। कविः देहस्य श्यामलतां प्रकाशयितुं प्रायेण नीलपदं प्रयुनक्ति। तेन सह क्वचित् कुवलया–नल–मेघशब्दानां प्रयोगपूर्वकं तदाधिगतं प्रभावयति—

'नीलोत्पलाञ्जननिभा भयदा श्वपाक्यः' ( बालचरि० २।२ ) अत्र नीलोत्पलाञ्जनयोः वर्णयोजनया श्वपाकीनामाकारभयङ्करत्वं कविरत्थापयितुमिच्छति परं, तन्नीलोत्पलस्य प्रयोगेण तावन्न शक्यं जातम्' रामकृष्णादीनां श्यामसौकुमार्यं प्रकाशनायतस्योपयुक्तत्वात्प्रकृतं प्रतिकूलत्वेन। राक्षसीभिरावृता सीता कृष्णमेघानां मध्ये विद्युल्लतेव प्रतिभाति ( अभिषेके २।७ )।

विग्रहवन्तं समुद्रं 'नवकुवलयनीलम्' ( अभि० ४।१५ ) सागरवर्णनेच तस्य जलराशिं 'नीलाम्बुदनिभम्' ( अभि० ४ ( १७ ) कविर्निरूपयति। वामनस्य भगवतः पादं नीलोत्पलमिव स्वच्छखड्गव–न्नीलञ्चनिगदितम् ( मध्यमव्या १।१ ) ध्यातव्यमिह विद्यते यत् कृष्णवर्णाय भासो बहुधा नीलोत्पलमानयति। आवृत्त्या चात्र प्रभावः हन्यते। नूतनप्रयोगदिशा 'खड्गनीलिम्नो महत्त्वं' ज्ञेयम्। अनेन तात्कालिके समाजे युद्धेषु खड्गोपयोगो नितरामजायतेति सुस्पष्टमेव। भासस्य वर्णविन्यासविधौ नीलो-

त्पलाञ्जन–मृणालविद्युन्मेघादीनां प्रयोगो यत्रैकतः पारम्परिकः, तत्रैवापरतः सान्ध्यकिरणात् गुडमधुसङ्गत्या धवलप्रासादाश्च दध्नः पाण्डुत्वेन सहोपमितौ नवत्वमप्यस्त्येव (अविमा० पृ० ४६)। सम्प्रति वर्णानां संश्लिष्टचित्रम्—

शङ्खक्षीरवपुः पुरा कृतयुगे नाम्ना तु नारायणः
त्रेतायां त्रिपदार्पितत्रिभुवनो विष्णुः सुवर्णप्रभः।
दूर्वाश्यामनिभः स रावणवधे रामो युगे द्वापरे
नित्यं योऽञ्जनसन्निभः कलियुगे वः पातु दामोदरः॥

(बालच० १।१)

इह नारायण–वामन–राम–कृष्णानामवतार–कल्पना। पौराणिकमिदं बिम्बम्। कृतयुगे नारायणस्य शरीरं शंख–क्षीरवद्धवलमजायत। त्रेतायां वामनस्य देहवर्णः स्वर्णस्येवाभवत्। द्वापरे दूर्वावच्छ्यामो रामो कलौ चाञ्जनस्येव कृष्णोऽवततार। अत्र शंख–क्षीर–स्वर्ण–दूर्वा–अञ्जनवस्तूनां भिन्नवर्णं संश्लेषो भासेन विहितः। सर्वेषामेकत्र प्रयोगेऽपि पृथक् पृथगवस्थानम् बलरामः क्वचिदुदयनवेन्दुवर्णः (स्वप्नवा० १।१) क्वचिच्च गोक्षीरपाण्डुरो (बालच– तृ० अं० पृ० ५७) दृश्यते।

रजतबाहुः शशिनिभमूर्तिः बलरामोऽन्यत्र नीलं वासो दधानः नीलोत्पलमालामपि धारयति (बालचरितम् ५।९) क्वचिद् गोपाङ्गनाः कनकचम्पकपुष्प–गौरा' शोभन्ते (बालच० ३।२) तु क्वचिन्नीलवसना काचिद् गोपी स्वाकारं निगूहति (बालच० १।९)। 'सर्वशोभनीयं सुरूपं नाम' अत एव तु सीतया परिहासपरिधत्तमति वल्कलं तस्याः देह—द्युतेः प्रभावात् सौवर्णिकमिव भाति (प्रतिमा, प्रथमे अङ्के)। जामदग्न्यस्य जटा विद्युल्लतावत्पिङ्गलाः (कर्णभा० १।९)। ताम्राधरौष्ठस्य (उरु० १।१३), ताम्राक्षस्य (अभि ०२।९), क्रोधसरक्तनेत्रस्य (अभि० ३।६) कृतसुरापानस्य जपाकुसुमवद्रक्तैर्यः (प्रति० यौग० अङ्क ४, पृ० १०३) चक्षणोः वर्णोल्लेखस्तु प्राप्यत एव। रक्तपटस्य (अविमा० ५ अंक पृ० १३५), रक्तनखस्य (दूतवा० १।१) वारणानां सितनखदशनानां (कर्णभा०

१।२०) इतस्तत उपलभ्यत एव। सम्प्रति दृश्यतामिह शापस्य विग्रहवर्णनम्—

कोऽयं विनिष्पतति गर्भगृहं विगाह्य
उल्कां प्रगृह्य सहसाञ्जनराशिवर्णः।
भीमो- प्रदंष्ट्रवदनो ह्यहिपिङ्गलाक्षः
क्रोधो महेश्वरमुखादिव गां प्रपन्नः॥

(बालच० २।४)॥

गृहस्यान्तः प्रविशन् शापः कज्जलवत्कृष्णोऽस्ति। स्वस्य करे रक्तवर्णामुज्ज्वलन्तीमुल्कां दधाति। तस्य चाक्षिणी सर्पचक्षुषी इव पिङ्गले स्तः। तं दृष्ट्वा प्रतीयते यत् शम्भोर्मुखाद् वहिर्निर्गतो विग्रहवान् साक्षात् क्रोध एव पृथिव्यामवस्थितो वर्तते। मूर्त्तकल्पनमिदम्। शापः अमूर्त्तो भावः। तस्य प्रभावं सामर्थ्यञ्च दर्शयितुकामः कविः मूर्त्तयति। यद्यपि उपमानं क्रोधपदमपि अमूर्त्तमेव, तथापि उल्कादिधारणवर्णनेन शापस्य विग्रहवत्ता अनायासमेवाक्ष्णोरग्रतस्तिष्ठति। क्रोधस्य प्रचण्डत्वमपि असामान्यमेव त्रिनेत्रस्य मुखान्निःसृतत्वात्। 'अहिपिङ्गलाक्षः' इति प्रयोगस्तु सर्वथा नूत्नः। अहिना शापस्य दुर्निवार्यत्वमपि सुकरम्। दुर्योधनस्य रूपाङ्कनमपि श्यामश्वेतयोः संयोगेन विशेषमाकर्षकम्—

श्यामो युवा सितदुकूलकृतोत्तरीयः
सच्छत्रचामरवरो रचिताङ्गरागः।
श्रीमान् विभूषणमणिद्युतिरंजिताङ्गो
नक्षत्रमध्य इव पर्वगतः शशाङ्कः॥

(दूतवा० १।३)॥

दुर्योधनस्य श्यामं शरीरम्, तस्मिन् श्वेतमुत्तरीयम्, छत्रचामरे चापि सङ्गते, दे हे अङ्गराग लेप, रत्नाभूषणानां द्युतिभिश्च प्रदीप्तानि अङ्गानि—अतो नक्षत्रेषु पूर्णचन्द्र इव स विभाति। 'नक्षत्रमध्य इव पर्वगतः शशाङ्कः' इत्यप्रस्तुतविम्बेनात्र कवेः तात्पर्यमखण्डतया प्रतिफलति। यतो दुर्योधनस्य श्यामला देहकान्तिः, सर्वत्र चाङ्गेषु परिधृतमलङ्करणं शुभ्रम्। श्वेतिम्ना

-श्यामता आच्छन्ना वर्तते। केवलं मुखमण्डलस्य श्यामतैव दृग्गोचरीभवति। सातथैव कल्पयितुं शक्यते यथा चन्द्रस्य लाञ्छनम्। 'धवलनिचयेषु सङ्कुचितं श्यामचिह्नमिव' इदंवर्णविम्बम्। पर्वगतत्वेन प्रकाशाधिक्यं व्यज्यते। अन्यत्र श्वेतवर्णं वैविध्यम्—शरत्कालस्य निरभ्रमाकाशं सद्य-मुक्तत्वचो भुजगोदरस्येव कविः कथयति ( स्वप्नवा० ४।२ ) तत्र चोड्डीय-मानां समाहितां सारसपङ्क्तिं प्रसारित–बलरामबाहुमिव पश्यति। घटोत्क-चस्य रूपाङ्कनमपि मिश्रितवर्णयोजनया महत्त्वपूर्णमस्ति—

तरुणरविकरप्रकीर्णकेशो
भ्रुकुटिपुटोज्ज्वलपिङ्गलायताक्षः।
सतडिदिव घनः सकण्ठसूत्रो
युगनिधने प्रतिमाकृतिर्हरस्य॥
( मध्यमव्या० १।४ )॥

ग्रहयुगलनिभाक्षः पीनविस्तीर्णवक्षाः
कनककपिलकेशः पीतकौशेयवासाः।
तिमिरनिवहवर्णः पाण्डुरोद्वृत्तदंष्ट्रो
नव इव जलगर्भो लीयमानेन्दुलेखः॥
( मध्यमव्या० १।५ )॥

घनान्धकारस्येव तस्य देहकालिमा विद्यते। तरुणादित्यमयूखवत् कनकवद्वा तस्य केशराशिः, रक्तपीतवर्णे च विशाले नेत्रे, अत एव सूर्येन्दा-विव दीप्तिमती ते स्त। कण्ठे स्वर्णसूत्रं मेघमध्ये तडिदिव पीतञ्च धारितं कौशेयवस्त्रम्' वहिर्निर्गतम् उद्वृत्तञ्च श्वेतं दशनमण्डलम् अतः, नूतने नीरदे ऐन्दवी कला इव प्रतीयते।

अत्र कृष्ण–पीत–रक्त–श्वेतवर्णाना दृढा संश्लिष्टिः। विद्युत्कनकादित्य कौशेयानाञ्च पीतिमा सहैव गुम्फितः। प्रस्तूयत इदानीमिह युद्धभूमेः मांसखण्डमादाय आकाशे उत्पततां गृध्राणां नितान्तं स्वाभाविकं चित्रम्—

गृध्रा मधूकमुकुलोन्नतपिङ्गलाक्षा
दैत्येन्द्रकुञ्जरनताङ्कुशतीक्ष्णतुण्डाः ।
भान्त्यम्बरे विततलम्बविकीर्णपक्षा
मांसैः प्रवालरचिता इव तालवृन्ताः ॥

( उरु० १।११ )

मधूकवत् पिङ्गलनेत्रा गृध्रा वृमुखतुण्डे रक्तमांसखण्डमादाय यदा ऽम्बरन्ति तदा ते प्रवालखचिता स्ताल—न्ता इवाभान्ति । प्रवालो मांसमिवोपमितः ।

निष्क्रष्टुं शक्यते यत् श्यामश्वेतयोः संश्लेषे भासोऽधिकं रमते । रूपवर्णनप्रसङ्ग एव विविधवर्णसंसृष्टिस्तेन क्रियते । नीलोत्पलादीनां बहुशोऽपि प्रयोगः पारम्परिकोऽनवीकृत एव । नूतनवर्णप्रयोगदृष्ट्या तु मधूकस्य पिङ्गता, खड्गस्य नीलिमा, खर्जूरस्य पाण्डुता, गुडमधुनो रक्तिमा, दूर्वायाः श्यामिका, भुजगोदरस्य श्वेतिमा अहेश्चैवाक्षिपिङ्गलता तेन स्थाने विनियोजिताः ।

# दशरूपकावलोकयोः समीक्षा

रामलखन पाण्डेयः

## अवस्थानुकृतिः

"परचेष्टानुकरणाद् हासः समुपजायते"[1] इति भरतवचनाद् "नानुकार इति भ्रमितव्य"[2] मित्याद्यभिनवगुप्तसमर्थनाच्च "अवस्थानुकृतिर्नाट्यम्" इति धनञ्जयकृतनाट्यलक्षणं दूषितं प्रतिभाति। अनुकरणमिव कश्चित् कलात्मको व्यापारश्च नाट्यत्वेनायाति, यद्वशादौदात्येन संभाव्यं लोकस्य चरितमेवाभिनयेन प्रस्तूयते।[3] वाञ्छितो लोकस्वभाव एव नाट्येन सामाजिकेषु निधापयितुं चेष्टा विधीयते। सा चेयं चेष्टा स्वकीया भवति, न हि परकीया परस्यानुकरणात्मिका वा।[4]। स्वीयां चेष्टामिमां द्रढयितुं नून रामादयस्तदवस्थाश्चात्र आलम्ब्यन्ते, किन्तु न तदालम्बनमेव नाट्ये प्रधानभूतम्। किं पुनस्तदिति प्रश्नः। तत्र अभिनयपदवाच्यसहः कलात्मकः काव्यात्मकश्च नटचेष्टागतो लोकस्वभाव एव प्राधान्यमर्हति। लोकस्य कार्यकारणसहकारीणि यथा अलौकिकविभावनादिव्यापारवत्वात् काव्ये विभावानुभावव्यभिचारिणः कथ्यन्ते तथैव नानावस्थान्तरात्मकः लोकस्वभाव

---

१—नाट्यशास्त्रम् ७. १०।

२—तदिदमनुकीर्तनमनुव्यवसायविशेषो नाट्यापरपर्यायः नानुकार इति भ्रमितव्यम्। अनेन भाण्डेन राजपुत्रस्यान्यस्य वानुकृतेऽन्यादिबुद्धेरभावात्। तद्धि विकारणमिति प्रसिद्धं हासमात्रफलं मध्यस्थानाम्॥ ना० शा० १. १०७ अधिकृत्य भारती।

३—लोकस्य चरितं नाट्यम्॥ ना० शा० ३६.११।

४—स्वकीयत्वं नाम साक्षाद्रङ्गेऽभिनीयमानदशाया मञ्च-स्थनटत्वम्, साक्षादनभिनीयमान-दशायां च कवित्वं कविप्रतिभोत्पादितभावात्मकनटत्वं वेत्यादि सूक्ष्मतयाभ्यूनेयम्। साक्षान्नटत्वेऽपि कविगतभावनटत्वमेवानुव्यवसितम्।

एवं नटचेष्टया अलौकिकरसस्वभाववत्त्वात् काव्यविशेषपदवीमारुह्य नाट्यत्वेनाभिधीयते। अलौकिकत्वसम्पादने नटस्य नटचेष्टायाश्च प्राधान्यवशादेव नाट्यमिति नामकरणमपि सार्थक्यं भजते। तदेतत्सर्वमभिसन्धाय मुनिना भरतेनोक्तम्—

योऽयं स्वभावो लोकस्य नानावस्थान्तरात्मकः।
सोऽङ्गाद्यभिनयैर्युक्तो नाट्यमित्यभिधीयते॥

ना० शा० १६. १४४।

रङ्गपीठे नटेन यदि वस्तुतो रुद्येत ताड्येत वा तदा संभवत्यनुकरणम्। परं न तत्र वस्तुतो रुद्यते ताड्यते वा, प्रत्युत सवैदग्ध्यं कलात्मकं च नाटयित्वा वास्तविकं रोदनं ताडनं चेति तथ्यतयोपस्थापयितुं नटश्चेष्टते। अतो नाट्ये न संभवत्यनुकरणम्। तथापि नाट्येऽनुकरणपदार्थं न शक्यते सर्वथा पृथक्कर्तुम्, किन्तु तन्मात्रमेव नाट्यलक्षणं नूनमपर्याप्तम्। "लोकवृत्तानुकरणं नाट्यमेतन्मया कृतम्"[1] इत्युक्त्वा भरतोऽपि स्वीकरोति नाट्ये कुत्रचिदनुकरणम्, परन्तु तन्नाट्यलक्षणं न तथैव पर्यवस्यति।

अथ अवस्थानुकृतित्वं नाट्ये भवति चेन्नृत्येऽपि तदवश्यं तिष्ठतीति धनञ्जयस्य नृत्यनाट्ययोर्भेदकरणं न संवदति। विसंवादमनु परिहर्तुं पश्चात् परिवर्त्य नाट्यस्य रसाश्रयत्वं नृत्यस्य च भावाश्रयत्वं प्रतिपाद्य यत्तत्र भिन्नत्वं दर्शयते,[2] तदपि न क्षमते तोषयितुं विद्वज्जनं तत्त्वान्वेषणे। तदीयावलोकश्चात्र भेदकत्वं स्पष्टयितुं भावस्य पदार्थत्वं रसस्य च वाक्यार्थत्वं निरूप्य[3] न किमप्युपकरोति। नाट्यशास्त्रेऽभिनवभारत्यां च नाट्यतत्त्वानामवस्थाविशेषानभिलक्ष्य कृतं पूर्णत्वखण्डत्वादिकस्य

---

१—ना० शा० १. ११२।

२—"दशधैव रसाश्रयम्" तथा "अन्यद्भावाश्रयं नृत्यम्"॥ दशरू० ७. ६।

३—वाक्यार्थाभिनयात्मकान्नाट्यात् पदार्थाभिनयात्मकमन्यदेव नृत्यमिति॥
अव० ९।

यत्प्रतिपादनम्[1] तत्प्रतिद्य दशरूपकावलोकयोर्भेदोपकल्पनमिदं वस्तुतो भ्रमविलास एव। तथाहि नाटचशास्त्रीयप्रतिपादनेन रसभावयोर्वाक्यार्थ-पदार्थयोश्च केवलमङ्गाङ्गिभाव एवोपकल्प्यते न पुनर्नाटचतो नृत्यं भेद्यते। अङ्गाङ्गित्वं नाम न कदापि भिन्नत्वमिति वक्तुं शक्येत। घटगताकाशोऽप्याकाश एव भवति, न तस्माद्भिन्नः। तदुक्तमेव शारदातनयेन रसभावयोस्तादात्म्यम्—

वृक्षत्वशिंशुपात्वादेर्यथा तादात्म्यमुच्यते।
तथा भवेत्काव्यबन्धे तादात्म्यं रसभावयोः॥

अथवा किमन्यदीयविनिदर्शनेनात्र विषये स्वयमाद्यो नाटचमुनिर्भरत एव न केवलं रसभावयोस्तादात्म्यं स्थापयति, अपितु रसवर्जितं भावमेव निषेधयति—

न भावहीनोऽस्ति रसो न भावो रसवर्जित.।
परस्परकृतासिद्धिस्तयोरभिनये भवेत्॥

ना० शा० ६·३८।

तस्मादविचारमात्रविजृम्भित नाटचनृत्ययोर्भेदोपकल्पनम्। अथेदमपरं द्रष्टव्यमत्र यन्नाटचशास्त्रे तादृश नृत्यस्वरूपं न कुत्राप्युल्लिखितम्, यथा दशरूपकेऽवलोकद्वारा व्यवस्थाप्यते। यद्यपि धनञ्जयः नाटकादिरूपकोपकारकत्ववशाद् नृत्यनृत्तयोरुल्लेखनं विधाय रूपकान्तराणां स्वग्रन्थेऽविषयत्वाद् ग्रहणमेव न करोति। तथाप्यसौ नाम धनिकः डोम्बीश्रीगदितादिरूपकान्तराणामपि निवेशनं नृत्येकुर्वाणस्तथ्यमलं विडम्बयति। रूपकाणां दशकस्य नाटचशास्त्रादुद्भूतपारम्पर्यप्राप्त स्वरूपमेव धनञ्जयस्य विवेचनीयमिति स्पष्टं तत्र रूपकान्तराणामविषयत्वम्। धनिकेन पुनस्तेषां नृत्ये निवेशन नैव युक्तम्। वस्तुतस्तु दशरूपकाणां पारस्परिकसाङ्कर्येण

---

१—रसस्तु वाक्यार्थः, भावश्च पदार्थः। अत्र भावाः स्थायिनो व्यभिचारिणश्चैव। तैरुपपन्नानि पदानि कथाखण्डानि भवन्ति॥ ना० शा० १८.१०४ अधिकृत्याभिनवभारती।

तेभ्योऽन्यतरे ये डोम्बीतोटकनाटिकासट्टकादयस्ते उपरूपकत्वमुपयान्ति न नृत्यत्वमिति तथ्यम् ।[१]

नाट्यनृत्ययोः पूर्वोक्तभिन्नत्वगतकलहेऽपि नूनं धनिकस्यैव सर्वोऽपि दोष इति रहस्यमपि स्फोटयामि । तथाहि धनञ्जयः रूपकतो नृत्यस्य भिन्नता विवक्षति, नहि नाट्यतः । यतो नाट्यपदं सामस्त्यवाचकम्, रूपकञ्च तद्गतस्थितिविशेषात्मकं नृत्यादिवदिति जानात्यसौ[२] । अतो नाट्यत्वे समानेऽपि परस्परं परिधिविशेष-व्यापकत्वाद् नाट्यान्तर्गतत्वेनैव रूपकनृत्ययोर्भेदो विहितस्तेन । किन्तु धनिकस्तत्र नाट्यनृत्ययोः सामस्त्यासामस्त्यगतत्वं नाववुद्धय "रसाश्रयान्नाट्याद्भावाश्रय नृत्यमन्यदेव" इत्यादिभिर्वाक्यैस्तयोः सर्वथा समानवाचकत्वं मन्यमानो रूपकस्थाने नाट्यतो नृत्यं भेदयितुं चेष्टते । तदेव चात्र विविध भ्रामयति शास्त्राध्येतृवर्गम् ।

दशरूपकावलोकयोर्व्याख्यातारश्च नयनं निमील्य तथोक्तामवलोकमरीचिकामुपयुञ्जाना न पश्यन्ति न चोद्घाटयन्ति रहस्यमिदम् ।

---

१—( क ) तोटकं नाटिका गोष्ठी सल्लापः शिल्पकं तथा ।
डोम्बी श्रीगदितं भाणी प्रस्थानं काव्यमेव च ॥
प्रेक्षकं सट्टकं नाट्यं रासकं लासकं तथा ।
उल्लाप्यकञ्च हल्लीसमथ दुर्मल्लिकापि च ॥
मल्लिका कल्पवल्ली च पारिजातकमित्यपि ॥

( ख ) दशरूपकतत्वदर्शनम्—पृ०९ ।

२—अवस्थानुकृतिर्नाट्यं रूपं दृश्यतयोच्यते ।
रूपकं तत्समारोपाद् दशधैव रसाश्रयम् ॥

इति दशरूपकस्यादिमकारिका—

जीवतीति भवेज्जीवो मनो वेत्तीति मानवः ।
ब्राह्मणो ब्रह्मतत्त्वज्ञः कान्यकुब्जाद्यनेकधा ॥
—इति पद्यमिव स्वार्थं व्यनक्ति ।

नाट्यशास्त्रे नेयमव्यवस्था विलोक्यते। न तत्र तोटकाद्युपरूपकाणि नाट्यभिन्नत्वेनोपस्थापितानि च नृत्यमेव नाट्यभिन्नं प्रस्तुतम्। किं बहुना, नृत्तेऽपि तत्र नाट्यत्वं स्वीकृतमेव।[1] रूपकादीनां च नाट्यस्यावान्तरभेदत्वेन तत्रत्यं स्वरूपविवेचनं सतथ्यम्। अतो रूपकेषु, उपरूपकेषु, नृत्येषु च नाट्यत्वं समानं स्वीकृत्य नाट्यीयमात्रावैविध्यवशादवान्तरभेदत्वमेवाङ्गीकरणीयमिति तत्त्वम्।

"अवस्थानुकृतिर्नाट्यम्" इति पूर्वप्रपञ्चितं दशरूपकमपि स्वतः शुद्धं सदपि विवक्षितार्थप्रकाशनेऽसमर्थस्यावलोकस्य कारणवशादेव किमपि दूषितं प्रतिभाति। यतो नाट्यान्तर्गतानां दशरूपकाणामेव स्वविषयत्वाद् ग्रन्थकर्ता धनञ्जयः नाट्यस्वरूपं संकेतयति केवलम्। तस्मिँश्च नाट्यस्वरूपसंकेते अनुकृतित्वेन न वास्तविकमनुकरणमपितु कृत्रिमं कलात्मकं चेति किमप्यभिनयविशेषात्मकं वस्तु विवक्षितमस्तीति तथ्यमेवेदम्। लोकव्यवहारेऽपि कस्यापि वृद्धस्यावस्थाविशेषानुकरणं कश्चिद् बालकः कृत्रिमत्वेन कलात्मकत्वेन च करोति चेद् "नाटकमनेन क्रियते" इत्यधुनापि नैकवारं श्रूयत एव[2]। तद्वदेवात्राप्यनुकृतित्वेन नाट्यत्वमभिहितम्। किन्तु अवलोको दशरूपकस्याभुं भावं स्पष्टयितुं नैव चेष्टालवमप्यादधातीति तत्रापि धनिकस्यैव दूषणम्।

## अर्थप्रकृतयः

अर्थप्रकृतीनां प्रसङ्गेऽपि बीजमपास्य चतसृणामन्यासां व्यवस्थापने धनञ्जयस्य धनिकस्य चेति द्वयोरपि मतं सम्यगालोचनमर्हति। तथाहि "सानुबन्धं पताकाख्यम्" इति दशरूपककारिकांशे धनञ्जयोऽनुबन्धपदस्य नाट्यशास्त्रसम्मतं परस्परोपकारकारित्वपरम्[3] अर्थं विवक्षति उताहो विस्तृ-

१—"तस्मान्नृत्तं नाट्यादभिन्नं तल्लक्षणोपेतत्वात्।

२—दशरूपकस्य नान्दी टीका।

३—"यस्य सम्बन्धिवृत्तं संविदनुसन्धानं परस्य प्रयोजनसम्पत्तये भवदपि स्वप्रयोजनं सम्पादयतीति" ना० शा० १९ २४ अधिकृत्याभिनवभारती।

तिपरम् प्रथमार्थग्रहणे "दूरं यदनुवर्तते प्रासङ्गिकं सा पताका" इत्यवलोकस्तत्र विसंवदति। द्वितीयार्थोपादाने नाट्यशास्त्रविवक्षितस्तत्स्वार्थः किमर्थमुपेक्षित इति प्रश्नः[1]। नोपेक्षितं प्रत्युत व्याख्यातपूर्वं "प्रासङ्गिकं परार्थस्य स्वार्थो यस्य प्रसङ्गतः" इति चेन्न युक्तमेतदपि यतस्तदिदं व्याख्यानं पताकामिव प्रकरीमपि परार्थेन सह स्वार्थायापि परिकल्प्य नाटचशास्त्रीयं तत्त्वमधिकं ह्युपेक्षितं करोति। यतो नाटचशास्त्रे प्रकरी केवलं परार्थायैव स्वीकृता, न स्वार्थायापि[2]। किमर्थं नाटचशास्त्रीयं मतमेव वरमिति प्रश्ने सति न वेत्सि तत्त्वमिदं यद्रूपके प्रधानवस्त्वनुरोधवशादेव आधीयमानमाङ्गिकं वस्तु स्वल्पत्व दशायां स्वार्थायापि नैव संभवतीति। अतस्तत्त्वान्वेषणे धनञ्जयस्य दशरूपकं सदोषं विभाति।

किन्त्वत्रापि धनिकस्यावलोक एव दोषकारणतामुपैति। अन्यथा शक्यते दशरूपकमत्र सतत्त्वेन समर्थयितुम्। तत्र केवलमेको वितथः पाठस्तथात्वेन परिवर्तनीयो भवति। ततः परं सर्वमपि दूषणं तदीयावलोकस्यैव विलोक्यते। यतस्तावत् पताकाप्रकरीविवेचकं सावलोकं दशरूपकम् एतदस्ति—

"प्रासङ्गिकं व्याचष्टे—

प्रासङ्गिकं परार्थस्य स्वार्थो यस्य प्रसङ्गतः।

यस्येतिवृत्तस्य परप्रयोजनस्य, सतस्तत्प्रसङ्गात्स्व प्रयोजनसिद्धिस्तत् प्रासङ्गिकमितिवृत्तं प्रसङ्गनिर्वृतेः।

---

१—अत्र सविदेशानुबन्धो नाम "मदर्थं त्वमेतत्कुरु, त्वदर्थमहमेतत्करिष्यामो" ति —द० त० द० १४।

२—(क) फलं प्रकल्प्यते यस्याः परार्थायैव केवलम्।
अनुबन्धविहीनत्वात् प्रकरीति विनिर्दिशेत्॥
ना० शा० १९.२५।

(ख) अत्राभिनवगुप्तश्च प्रकरीं व्युत्पादयति "फलं प्रकल्प्यते यस्या यतश्च ततः परार्थमेव केवलं सर्वमनुतिष्ठति सा प्रकरी।......प्रकर्षेण स्वार्थानपेक्षया करोतीति।" इति॥ना० शा० १९.२५ अधिकृत्य।

प्रासङ्गिकमपि पताकाप्रकरीभेदाद् द्विविधमित्याह—

सानुबन्धं पताकाख्यं प्रकरी च प्रदेशभाक् ॥

दूरं यदनुवर्तते प्रासङ्गिकं सा पताका सुग्रीवादिवृत्तान्तवत्, पताकेवासाधारणचिह्नवत्तदुपकारित्वाद्, यदल्पं सा प्रकरी श्रमणादिवृत्तान्तवत् ।"

अत्र सर्वप्रथमं "प्रासगिकं परार्थस्य" इति कारिकांशे "परार्थस्य" नाम वितथपाठस्य स्थाने "परार्थाय" इति तथ्यात्मकः पाठः स्वीकार्यः । सर्वथा संभाव्य एवायं पाठभ्रमः । अतस्तत्वारोधात्तदीय शुद्धिकरणं ग्रन्थपालनमेवास्ति । इतः परं ग्रन्थव्यवस्थापने सदोषोऽवलोकः परित्याज्यः । दशरूपकस्य कारिका च एतत्प्रकारेण व्यवस्थापनीया—

प्रासंगिकं वस्तु व्याख्यायते—

प्रासङ्गिकं परार्थाय

प्रधानवस्तुनः प्रयोजनसम्पादने कथासौष्ठवधियैव प्रसङ्गतो गृहीतं यद् वृत्तं तत्प्रासङ्गिकम्, प्रसङ्गापेक्षित्वाद् प्रसङ्गव्यापित्वाद्वा ।

तत्राद्यं यथा—

स्वार्थो यस्य प्रसङ्गतः ।

सानुबन्धं पताकाख्यम्

मुख्यत आधिकारिकवस्तुप्रयोजनसिद्ध्यर्थं सहायकत्वेन गृहीतस्यापि यस्य प्रसङ्गात् वस्तुबलात्स्वकीयप्रयोजनमपि सिद्ध्यति तत्परस्परोपकारकारित्वेन सहितं सत्पताका नामकं प्रासङ्गिकम् ।

द्वितीयं यथा—

प्रकरी च प्रदेशभाक् ॥१३॥

अनुबन्धविहीना कथानकस्य प्रदेशविशेषव्यापिनी प्रकल्पयति परार्थमेवेति प्रकरीनामकं प्रासङ्गिकम् । तदेवं सङ्गमिते दशरूपके न विलोकयामि पूर्वोक्तदोषलेशोऽपि । सूत्रात्मकशैलीशासनान्तर्गतस्य ग्रन्थस्य कारिकासु द्वितीयतृतीयौ चतुर्थप्रथमौ वा पादौ कश्चिद्विषयो व्याप्नोत्येवेति नान्यथा शङ्कनीयम् । तस्मादत्र धनिकस्यावलोक एव दोषभाजन इत्यपि स्पष्टम् ।

विन्दुं नामार्थप्रकृतिं धनञ्जयो यत्नावस्थायामेव केवलं निवेशयतीति चिन्त्यमेतदपि[१]। यतस्तस्यैव भरतानुगतं "अवान्तरार्थविच्छेदे विन्दुरच्छेदकारणम्" इत्यस्ति विन्दुलक्षणम्[२]। प्रत्यङ्कान्तं च भवत्येव अवान्तरार्थविच्छेदः तिष्ठत्येव पुनस्तत्र किमप्यच्छेदकारणम्। तत्सर्वं किमर्थं न स्याद् विन्दुनामधेयमित्यस्ति प्रश्नः। विन्दुरेव तदिति "प्रत्यङ्कान्तं यो विन्दुः अनुसन्धानाभिधायिवाक्यम्"[३] इत्युक्तमभिनवगुप्तेन। बीजान्निर्वहणपर्यन्तं कुत्रापीयमर्थप्रकृतिर्नैकत्रारं स्थितिमर्हतीति भरतोऽप्याह—

प्रयोजनानां विच्छेदे यदविच्छेदकारणम्।
यावत्समाप्तिर्बन्धस्य स विन्दुः परिकीर्तितः॥ ना० शा० १९·१३।

तदेवं विन्दुविषयकं दशरूपकावलोकयोर्व्यवस्थापनमपि नैव सगतिमुपयाति। तत्र च धनिकस्यावलोक एव कारणमिति सन्धिप्रकरणे विवेचयिष्यामि।

कार्यं नामार्थप्रकृतिस्तु सावलोके दशरूपके नितान्तमव्यवस्थिता। तत्रत्यं तद्विवेचनं स्वयमेव सुदूरं भ्रमितम् तथाहि नाट्यशास्त्रेऽर्थप्रकृतीनां फलहेतुता स्वीकृता। आधिकारिकस्येतिवृत्तस्य यत्फलं भवति, तस्य फलस्य उपाया अर्थप्रकृतयो नाट्येतिवृत्तस्य स्वभावा एव सन्ति। परस्परं भिन्नानां चैतेषां वस्तुस्वभावानामर्थप्रकृतीनां यस्तिष्ठत्येकभावेन पारस्परिको विन्यासविशेषः, स फलस्य हेतुरिति कथितः[४]। अर्थप्रकृतीनां विषयकं नाट्यशास्त्रीयं फलहेतुत्वमिदं "अर्थप्रकृतयः प्रयोजनसिद्धिहेतवः" इति अवलोकवचनाद्दशरूपकेऽपि स्वीकृतं प्रतिभाति। किन्तु दशरूपकावलोकयोस्तयास्वीकृतिरियं तत्रैव कार्यमित्यर्थप्रकृतिविवेचनाद् विपरीतं विसंवदति। यतो ह्येतदस्ति कार्यविवेचकं सावलोकदशरूपकम्—

---

१— अर्थप्रकृतयः पञ्च पञ्चावस्थासमन्विताः।
यथासंख्येन जायन्ते मुखाद्याः पञ्च सन्धयः॥ दशरूपक २२, २३।

२— दशरूपक—१७।

३—ना० शा० १९·२ अधिकृत्याभिनवभारती।

४—आसां स्वभावभिन्नानां परस्परसमागमात्।
विन्यास एकभावेन फलहेतुः प्रकीर्तितः॥ ना० शा० १९·१५।

'तस्येतिवृत्तस्य किं फलमित्याह—

कार्यं त्रिवर्गस्तच्छुद्धमेकानेकानुबन्धि च ।। १६ ।।

धर्मार्थकामाः फलम् । तच्च शुद्धमेकैकानुबन्धं द्व्यनुबन्धं त्र्यनुबन्धं वा ।"

अत्र "तस्येतिवृत्तस्य किं फलम्" इति वाक्येन स्पष्टमेतदायाति यदत्र कार्याख्यार्थप्रकृतिः नाट्येतिवृत्तस्य फलत्वेनोपात्तमिति। किन्तु कथं नाम हेतुरेव फलमिति संभवम् । उपाय एव न भवति क्वचिदप्युपेयम् । अतोऽत्र प्रथमम् अर्थप्रकृतीनामुपायत्वं स्वीकृत्य पुनस्तदन्तर्गतस्यैव कार्यस्य उपेयत्व-प्रतिपादनं ध्रुव स्ववचनविरोधः । विरोधश्चासौ शास्त्रे भ्रमितस्यावलोकस्य दोषवशादेव दशरूपकेऽपि प्रतीभातीति न ह्यत्र धनञ्जयोऽपि दूषणीयः । धनिकस्यावलोकोऽपि कैश्चित्कारणैः भ्रमतामुपयातीति दर्शयामि । तद्यथा—

यदाधिकारिकं वस्तु सम्यक् प्राज्ञैः प्रयुज्यते ।

तदर्थो यः समारम्भस्तत्कार्यं सप्रकीर्तितम् ।।

ना० शा० १६ २६ ।

इति नाट्यशास्त्रीयकारिकायां "तदर्थो यः" इति सम्यक् पाठः "यदर्थश्च" इत्यनेन वितथपाठत्वेन परिवर्तते । धनिकश्चामुं वितथपाठमेव तथात्वेनाङ्गीकृत्य "यदर्थः समारम्भः स कार्यम्" इति तत्त्वशून्यं भ्रमित-मेवार्थं प्रतिपादयति । तदिदं स्यान्नाम तत्र प्रथमं निमूलं कारणम् ।[1]

अथ कारणस्य फलं कार्यमिति कथ्यते । सम्पूर्णमिति वृत्तं च प्रधान-फलस्य कारणं भवत्येव । अर्थप्रकृतयश्च महाफलस्य कारणानि स्वीक्रियन्ते । अस्यां स्थितौ अर्थप्रकृतयश्च महाफलस्य कारणानि स्वीक्रियन्ते । अस्यां स्थितौ अर्थप्रकृतीनामन्यतमं किमपि किमर्थं स्यात् कार्यं नाम । कारणमिति तन्नाम सार्थकम्, कार्यं तु फलमेव । अत कार्यमित्यर्थप्रकृतेर्नाम एव धनिकस्य शास्त्रभ्रमे संभवति द्वितीयं कारणम् किन्त्वेतदपि निमूलम् । यतः कारणस्य फलत्वमुपेतान्यपि विविधकार्याणि कस्यचिन् महाकार्यस्य नाम महाफलस्य हेतुत्वमपि समुपेयन्ते । तथैव बीजाख्यस्य कारणस्य फलत्व-

१—द्रष्टव्यम् "दशरूपकतत्त्वदर्शनम्" पृ० २१—२२ ।

मापन्नमपि कार्यमित्यर्थप्रकृतिः कथावस्तुमुखेन प्रधानफलस्य हेतुरपि भवत्येव तदुक्तमभिनवगुप्तेन—

"यद्वस्तु फलरूप प्रयुज्यते सम्पाद्यते सम्पाद्यत्वेनानुसन्धीयते तत्फल-प्रयोजनो यः सम्पूर्णतादायी पूर्वपरिगृहीतस्य बीजाख्योपायस्य फलम्, आरभते इत्यारम्भशब्दवाच्यो द्रव्य-क्रिया-गुणप्रभृतिः सर्वोर्थः ( यस्य ) सहकारी ( तत् ) कार्यमित्युच्यते ।"

अवलोकस्य तृतीयं भ्रमिकारणं दशरूपकस्थलक्षणवाक्यमेवास्ति । यतस्त्रिवर्गः प्रायेण मानवजीवनस्य प्रयोजनत्वेनाभिधीयते । अतस्तत्र कार्यलक्षणे त्रिवर्गशब्दस्य फलापरपर्यायत्वं मन्यमानो धनिकः कार्यस्येति-वृत्तफलत्व स्वीकरोति । अथ धनञ्जयः कथावतुनो भेदसामान्यमभिधा य सद्योऽव्यवहितमेव कार्यं नामार्थप्रकृतिं लक्षयति । धनिकश्च वस्तुसामान्य-प्रपञ्चानन्तर तत्फलस्य प्रसङ्गं वितर्क्य कार्येतिवृत्तयोरैक्यं द्रढयति । किन्तु वस्तुतो दशरूपकस्य कार्यलक्षणे निवेशितः त्रिवर्गशब्दः उपायोपेयसमाना-भिधायकः सन्नपि प्रसङ्गबलादत्र प्रकृतिमेव लक्षयति न फलम् । आधिकारि-की कथा कर्तुः कार्याख्यबौद्धिकयोजनागर्भान्निर्गता सती तथास्वभावसम्पन्ना भूत्वा प्रधानफलस्य हेतुतामुपयाति । अतो हेतुत्वापेक्षी मुख्यवस्तुनः स्व-भावविशेष एव कार्यं नामार्थप्रकृतिः । स्वकीयप्रकृतिभावितत्वात् तथा-स्वभावसम्पन्नत्वाद्वा क्वचिदुपचारतया कथावस्त्वपि स्वप्रकृतिनाम्ना-भिधीयते चेत्तत्र तयोरन्तर न विस्मर्तव्यम् ।

शोधच्छात्रः, संस्कृत-विभागे, विश्वविद्यालयः, सागरम्

---

१—ना० शा० १६.२६ अविकृत्याभिनवभारती ।

# ग्रन्थसमीक्षणम्

## नाट्यशास्त्रीयपारिभाषिकशब्दानुक्रमणिका—

सं० डॉ० रामजी उपाध्यायः, भारतीयसंस्कृतिसंस्थानम्, नारीबारी, प्रयागः। पृ० ४०, मू० १५ रूप्यकाणि। प्र० सं०१९८०।

भारतीय नाट्यशास्त्रं नाम काव्य–नाट्यनृत्य–सङ्गीत–साहित्य-वस्तु-प्रभृतिविद्यानामाकर ग्रन्थ इति न तिरोहित विपश्चिताम्। वस्तुतो न भारतीयं किमपि शास्त्रं नाट्यशास्त्रमुपेक्ष्य सप्रमाणमधिगन्तुं न शक्यते। 'न तज्ज्ञान न तच्छिल्पं न सा विद्या न सा कला या नाट्यशास्त्रे न दृश्येतेति सर्वथा युज्यते वक्तुम्। तस्य चैवम्भूतस्यास्य शास्त्रस्य भारतीय-विद्याया ह्रासकालेऽस्मिन् अध्ययनाध्यायनं सर्वथा उपेक्षाविषयः सञ्जातः। दशरूपकाद्यवलोकादिपरवर्त्यप्रामाणिकग्रन्थावलोकनमात्र परायणाः पण्डितम्मन्या मूलग्रन्थं परित्यजन्तो मूलं नास्ति कुतो शाखेति न्यायेन नाट्यशास्त्रपरिशीलनं समूलं विच्छेदयन्ति। हर्षस्यायं विषयो यन्नाट्य-शास्त्रे बहुना कालेन कृतश्रमः क्षोमक्षमं विषयममुमनुसन्धानपरायणया धियावगाहमानो दशरूपकतत्त्वदर्शन–प्रयोगविज्ञान–प्रभृतिग्रन्थानां निर्माता डॉ० उपाध्यायमहाभागः भरतमुनेर्नष्टप्रायपरम्पराया पुनरुज्जीवनाय पुनरुन्-मीलनाय च कृतप्रतिज्ञ आस्ते। नाट्यशास्त्रं नाम अपारः पारावारः, तत्र च अनुसन्धातॄन् पारङ्गतान् विधातुं पारिभाषिक–शब्दानुक्रमणिकेयं प्रभवतीति मन्यामहे। अत्र अकारादिक्रमेण नाट्यशास्त्रगताः सर्वेऽपि-विषयाः प्रसङ्गाश्च सङ्कलय्य सूचिताः। अनुक्रमणिकाया अस्याः प्रकाश-नात् नाट्यशास्त्रानुशीलने सौकर्य स्यात्, अनुसन्धानस्य च दिशोऽपि प्रकाशिताः स्युरिति विश्वसिमः। श्लाघ्यस्यास्य श्रमस्य कृते सर्वथा साधु-वादार्हः सम्पादकः।

( राधावल्लभः )

**वैदिकसंग्रहः**–सं० डॉ० श्रीकृष्णलाल, ईस्टर्न बुक लिंकर्स, दिल्ली।

पृ० २२२, मू० दशरूप्यकाः। द्वि० सं० १९७७।

सङ्कलनमिदं स्थालीपुलाकन्यायेन वैदिकवाङ्मयस्य सर्वाङ्गपूर्णं परिचयं प्रस्तौति संहिताभ्यो ब्राह्मणेभ्य सुपाठ्याः प्रतिनिधिभूता अंशा अत्र सङ्कलिताः तेषु ऋक्संहितायाः अग्नीन्द्रोषस्वरुणमरुद्विष्णुसोमसूक्तैः सह अक्ष–हिरण्यगर्भ–सज्ञानसूक्तानि सङ्ग्रहमिमं मण्डयन्ति। यजुर्वेदात् शिव-सङ्कल्पसूक्तम् आ ब्रह्मन्निति सूक्तं चात्र गृहीते। अथर्ववेदस्य साम्मनस्य-सूक्तेन सह पृथिवीसूक्तस्य चतुर्दश मन्त्रा एव पुरस्कृताः। ऐतरेयब्राह्मणात् 'चरैवेति' इति शतपथाच्च अग्निहोत्रावयवोपासने'ति स्थलद्वयमत्र वैदिक-गद्यस्वरूपमुपस्थापयति। पाठालोचने सम्पादकस्य विविध संस्करणावहन–पुरस्सरं समीक्षात्मिका दृष्टिः स्फुटैव। विशेषतश्च सायण–वेङ्कटमाधव–प्रभृतीनां भाष्येभ्यः सारमुद्धृत्य तेन साधु विहितम्। तथापि यदि सायण-भाष्यमविकलं यद्यत्र स्यात्, तर्हि ग्राह्यतरमिदं सङ्कलनमभविष्यत्। हिन्दी-भाषया विशदां टीकां विधाय विदुषा सम्पादकेनास्य छात्राणां कृत उपादेयता सुसाधिता।

( राधावल्लभः )

**वेदमञ्जरी**–सं० डॉ० सिद्धनाथशुक्ल, किसलयप्रकाशनम्, प्रयागः।

पृ० १५१, मू० सप्तरूप्यकाः। प्र० सं० १९८०।

सङ्कलनेऽस्मिन् संहिताभ्यो नवसूक्तानि विस्तृतभाषाटीकादिसहितं सङ्कलितानि। सायणमहीधरभाष्ययोरविकलं समावेशः सङ्ग्रहस्यास्य विशेषः। मन्त्राणामन्वयेन सह पदपाठमपि प्रदाय विशदव्याकरणात्मक-टिप्पणीश्च संयोज्य सम्पादकेन साधु विहितम्। सङ्कलनमिदं बालानां सुखबोधायालमिति मन्यामहे।

( राधावल्लभः )

**पातञ्जलयोगसूत्रम्**–व्यासभाष्यम्, विस्तृतभाषानुवाद–व्याख्योपेतम्, व्याख्याकारः—श्रीमत्स्वामी–हरिहरानन्द आरण्यः, सं०–डॉ० रामशङ्करभट्टाचार्यः प्र०–मोतीलाल बनारसीदास दिल्ली। पृ० ५८०, मूल्यम्–३५ रूप्यकाः। तृतीय–सं १९८०।

पातञ्जलयोगसूत्रस्य व्यासभाष्यं प्राचीनं सुप्रथितं च विद्यते। अत्र तदुपजीव्य वङ्गभाषायां श्रीमदारण्यहरिहरानन्दमहाभागानां व्याख्यान विद्वत्सु समादृतं वरीवर्ति। ग्रन्थस्यास्य वङ्गभाषायां पञ्चसंस्करणानि प्रचारमापुः। प्रस्तुतः प्रबन्धः स्वामिना हरिहरानन्दवर्याणां तस्यैव व्यासभाष्यव्याख्यानस्य हिन्दीरूपान्तरभूतः। व्याख्यानस्य हिन्द्यनुवादः कलिकाताविश्वविद्यालयात् प्रकाशितं चतुर्थं वङ्गसंस्करणमुपजीव्य स्वामिनां सुयोग्यशिष्यैरेवेदम्प्रथमतया विहितः। अनन्तरमय लक्ष्मणपुर-विश्वविद्यालयस्य हिन्दीविभागीयैर्विपश्चिद्भिः संशोध्य १९५२ तमे ताब्दे प्रकाशमानीतः। इदमपि संस्करणं चिरादर्शनं गतं नूतन-संस्करणप्रकाशनापेक्षा जनयति स्म। दर्शनशास्त्रस्य सुयोग्य–प्राध्यापिकाया विदुषीललामभूतायाः डॉ० सूरमादासगुप्तामहोदयायाः सत्प्रयासैर्विविध-टिप्पणीभिः संवलितं सुविस्तृतं योगसूत्र–व्यासभाष्यतट्टीकोपेतमिदं संस्करणं प्रकाश्यता गतमिति हर्षस्यायं विषयः। भारतीयदर्शनस्य, विशेषतो योगसूत्रस्याध्येतॄणा कृत इदं परमोपकारकं स्यात्।

**श्रीब्रह्मसूत्रम्**–शाङ्करभाष्योपेतम्। पृ० ५२०, मू० २५ रूप्यकाणि प्र०–मोतीलाल बनारसीदास, दिल्ली।

महर्षिबादरायणप्रणीतस्य ब्रह्मसूत्रस्य विविधसंस्करणानि तैस्तैर्भाष्यैः संवलितानि काले काले प्रकाश्यतां जग्मुः। प्रस्थानत्रय्या परिगणितं ब्रह्मसूत्रं यथा वेदान्तदर्शनस्य प्रवर्तकं, तथैवैतदधिकृत्याद्यशङ्कराचार्योपज्ञं भाष्यमपि

अद्वैतवेदान्तस्याकरः। अथैतत् भाष्यं चिरात् सौकर्येणासुलभमासीदित्यस्मिन्नेकस्मिन्नेव ग्रन्थेऽस्य प्रकाशनं वेदान्ताध्येतॄणां कृतेऽस्य सुलभत्वं विधायस्यतीति निश्चप्रचम्।

**उपनिषत्संग्रहः**—भागद्वयात्मकः। सं०—जगदीशलालशास्त्री। पृ० २७५+४७५, मू० ६० रूप्यकाणि। प्र०—मोतीलाल बनारसीदास, दिल्ली। १९८०।

उपनिषत्सङ्ग्रहस्य प्रथमे भागे ईशादिर्विंशोत्तरशतोपनिषदः सङ्गृहीताः, द्वितीये च योगाद्यष्टोत्तरषष्ट्युपनिषदः। एषु ईश–केनकठप्रभृतय एकादश आद्या उपनिषदः, सूर्य–गणपति–गणेश–कृष्ण–प्रभृतयो विविधदेवविषयिण्य उपनिषदस्तथैव अद्वैत–तुरीय–शौनक–प्रभृतयः वेदान्तोपनिषदस्तथा च तास्ताः वैष्णव–शैव–शाक्तोपनिषदः सर्वा अप्यत्र पदं कारिताः। एकस्मिन्नेव ग्रन्थे सर्वासां सङ्ग्राह्यानामुपनिषदामुपस्थित्या भारतीयदर्शनस्य निरवधि–कालखण्डे प्रसृता परम्परा परिचीयते, उपनिषद्दर्शनस्य चौदात्यमविच्छिन्नत्वं चानुभूयत इति दिक्।

**संस्कृतसाहित्यसंग्रहः**—सं० डॉ० गजाननशास्त्री मुसलगावकरः- प्र०—किताबघर, हायकोर्ट रोड, ग्वालियर। पृ० १२८। मू० ४·५० रू०

सङ्कलनेऽस्मिन् छात्राणां संस्कृतबोधाय रामायण–रघुवंश–पञ्चतन्त्र–हितोपदेश-भर्तृहरिशतक–भोजप्रबन्धादिग्रन्थेभ्यः तैत्तिरीयोपनिषदो मृच्छकटिकनाटकाच्च साकल्येन त्रयोविंशतिः पाठाः प्रस्तुताः। आरम्भे भाषोपज्ञा विस्तृता भूमिका, अन्ते चार्थज्ञानाय संक्षिप्तभाष्याणि सङ्कलनस्योपयोगितां प्रगुणितां विदधति। संस्कृतवाग्द्वारे प्रवेशाय सङ्ग्रहोऽयमलमिति मन्यामहे।

(राधावल्लभः)

**नीतिसंग्रहस्य मित्रलाभः**–सं० पं० गौरीनाथ पाठकः, प्र० शारदा प्रकाशन संस्थानम्, पृ० १०२, मू० ५ रूप्यकाणि तृतीय सं० १९८०

पुस्तकमिदं हितोपदेशमित्रलाभस्यैव सरलीकृत रूपम्। मूलग्रन्थे सम्पादकेन क्वचित् सरलाः सुग्राह्याश्च श्लोकाः संयोजिताः। अन्वयो विशदा व्याख्या च सरलमपि पुस्तकं बालाना बोधाय सरलतरं विदधतः।

**ईशादिदशोपनिषदः**–शाङ्करभाष्ययुताः' प्र० मोतीलाल बनारसीदास, दिल्ली। पृ० १०१२, मू० ३० रूप्यकाणि, ११७८

अस्मिन् ग्रन्थे ईश–केन–कठ–प्रश्न–मुण्डक–माण्डूक्य–तैत्तिरीयैतरेय–छान्दोग्य–बृहदारण्यकानि–दशोपनिषदः सशाङ्करभाष्यमेकत्र प्रकाश्यं नायिताः। उपनिषत्तत्वज्ञानाय शाङ्करवेदान्तानुशीलनाय च प्रबन्धोऽयमतितरामुपादेय।

**लिङ्गपुराणम्**–शिवतोषिणीसंस्कृतटीकोपेतम्, सं० पं० जगदीशलालशास्त्री, 'रायल'–आकारे पृष्ठा. २४०, मू० ७५ रूप्यकाणि। १९८०। प्र०–स एव।

पुराणसाहित्ये सुप्रथित लिङ्गपुराणं भागद्वयात्मक संस्कृतटीकासंवलितमत्र प्रकाशितम् ग्रन्थारम्भे आङ्ग्ली–संस्कृतोभयभाषोपज्ञया भूमिकया पुराणसाहित्ययपरिचयस्तन्महत्वं लिङ्गपुराणकालनिर्णयस्तद्वैशिष्ट्य च परिशीलितम्। लिङ्गपुराणं शैवपुराणेष्वन्यतमम्। महापुराणेष्वपीदं परिगणितम्। लिङ्गपूजाया इतिहासपरिज्ञानाय प्रमाणपुरस्सरमस्मिन् विवेचनं विहितम्। भूगौलिकी सांस्कृतिकी च दशाप्यत्र विशदं विवृता दृश्यते। अन्यच्च सुदीर्घे कालेऽस्य पुराणस्य रचनाप्रक्रिया प्रसृतेति तथ्यं समधिकतरेण महत्वेनैतन्मण्डयति। प० वासुदेवशरणाग्रवालमहोदयैरस्य रचनाकालस्त्रिषु खण्डेषु विभक्तः। प्रथमो भागोऽष्टाधिकशताध्यायमितः कुषाण-

कालीनः। एतस्मिन् कालावधौ पाशुपतसम्प्रदायः सुतरां वृद्धिमापन्नः। द्वितीयो भाग आ नवमाध्यायमा सप्तविंशत्यध्यायं गुप्तयुगे सम्पन्नः। तत्रापि पाशुपता एव प्रभवन्ति। उत्तरभागस्य आरम्भिका अष्टौ अध्याया अन्ते च आ विंशत्यध्यायमापञ्चपञ्चाशदध्यायमष्टाविंशत्यध्यायाः परवर्तिकाले प्रवेशिताः। भूमिकायां सम्पादकेन वासुदेवशरणस्य मतमिदं सम्यक् समीक्षितम्।

अस्य पुराणस्य एकैव टीकोपलभ्यते गणेशनाथकृता। सा च १७५० शकाब्दे विरचितेति तत एव ज्ञायते। एतद्व्याख्योपेतत्वात् प्रबन्धोऽयमधिकतरमुपादेयतां बिभर्ति।

**प्रत्यभिज्ञाहृदयम्**—टीकाकारः—डॉ० जयदेव सिंह। प्र०—मोतीलाल बनारसीदासः, दिल्ली। पृ० १६०, मू० १२ रूप्यकाणि।

शैव दर्शने प्रत्यभिज्ञाशास्त्रेषु क्षेमराजस्य 'प्रत्यभिज्ञाहृदयम्' अतितरां महत्त्वमावहति। सोमानन्दस्य शिवदृष्टौ उत्पलदेवस्य चेश्वरप्रत्यभिज्ञायां विवृतस्य प्रत्यभिज्ञादर्शनस्य सारमत्र क्षेमराजेन सम्यगुपन्यस्तम्। श्रीमान् जयदेवसिंहश्च शैवसिद्धान्तपरिशीलने कृतश्रमः। तस्य विवेचनं मूलग्रन्थं सर्वथा सरलीकृत्योपस्थापयति।



# मुकुन्दविलास महाकाव्यम्

**प्रणेता–महाकविः नीलकण्ठदीक्षितः**

सम्पादकः—डॉ॰ राधावल्लभ त्रिपाठी, प्रकाशकः–संस्कृत परिषदः, विश्वविद्यालयः, सागरम्–४७०००३ ( म॰ प्र॰ ) ! प्रकाशनवर्षम्–१९८०
पृष्ठसंख्या–५४, मूल्यम्–१० रूप्यकाणि

लघुकाव्यमहाकाव्यनाटक चम्पू प्रभृति विविधग्रन्थानां रचयिता सप्तदशख्रिस्तशतकभवः महाकविर्नीलकण्ठः साहित्योपासकेषु सुप्रसिद्ध एव। पण्डितानामन्वये जातस्य नीलकण्ठस्य प्रतिभा तदनुरूपा इति, तस्य मुकुन्दविलासमहाकाव्यानुशीलनात् ज्ञायते। महाकाव्येऽस्मिन् कति सर्गा. विलसन्ति इति वक्तुं न शक्यते। चतुर्थसर्गस्य पञ्चदशश्लोकपर्यन्तमुपलब्ध-मिदं महाकाव्यं कथानके नूतनगरिम्ण आधानेन निर्दुष्टकल्पनासौष्ठवेन संस्कृतमहाकाव्येषु अभिनवपदं न्यस्य राजते। असम्पूर्णेऽस्मिन् महाकाव्ये कथावस्तुन. किदृशी परिकल्पना कवेर्मनसि आसीदिति वक्तुं यद्यपि न शक्यते तथापि तस्य शिवलीलावर्णनमहाकाव्यवत् अत्र श्रीकृष्णस्य विविध-लालाना वर्णने कविना उपक्रान्तं स्यादिति प्रतीयते। ग्रन्थभागोऽयं श्री कृष्णजन्मोत्सववर्णनपर्यन्तं पुराणप्रसिद्धकथावस्तुना शोभते। प्रथमे सर्गे दैत्यत्रासाकुलहृदयायाः वसुधाया ब्रह्माणं प्रति स्वदुःख विज्ञापन, तया सह विधातुः विष्णुसमीपं गमन, दैत्यदमनाय विष्णो भूमाववतरणपूर्वकं सान्त्वनं वर्णितम्। द्वितोय सर्गे नृपतेरुग्रसेनस्य शासनं चित्रीकृत्यसजन्म, तत्कृतं पितुः कारागारबन्धनं देवक्या विवाहः वसुदेवस्य च कंसाय स्वापत्य-समर्पणप्रतिज्ञादिक वर्णितमस्ति। तृतोये सर्गे कारागारे स्थितस्य वसुदेवस्य दुर्दशा दर्शयन् श्रीकृष्णस्य चमत्कारभूतं जन्म वर्णितम्। चतुर्थे तु श्रीकृष्णं प्राप्य वृन्दावने समुल्लासः वर्णितः।

असम्पूर्णं सदपि काव्यमिदं महती काव्यसमृद्धि प्रकटयति। काव्ये-ऽस्मिन् यथा उदात्तता तथैव प्रतिभोन्मेपचारुतापि मनो हरति। प्रथमे

सर्गे सुमेरुपर्वतस्य वर्णनम् अतीवरमणीयम् । स्थाने स्थाने उपमारूपकादीनां समुचितोविन्यासः कवेः सूक्ष्मदृश पुष्णाति । एवमेव अस्य भाषायाः मसृणता अनेकत्र मनोहरति—

चतुर्थे सर्गे वृन्दावनवर्णनं निरीक्षणपूर्वकं प्रकटीकृतम् ।

अतः वैदग्ध्यविलासभूतं महाकाव्यमिदं प्रथमतया प्रकाशतया डॉ० त्रिपाठिमहोदयेन काव्यरसिकेभ्य. पण्डितेभ्योऽनुसन्धान-निरतेभ्यश्छात्रेभ्यः बहूपकृतम् । भूमिकाया महाकवेः नीलकण्ठस्य जीवनंकृतित्वं, तस्य साहित्यकी प्रतिभा, काव्य सौष्ठवमौदात्त्य च सम्पादकमहोदयेन विस्तरश उद्घाटितम् ।

तत्पूर्वकालिकाना समकालिकाना च कवीनामप्यत्र परिचयं प्रदाय तत्प्रसङ्गेन नीलकण्ठस्य वैशिष्ट्यं सम्यगुन्मीलितम् ।

क्षेत्रवासी पण्डा

## रक्तदानम्

### लेखकः आचार्य डा० वनेश्वर पाठकः,

सस्कृतविभागाध्यक्षः, सेंट जेवियर्स कालेज, राची ( विहारः )

वितरणकर्ता—सुवोध ग्रन्थमाला कार्यालयः, पुस्तकपथः, रांची ।

पृष्ठ सख्या—२५, मूल्यम्—४ रूप्यकाणि, प्रकाशनवर्षम् १९८०

साम्प्रतं समाजेऽस्मिन् विविधानां समस्यानामभ्युदयात् तासां समाधानं काव्यनाटकेषु आवश्यकं स्यात् । अत आचार्यवरेण डॉ० वनेश्वर पाठक महोदयेन विरचितमिदं रक्तदान नाम लघुनाटक साम्प्रतिकी यौतकादान-कुप्रथा समालोचयन् युगानुरूपता भजते । नाटकेऽस्मिन द्वौ अङ्कौ विद्येते । अस्य कथावस्तु इत्थं विन्यस्तम्—यौतकादानभारात् सुन्दर्यायाः सुशीलायाः सुशिक्षितायाश्च स्वकन्यायाः उमायाः विवाहसम्बन्धे कुत्रचिद् स्थिरतां न प्राप्ते कन्याजन्मआत्मनो जघन्यपापस्य फलमिति मन्यमानो विफलमनोरथः लिपिक शैलेन्द्रो विषं पातु प्रवृत्तोस्ति । परन्तु उमास्वयमेव विषं पीत्वा

स्वपितरं वीतचिन्तं कर्त्तुमिच्छति। ततः चिकित्सालये प्रापितायाः उमायाः कृते अपेक्षितं रक्तं पूर्वत एव तां पत्नीत्वेनाभिलषन् चिकित्सकः शंकरः ददाति। स स्वपुत्रव्यवसायिनः पितुः कैलासचन्द्रस्यानिच्छया न किञ्चिद् कर्त्तुं प्रभवति स्म। ततः रक्तं ददन्तं स्वपुत्रं प्राणसंकटे पतितं दृष्ट्वा कैलासचन्द्रोऽपि स्वकीयमपराधं स्वीकुरुते। अतः परं उमाशंकरस्य सम्बन्धो योज्यते।

शंकरस्यादर्शभूतेनानेन रक्तदानेन सर्वे नवयुवकाः तथा कैलासचन्द्रस्यान्तिमजीवनदर्शनेन सर्वे पुत्रव्यवसायिनः पितरः प्रभाविता स्युः।

सम्प्रति प्रचलितामिमां यौतकादानकुप्रथां विरुन्धता आचार्यपाठकमहोदयेन विरचितं संस्कृतभाषायामद्वितीयमिदं लघुनाटकं संस्कृत साहित्याधुनिक प्रगतिप्रदर्शकमिव प्रतीयते। प्रथमोऽङ्कस्य द्वितीये दृश्ये परिश्रान्तस्य कन्यापितुः शैलेन्द्रस्य मनोगतभावमतीव मर्मस्पृक्—

"भगवान् दीनं मनुष्यं निःसन्तानमेव कुर्यात् तद् वरम्, किन्तु तमसौ ससन्तानं कर्त्तुमिच्छति चेत् तस्मै स कन्यां कदापि न प्रददातु।"

(पृ०—५)

नाटकेऽस्मिन् नूतनसंस्कृतशब्दानां प्रयोगोऽसकृत् विहितः यथा—"चायः ( Tea ) साधु विनिर्मितः"। अत्र सर्वेषु वाक्येषु पद्येषु च भाषाया मसृणता मनोहरति। नाटकस्यास्य प्रस्तावनायां सुरभारतीं प्रति कमपि नवीनमनुरागं प्रकटयति कविः। एवं च प्रसादगुणगुम्फितं नाटकमिदमाधुनिकलघुनाटकेषु शोभते। क्षेत्रवासी

# महाराष्ट्र-पतञ्जलिः

पण्डित दीवि श्रीनिवासदीक्षितः

भवति खलु जगति उत्तुङ्गतरङ्गा भाषागङ्गा व्याकरण कूलङ्कषा। चिदम्बरसभामण्डपे नृत्तावसानसमये नटराजढक्कानिनादादुद्भूता संस्कृत-व्याकरणगङ्गा सूत्र–वार्तिक-भाष्यरूपमार्गत्रयमाश्रित्य प्रवहन्ती भावना-रम्यससारस्वतकेदारा भवतीति तद्भाषाभाषिणामदृष्टविशेषः एव।

विभिन्नमानवजातिमध्ये सांस्कृतिकसमन्वयसाधकः कार्यक्रमः एकोन-विंशतितमे ख्रीस्तवर्षे प्रारब्धः.........क्रमेण विजृम्भितश्च। तत्कार्य-क्रमान्तर्गत एव संस्कृतग्रन्थभाषान्तरीकरणव्यासङ्गः। 'यूरप्' खण्डे तद्व्यासङ्गः बहुमुखरूपेण वितेने। तत्वतश्चाय व्यासङ्गः संस्कृतवाङ्मय-प्राचाराय प्रसाराय तत्तद्भाषावाङ्मयसम्यग्विकासाय च पारिजातसुम-कल्पितमृदुमार्गमभूदिति वचनं सुवचमेव। अस्मिन्नेव समये व्याकरण-महाभाष्यस्य महाराष्ट्रभाषान्तरीकरणे श्री वासुदेवशास्त्री अभ्यङ्करः समुद्योगं वितेने।

अतिप्राचीनकालादारभ्य अद्यतनपर्यन्तं महाराष्ट्रदेशः संस्कृतसाहिती-चरणमञ्जीरनादैः पुलकितः परवशः प्रपत्ति गतश्च। तादृशभाषायां सम्यग-नूदितं महाभाष्यं तद्देशजनानां गृहारामे मधुरफलनम्रः सहकारतरुरेव।

पूनानगरजनन्याः मृदुवदनकमले स्वपाण्डित्यवैभवेन विशदकीर्ति-कान्तिकरेषु महामहोपाध्यायपदलाञ्छनेषु रामदीक्षित आप्टे, भीमाचार्यो झल्कीकरः, वासुदेवशास्त्री अभ्यङ्करः श्रीधरशास्त्री पाठकः, वासुदेव-शास्त्रिणः प्रियशिष्यः सिद्धेश्वरशास्त्री चित्रावः, पूना विश्वविद्यालयस्य भूतपूर्व उपकुलपतिः दत्तो वामनः पोद्दारः इति इमे पण्डिता मूर्धायमानाः सन्ति।

प्रतिष्ठान महाविद्यालयकुलपतेः संस्कृतपण्डितमण्डलमण्डनात् रामेश्वर-भट्टमहोदयादारभ्य वासुदेवशास्त्री अभ्यङ्करपर्यन्तं नाम द्वादशपुरुषान्तर–

पर्यन्तमपूर्वा संस्कृताचार्यशिष्यपरम्परा महोज्ज्वलपाण्डित्यप्रभाकलिता चकासते स्म। तत्प्रभाकिरणपरिव्याप्ता महापुरुषा एव मधुसूदनसरस्वती–भट्टोजी दीक्षित–हरिदीक्षित–नागेश भट्ट–नीलकण्ठशास्त्री थत्ते, भास्करशास्त्री–अभ्यङ्कर–प्रभृतय.। एतेषु नीलकण्ठशास्त्री थत्ते महाशयः भारतवर्षस्य सास्कृतिकराजधान्यां वाराणस्यां क्षोदक्षम शास्त्रानधीत्य 'पेशवा-प्रभूणां शासनकाले पूनानगरमागत्य तत्रैव निवसन् शास्त्राध्यापनेन शिष्यपरम्परा सृष्ट्वा पूनानगरस्य द्वितोयसास्कृतिकराजधानीति कीर्तिं प्रख्यापयामास। पूर्वोक्तपरम्परा – प्रभापरिव्याप्तास्सर्वे पाणिनीयपाथोनिधि जलकेलीसक्तचित्ता न्याय–मीमांसा–वेदान्तादिशास्त्रकाननेषु यथेच्छ सञ्चरितुं समर्थाः व्याकरण शास्त्रं च तेषा समेषां समुचिता सुमपादुका समभवत्। शास्त्रपरि-पूर्णकलाधरेषु तेषु वासुदेवशास्त्री अभ्यङ्करः शरद्राकाशशाङ्कः।

महापण्डितोऽयं शालिवाहनशके पञ्चाशीत्युत्तरसप्तदशशततमे वत्सरे १७८५ अधिक श्रावण कृष्णषष्ठ्या नाम क्रीस्तुशके त्रिषष्ट्युत्तराष्टादशशततमे वत्सरे १८६३ 'सतारा' नगरे जनिमलभत। जनकस्तस्य महादेवशास्त्रो पितामहश्च भास्करशास्त्री अभ्यङ्करः। असौ भास्करशास्त्री पूना पाणिन्याचार्यस्य नीलकण्ठशास्त्रीथत्तेवर्यस्य चरणोपान्तमाश्रित्य प्रथमशिष्यो भूत्वा शब्दशास्त्रे कूलकङ्कषवैदुष्यमलभत। ततश्चाय सतारा नगरे संस्कृतविद्यालयं संस्थाप्य व्याकरणशास्त्र–सम्प्रदायानुसारं प्रवाचयन् शब्दतत्त्वविदामपि पाषाणपाकप्रायस्य 'शब्देन्दुशेखरस्य' व्याख्या निर्ममे। विद्वन्मण्डल्या 'विद्वन्मुकुटरत्न' लाञ्छनेन सभाजितश्च।

वासुदेवशास्त्रिणः शैशवे एव नाम द्वितोयवर्षे एव जनक. दिवङ्गतः। अष्टमवर्षे वयसि पितामहश्च कालहतकेनापहृतः। भवबन्धतन्तवस्सपदि त्रुटिताः। एवं पितृपितामहवियोगाद्वासुदेवो द्वितीयोऽभूत् तस्य स्वजीवित कुसुमैव विद्याकैरवकौमुद्याः गिरां देव्याः पदयुगलमर्चयितुं सदवकाशस्सम्प्राप्तः। तदा भास्करशास्त्रिणः प्रियशिष्यः 'रामशास्त्री गोडबोले' स्वाचार्यप्रतिष्ठितं संस्कृतविद्यालयं यथापूर्वं निर्वहन् शास्त्रप्रवचनं कुर्वन्नाचार्य-

वंशाङ्कुरं वासुदेवशास्त्रिणं परिपोषयन् स्वशास्त्रवैदुष्यबीजानि सर्वाण्यपि वासुदेवशेमुषीक्षेत्रे न्यक्षिपत्। कालक्रमेण बीजानि तानि प्रवृद्धानि विविध-ग्रन्थप्रणयनरूपेण फलप्रदान्यभवन्।

एकनवत्युत्तराष्टादशशततमे वर्षे १८९१ रामशास्त्री स्वशिष्यं वासुदेवशास्त्रिणमुद्योगाय पूनानगरं प्राहिणोत्। तत्र संस्कृतविद्यालये वासुदेवशास्त्री प्रधानपण्डितस्थानं लेभे। अत्रैव न्यायमूर्तिना 'महादेव गोविन्द रानडे' महोदयेन सिस्नेह। मुम्बापुरीस्थकलाशालासु सुप्रसिद्धायाः 'फेर्गुसन्' कलाशालायाः प्रांशुपालस्य प्रधानसंस्कृताचार्यस्य च श्रीमतः 'वामन् शिवराम् आप्टे' महोदयस्य अकालनिधनेन द्विनवत्युत्तराष्टादश-शतमे (१८९२) वत्सरे तत्स्थानं श्री रानडेवर्यस्य संस्तुति पत्रप्रदानेन वासुदेवशास्त्रिणे प्रदत्तम्। पदव्यामस्या षट्त्रिंशद्वत्सरपर्यन्तं कालं याप यित्वा विद्याप्रदानेन अष्टाविंशत्युत्तरैकानविंशतिशततमे (१९२८) संवत्सरे विश्रान्तः। सकलशास्त्रवैदुष्याभूषितोऽप्ययं विद्यार्थिना सर्वदाभिगम्य एवाभवत् नहि प्रवृष्य.।

अपि चास्य प्रोत्साहपर्यवेक्षणप्राणाः बाम्बे नगरस्था. अनेके संस्कृत-विद्यालयाः शास्त्रिणस्संस्कृतभाषाप्रचारविषये दीक्षामावेदयन्ति।

अनेन संस्कृतविद्याव्याप्त्यर्थं विहितामनितरसाधारणसेवा श्रुत्वा शासनं शास्त्रिणं एकविंशत्युत्तरैकोनविंशतिशततमे १९२१ वत्सरे 'महा-महोपाध्याय' पदलाञ्छनमकरोत्। शास्त्रपाण्डित्यमस्य परिशील्य सङ्के-श्वरपीठाधीश्वराः श्रीशङ्कराचार्यवर्याः 'विद्वद्रत्न, विरुदेन सममानयन्। 'बाम्बे विश्वविद्यालये' पूनास्थ-वेदशास्त्रोत्तेजक सभायाश्चोन्नतपरीक्षासु अनेकवत्सरपर्यन्तमसौ परीक्षाधिकारी।

एतादृशानेकगुणविशिष्टस्यास्य पञ्चसप्ततिजन्मदिनोत्सव अतिवैभवेन निर्वाहितः अष्टात्रिंशदुत्तरैकोनविंशतिशततमे (१९३८) संवत्सरे परस्स-हस्रशिष्यै. पौरप्रमुखैश्च। संस्कृतकविर्विद्वान् राजकीयकोविदश्च श्री के० एन्० दुन्शा महोदय तत्सम्मानसभाध्यक्षः महाराष्ट्रमहाभाष्यप्रथमसम्पुट-स्याविष्कर्ता च।

परिणतप्रज्ञोऽयं वार्धके एतद्ग्रन्थप्रणयनकार्ये व्यापृतस्सन् भगीरथ इव तपस्समाधिमनुभूय द्विसप्ततितमे वर्षे वयसि पञ्चत्रिंशदुत्तरैकोनविंशतिशततमे ( १९३५ ) वत्सरे महाभाष्यभाषान्तरीकरणं परिसमापितवान्। महाग्रन्थममुं स्वपञ्चसप्ततितमे जन्मदिनोत्सवे स्वप्रवचनपरिपूर्णायाः 'फेर्गुसन्' कलाशालायाः उपायनरूपेण प्रददौ शास्त्रिवर्यः। सप्तसम्पुटसंज्ञाभितोऽयं ग्रन्थः शास्त्रिणः जीवितकाले प्रथम–द्वितीय–सम्पुटौ, ततः तृतीय–चतुर्थ–पञ्चम–षष्ठ सम्पुटाः, विशेषतः तत्तनयेन महामहोपाध्याय–काशीनाथ वासुदेव अभ्यङ्कर-पण्डितेन विरचितबृहत्पीठिकानुक्रमणिकासमेतः सप्तमसम्पुटश्च प्रचुरिताः।

वासुदेवशास्त्रिणश्शिष्याः परस्सहस्राः तेषु महामहोपाध्यायः सिद्धेश्वरशास्त्री चित्रावः, रङ्गाचार्यः रेड्डी, शङ्करशास्त्री मारुलकर। दिगंवर शास्त्री काशीकरः, गणेशशास्त्री गोडबोले, भगवान् शास्त्री थारुरकर, लक्ष्मणशास्त्री सुरगुडकरः प्रभृतयः सुविख्याताः।

नवत्रिंशदुत्तरैकोनविंशतिशततमेन ( १९३९ ) हायनेन वासुदेवः दिव्यलोकं नीतः स्वीयैस्सुचरितैः सुरचितैस्सुकृतिसन्तानैश्च सत्कीर्तिमूर्तिं गतः। तस्य जन्म दिनशताब्दमहासमारोहः त्रिषष्ट्युत्तरैकोनविंशतिशततमे ( १९६३ ) वत्सरे 'आगस्ट्' मासे पुण्यपत्तने महता वैभवेन समाचरितः।

अथाऽस्य अनश्वरा ग्रन्थसन्ततिर्यथा—

अद्वैतामोदः, कायपरिशुद्धिः, धर्मतत्त्वनिर्णयः, धर्मतत्त्वनिर्णयपरिशिष्टः, असमग्रः मोक्षामोदः, विशिष्टाद्वैतमतम्, साधनामोदः सूत्रान्तरपरिग्रहविचारः इति ग्रन्थाष्टकं शास्त्रिणः स्वोपज्ञकम्।

अद्वैताङ्कुरः, भगवद्गीतायाः प्रथम-द्वितीयाध्याययोर्व्याख्या, परिभाषेन्दुशेखरव्याख्या, प्रायश्चित्तेन्दुशेखर व्याख्या, मीमांसान्याय प्रकाशव्याख्या, लघुशब्देन्दुशेखरव्याख्या, सिद्धान्तबिन्दुव्याख्या, सर्वदर्शनसङ्ग्रहव्याख्या चेति ग्रन्थाष्टकं शास्त्रिणः निशितधिषणागर्भितम्।

ततः अनेन महानुभावेन ब्रह्मसूत्र शाङ्करभाष्यम्, व्याकरणमहाभाष्यञ्च महाराष्ट्रभाषायां परिवर्तितम्।

काव्यप्रकाशः, कुण्डार्कटीका, न्यायकोशः, ब्रह्मसूत्रशाङ्करभाष्यटिप्पणी, यतीन्द्रमतदीपिका, पतञ्जलियोगसूत्राणि, श्रीभाष्यस्य प्रथम-द्वितीयसम्पुटौ, श्रीभाष्यप्रथमसूत्रटिप्पणी, श्रीभाष्यचतुस्सूत्रटिप्पणी, संस्कारपद्धतिश्चेति दशग्रन्थाः वासुदेव शास्त्रिणः प्रामाणिक-परिष्कार-भाग्यं प्राप्ताः ।
अतएव—

'चतुर्भिश्च प्रकारैर्विद्योपयुक्ता भवति-आगमकालेन स्वाध्यायकालेन प्रवचनकालेन व्यवहारकालेनेति' महाभाष्यकारवचनमस्य महाराष्ट्र-पतञ्जलिर्जीवनदर्शने समुचितं समन्वित भवति ।

महाराष्ट्रप्रान्ते व्याकरणशास्त्रसम्प्रदाये मुनित्रयेण साकं 'भास्कर-शास्त्री, रामशास्त्री गोडबोले, वासुदेवशास्त्री अभ्यङ्करादिगुरुत्रयं' स्मरन्ति सुधीवराः। तद्विषयमेव वासुदेवशास्त्रिणः पुत्रः काशीनाथ वासुदेव अभ्यङ्करः सूचयत्येवम् ''

श्रीभास्करं ज्ञानकरैः प्रचण्ड
श्रीरामचन्द्रं शशिवत्सुसौम्यम् ।
श्रीवासुदेवं प्रतिशास्त्रभिन्नं
गुरुत्रयं प्राञ्जलिरानतोऽस्मि ।।

मनीषिणस्तस्य प्रसङ्गदृष्टिरेव एका शास्त्रगोष्ठी'' तस्य जीवनगतिरेव एका शास्त्ररीतिः* ।।

अध्यक्षः
संस्कृतविभागस्य
यस० के० आर्० वि० आर्० कालेज, नरसारावु पेट ( आं० प्र० )

* विजयवाटिका—आकाशवाणी सौजन्येन ।

# वैदिक साहित्ये अश्विनौ

डॉ० नेति अनन्तराम शास्त्री

ऋग्वेदे महत्व पूर्ण देवतासु इन्द्राग्नि सोमानामनन्तरं अश्विनौ स्थानं लभेते। पंचाशत्सूक्तेषु समग्रतया केषुचित् अन्येषु सूक्तेषु इतराभिः देवताभिः सह एतौ आहूतौ। अश्विनौ कौ इति प्रश्नस्य समाधानर्थं प्रचुरा सामग्री लभ्यते। एकत्र तौ अहोरात्राविति, एकत्र दयालू राजानौ इति, एकत्र उषस्सन्ध्ये इति, एकत्र मिथुन नक्षत्र रूपतया च, वर्णितौ।

एतौ दिवः पुत्रौ। वेदेषु दिवोनपाताः इति अनयोः व्यवहारः। केषुचित् स्थलेषु इमौ विवस्वत. त्वष्ट्र-दुहितुः 'शरण्यू' नामिकायाः जाताविति वर्णितौ। 'पूषा' अनयोः पुत्रः। उषा अनयोः भगिनी।

एतत् युग्मं प्रकाशदेवते। इमौ मिथुनदेवौ। एकतरं आभ्यां पृथक् कर्तुमशक्यम् सदा अश्वारूढत्वात् अनयोः अश्विनौ इति नाम। इमौ सूर्यमित्रे। सूर्याश्विना मैत्री सूर्यपुत्री विवाहेन दृढतरा अभवत्। सूर्यदुहितुः चन्द्रमसा विवाहसमये एतौ चन्द्रमसः सवन्धिनौ इति वर्णितौ। अनेन ज्ञायते इतराभ्योऽपि देवताभ्यः अनयोः सूर्येण सबम्ध. अधिकतरः इति। अनेनैव कारणेन एतौ सूर्येण सह सदा संचरतः।

मधुरसः अनयोः प्रियतरः। माध्वी मधु इति विशेषणे इमं तथ्यं द्रढयतः। आभ्याम् धृतं चर्म पात्रं सदा मधुपूर्णम् भवति। एकदा एतौ शतघटमितं मधु भुवि स्यन्दयामासतुः। एतौ भ्रमरेभ्यः मधु दत्तः। भ्रमरैः सह अनयोः सादृश्यं वर्तते। यद्यपि मधु अनयोः प्रियतरं तथापि सोमपाने अस्ति अभिनिवेश। सोमरसं एतौ सूर्यया. उषसा च, मिलित्वा पिबतः। अस्मिन् प्रसङ्गे उदाहृता मधुकणा. प्रायशः उषसि तुहिन बिन्दवः। अनयोः रथमपि मधु बिभर्ति। एष रथः सूर्य इव स्वर्णः। एषः ऋभुभिर्विनिर्मितः। नानाजन्तवोऽमुं नयन्ति। क्वचिन्महिषौ क्वचिद् गर्दभौ, क्वचिच्च पक्षिणौ नयतः। एषः रथः द्यावापृथिव्योश्चतुर्दिक्षु च एकेन अह्ना प्रदक्षिणं कुरुते।

अश्विनौ मनुष्याणां मित्रे। बहुषु स्थलेषु एतौ नरौ इति व्यवहृतौ। एतौ मनुष्याणां सहायतां कुरुतः। अत एव भक्ताः अमू—

"उपायातं दाशुषे मर्त्याय। रथेन वाममश्विना वहन्ता। युयुतमस्मद-निरामतीवा दिवा नक्तं माध्वीं त्रासीयानः"।

इति आह्वयन्ति। एतौ उदारौ दानवंतौ इति "सुदानू" 'मखवाना' इति विशेषणाभ्यां ज्ञायते। अनयोः 'नासत्यौ' इति विशेषणमेतौ नित्यसत्य-स्वरूपौ इति बोधयति। एतौ आश्चर्यमयौ इति दस्रा इति विशेषणेन ज्ञायते। इमौ बलशालिनौ। अतः न कोपि आभ्यां अपराध्यति। अतः 'तुविष्मा अद्रिगू' इति अनयोः व्यवहार। एतौ मध्यस्थाननिवासिनौ सिनौ, समुद्रनिवासिनौ सर्वव्यापिनौ युवानौ अपि एतौ पुरातनौ अत्यन्तं सुन्दरौ कान्तिमन्तौ, पद्ममालाधारिणौ, मेधाविनौ, अनयोः हिरण्य वर्तनि इति विशेषणेन एनयोः मार्गः स्वर्णमयः इति ज्ञायते।

उषषि सूर्योदयात् प्राक्, अग्नेः उषसश्च अनन्तरं सूर्यस्य ग्रीष्मरूप-प्राप्ते प्राक् च, अमू उद्यीत। एतौ अन्धकारमयात् अशुभान् च आत्मनः दूरी कुरुत।

मनुष्य मनुष्य माद्विषत् इति जीवित-संघर्षे उत्पन्नाः दोषा अपसरन्तु इति आधिव्याधयः निवारिता भवन्तु इति च इच्छया भक्ताः अमू पूजयन्ति। अश्विनौ भिषजौ सर्वरोग निवारकौ च। एतौ कष्टेभ्यो मनुष्यमुद्धरतः। मनुष्याणां युद्धेषु विजयेच्छयापि अमू पूज्यौ, तथापि स्वेषां जीवितं शान्तिमय भूयादिति अभिप्रायेणैव जना अमू पूजयन्ति। सुखमय दीर्घायुषः प्राप्तये दम्पत्योः गृह-प्रवेश समये अश्विनौ प्रार्थितौ भवत।

बह्वीषु कथासु अनयोः दातृत्व वर्णितम्। भुज्यनामानं स्वभक्तं प्रवहण भंगेन समुद्रे निमज्जन्तम् एतौ उद्धृतवन्तौ। अनेनैव प्रकारेण अन्यानपि जनान् कष्टेभ्यः मोचयामासतु.।

"अनारम्भणे तदवीरयेथामनास्थाने अग्रभणे
समुद्रे। यदश्विना ऊहथुः भुज्युमस्तं
शतारित्रां नावमातस्थिवांसम्"।

ग्रीक पुराणेषु द्वौ अश्वारूढौ दिवः ( zens ) यमौ पुत्रौ वर्तेते। एते हेलन सोदरयोः इष्टकस् नामकयोः सादृश्यं बिभ्रतः। अपि च लाटिक देवता द्वितयेन सहाप्यनयोः सादृश्यमस्ति।

अश्विनो. नामान्तरं 'दिवोनपाता' इति लाटिक् wewal weli पदेन, लिथिवेनिया 'Devo Seueli' पदेन च सादृश्यं बिभर्ति। अनयोः पत्न्याः सूर्यायाः लाटिक देवतायाः zuaes नामकायाः देवतायाः साम्यमस्ति। अनयोः व्यवहारः कोल्काक्षरेषु शासनेषु दर्शनात् एतौ इन्डोयूरोपियन् कालिनौ इति ज्ञायते।

मन्त्री,

संस्कृत भाषा प्रचारिणी सभा

चित्तूरु ( आं० प्र० )

# सागरिका



ऊनविंश-वर्षे द्वितीयोऽङ्कः

२०३७ विक्रम-संवत्सरे

प्रकाशकः

सागरिका-समितिः, गौरनगर

सागर (म० प्र०)

# सागरिका

## ऊनविंश-वर्षे द्वितीयोऽङ्कः


सम्पादकाः

डा० रामजी उपाध्यायः (प्रधानः)
डा० रेवाप्रसाद द्विवेदी
डा० राधावल्लभ त्रिपाठी
डा० रामगोपाल मिश्रः



व्यवस्था-कार्यालयः

सागरिका-समितिः,
गौरनगर
सागर (म०प्र०)

सम्पादन-कार्यालयः

भारतीय-संस्कृति-संस्थानम्
नारीबारी
इलाहाबाद

प्रकाशक.

**डा० राधावल्लभ त्रिपाठी**

अध्यक्षः

सागरिका-समितिः

गौरनगर, सागर

देयम्

| | |
|---|---|
| प्रत्यङ्कम् | ४.०० रूप्यकाणि |
| वार्षिकम् | १५.०० रूप्यकाणि |
| आजीवनग्राहकस्य | २००.०० रूप्यकाणि |
| प्राचीनाः सर्वेऽङ्काः सवस्त्रपुटबन्धाः Cloth Bound Vols. | ५००.०० रूप्यकाणि |
| आजीवन-ग्राहकाणां कृते सर्वेऽङ्काः | २००.०० रूप्यकाणि |
| वर्षे १-५ प्रत्यङ्कम् | ७.०० रूप्यकाणि |
| वर्षे ६-१० ,, | ६.०० रूप्यकाणि |
| वर्षे ११-१५ ,, | ५.० रूप्यकाणि |
| वर्षे १६-१९ ,, | ४.०० रूप्यकाणि |
| अङ्कप्रकाशः | प्रतिवर्षम् आषाढाश्विन-पौष-चैत्र मासेषु [जून-सितम्बर-दिसम्बर-मार्च] |

मुद्रकः
अरुण प्रेस
तिलभाण्डेश्वर, वाराणसी

# विषयानुक्रमणिका


१. नाट्यशास्त्रीय-पारिभाषिक-शब्दानुक्रमणिका डा० रामजी उपाध्यायः १–४०

२ रङ्गमण्डपम् डा० राधावल्लभ त्रिपाठी ४१–६९

३. अङ्केऽपि सूच्यम् डा० रामजी उपाध्यायः ७०–७१

४ भारतीय नाट्यशास्त्रस्येदानीन्तनोपयोगः डा० राधावल्लभ त्रिपाठी ७२–८२

५ शाङ्करवेदान्ते ईश्वर-स्वरूपम् तारादत्तः ८३–९४

६ विष्णुधर्मोत्तरीयो नाटिका-प्रकरणी-विमर्शः श्री परमानन्द मिश्र ९५–९७

७ शङ्करनये ब्रह्मविद्याधिकार निरूपणम् तारादत्तः ९८–१०२




सूत्रदृक् ३६.१३
सूत्रधार १·६७, ६८; ५ २८, ६५, ७१, ७४, ८०, १००, १०४, १३४, १६१,१६२, १६३; २०.३०; ३५ ३०
सूत्रभृत् ५.६८, ९६
सूर्याभिनय २५.८
सेना १७.९८; २५.७९
सैन्धवक १९.१३१; ३१·३५८
सोम्य १७.७६
सौकर-सत्त्वाङ्गना २२.१३३
सौकुमार्य (गुण) १६.१०७
सौष्ठव १०.८९, ९०, ९३; १२ ६४ १११; २६.३३
—अङ्ग १० ९२
स्खलित ४ १४७
स्खलित-विक्रमा ३२.१७२
स्तम्भ १.८६; २.९५; ७.९६, १०१
—द्वार २ ६२
स्तम्भन (ऊरु) ९.२५२, २५५
स्तम्भस्थापन २.५४-५६
स्त्री २२ ९९–१०१
(एकविंशति विधाः)
—वाद्य ३४ २३६
—स्थान १२ १६०
स्थान ४ १६९; ९ १७१
स्थानक २२ २५९
स्थानीया १७·८६
स्थापक ५·१६२, १६३
स्थापिता (नायिका) २४ ४०, ४२
स्थायिभाव-दृष्टयः ८·४२
स्निग्धा, हृष्टा, दीना, क्रुद्धा दृप्ता, भयान्विता, जुगुप्सिता विस्मिता)
स्थायी (अष्ट) ७ ७
स्थायी भाव ६.१७, ३२
स्थायी वर्ण २९ १६
स्थित पाठ्य १९ १२३; ३१·३३९
स्थिताध्रुवा ३२.३१९,३२१
स्थितावर्ता (चारी) १० १५
स्थिर हस्त ४.१७७
स्थैर्य २२.३७
स्पर्श २२.८३
स्मित ६.५४
स्मृति ७ ५४
स्यन्दिता (चारी) १० २६
स्वप्न (सन्ध्यन्तर) १९·१०९
स्वप्नायित २५ ९५
स्वभाव २१.२०३
स्वभावज विकार २२.१२
लीला, विलासादि)
स्वभाव रौद्र १२·५०, ५३
स्वर ६.१०, २७; १४.१०८; २८.१५, २१–२२
(वादी, सवादी, विवादी, अनुवादी)
स्वरभेद ७·९९, १०४
स्वसा १७.९०
स्वस्तिक ४·७५, ७६; ९.२२०; २५·१९
स्वस्तिक-रेचित ४.६८, १९९; ९.१८७ (हस्त) ९·१३५-१३६
स्वस्थगतिप्रचार ३४.२२४-२३४
स्वाधीनभर्तृका २२.२१५, २२५
स्वामिनी १७.८८;२४.३८-३९
स्वामी २२ ३०९
स्वेद ७ ९५

## ह

हंसपक्ष ९.११३
— हस्त ९.१०६–१०९, १८५, २०२
हंसमुख हस्त ९.१०४–१०५
हंसास्य ३२.२८८–२९०
हण्डा १७.७४
हय २१.२०६
हयसत्त्वाङ्गना २२.१३५, १३६
हरिणप्लुत ४.१४४
हरिणप्लुता (चारी) १०.४३
हरिवर्ष १३.२१
हर्ष ७.६१
हला १७.९१
हसित ६.५५
हस्त ९.१७५
हस्तकर्म ९.७-१७
(असंयुत हस्तकर्म, संयुतहस्तकर्म, नृत्तहस्त) ९.१६५-१६९
हस्तकर्म
(उत्कर्षण, विकर्षण, अपकर्षण, परिग्रह, निग्रह, आह्वान, तोदन, संश्लेष, वियोग, रक्षण, मोक्षण, विक्षेप, धूनन, विसर्ग, तर्जन, छेदन, भेदन, स्फोटन, मोटन, ताडन) ९.१६६
—आह्वान ९.१६६
—उत्कर्षण ९.१६८
—छेदन ९.१६७
—तर्जन ९.१६७
—धूनन ९.१६६
—निग्रह ९.१६८
—ताडन ९.१६६
—तोदन ९.१६६
—परिग्रह ९.१६८
—मोक्षण ९.१६८
—मोटन ९.१६६
—विकर्षण ९.१६७
—रक्षण ९.१६७
—विक्षेप ९.१६७
—वियोग ९.१६७
—विसर्ग ९.१६६
—व्याकर्षण ९.१६७
—संश्लेष ९.१६८
—स्फोटन ९.२०२
—हंसपक्ष ३३.२१
हस्तगुण ९.१७०; १८२
हस्तप्रचार
(उत्तान, वर्तुल, त्र्यश्र, स्थित, अधोमुख) ३४.६२
हस्तसंचार ९.१७१, १७९
हस्ताभिनय २२.१२३ १२४
हस्तिसत्त्वाङ्गना २२.१०
हाव ७.१०
हास ८.४९ ५५
हासे दृष्टिः
हास्य (स्मित, हसित, विहसित, अति-उपहसित, अपहसित, अति-हसित) ६. ४२, ४४, ४९, ५२
हासे दृष्टिः ८.४९
हास्ये भावाः ७.११०
हीनसन्धि १९.७
हृदय-ग्रहण २३.२७
हृदय संवादी ७.७
हृदयस्थ २२.७०
हेतु १६.१४; १९.१०९
हेमन्ताभिनय २५.२९
हेला २२.११
ह्री (सन्ध्यन्तर) १९.१०८

# पीठबन्धः

नाट्यप्रयोगसौकर्याय नाट्यगृहाणि नाम अतिपुरातनकालादेवास्मिन् भारते वर्षे निर्मितानि। समुद्रमन्थनव्यायोग-त्रिपुरदाहडिमादिप्रयोगास्त्वादौ ऋते रङ्गशालां सम्पादिताः, पश्चाच्च समुद्रमन्थनप्रयोगे दानवानामुपद्रवं परिलक्ष्य प्रेक्षागारनिर्मितये भरतो ब्रह्मणा प्रेरित इति नाट्यशास्त्रकृत् प्रमाणयति।

प्राचीन-भारते प्रेक्षागृहा उल्लेखैरनेकैः प्रसिद्धा एव। महाभारते प्रेक्षागार उल्लिखतः। बौद्धानां विनयपिटके कोटगिरिसंस्थिता रङ्गशाला निरूपिता। तथापि यथा नाट्यनिदर्शननैपुण्येन तौर्यत्रिक-सूत्रधारत्वेन वा तथैव नाट्यभवननिर्माणविधावपि निर्णायकत्वेन भारतभुवि भगवान् भरत एवेदम्प्रथमतया प्रभवति।

## प्रेक्षागृहप्रमाणम्

भरतेन नाट्यवेश्म-नाट्यमण्डप-प्रेक्षागृह-प्रेक्षागार-प्रभृतयः पर्यायाः शब्दाः प्रयुक्ताः।[1] नाट्यमण्डपश्च तेन विकृष्ट-चतुरस्र-त्र्यस्रेति त्रिधा भेदितः।[2] एतेषां च विकृष्ट-चतुरस्र-त्र्यस्रनाट्यमण्डपानां ज्येष्ठ-मध्यमावर-भेदेन त्रीणि प्रमाणानि निर्दिष्टानि।[3] प्रमाणं चैतेषां हस्तदण्डसमाश्रय भरतेन निर्दिष्टम्।[4]

हस्तदण्डप्रमाणविषये सन्ति विद्वत्सु विप्रतिपत्तयः। भरतेन सर्वत्र प्रेक्षागृहाणां प्रमाणं हस्तेष्वेव निर्दिष्टम्, ६४ × ३२ इति मानं यथा हस्तेषु तथा दण्डेष्वपि यदि क्रियते, तदा तु अतिदीर्घाकारं प्रेक्षागार स्यात्, तच्च भरतमतविरुद्धं भवेत्।[5] अत एव हस्तानां मानाय निर्मितो दण्डः हस्तदण्डः, तेन च हस्तेषु प्रमाणं कार्यमिति 'हस्तदण्डसमाश्रय'-त्वेन भरतस्य आशय इति मनकड-महाशयोऽभिप्रैति। अन्ये तु यथा ६४ × ३२ इत्यादि प्रमाणं यथा हस्तेषु तथा दण्डेष्वपीति भरतसम्मतमिति ब्रुवते। अभिनवगुप्त इदमेव मतमुपोद्बलयन् प्रेक्षागारस्याष्टादशविधित्वमुरीकरोति।

---

१. द्र० ना० शा० २।१–४, ६, १२३
२. विकृष्टश्चतुरस्रश्च त्र्यस्रश्चैव तु मण्डपः। (ना० शा० २।८)
३. तेषां त्रीणि प्रमाणानि ज्येष्ठं मध्यं तथावरम्। तत्रैव
४. ना० शा० २।९।
५. अत ऊर्ध्वं न कर्तव्यः कर्तृभिर्नाट्यमण्डपः।
यस्मादव्यक्तभावं हि तत्र नाट्यं व्रजेदिति॥
मण्डपे विप्रकृष्टे तु पाठ्यमुच्चारितस्वरम्।
अनिःसरणधर्मत्वाद् विस्वरत्वं भृशं व्रजेत्॥ (ना० शा० २।२१–

यथ—

कनिष्ठस्तु स्मृतं त्र्यस्रं चतुरस्रं तु मध्यमम् ।
ज्येष्ठं विकृष्टं विज्ञेयं नाट्यवेदप्रयोक्तृभिः ॥ ना० २।१४

इत्यत्र कनिष्ठत्र्यस्रं, चतुरस्रमध्यमं ज्येष्ठविकृष्टं चेति त्रिविधत्वमेव नाट्यगृहाणाम् । अन्यत्र तु नवविधत्वं भरतेन कथितम् । यथा—

विकृष्ट-चतुरस्र-त्र्यस्र-नाट्यमण्डपानां प्रत्येकस्य ज्येष्ठ-मध्यमावरभेदात् नवविधत्वं प्रेक्षागृहस्य ।[1] तत्रापि हस्त-दण्ड-प्रमाणद्वयापेक्षया अष्टादश भेदाः ।[2] यादृशं रूपकमभिनेयं तादृशमेव नाट्यगृहे तत्कृते प्रयुज्यते—

देवानां तु भवेज्ज्येष्ठं नृपाणां मध्यमं भवेत् ।
शेषाणां प्रकृतीनां तु कनीयः संविधीयते ॥— ना० शा० २।११

अत्राभिनवगुप्तो युक्तं व्याचष्टे—'यत्र देवासुरप्राया एक नायकप्रतिनायकास्तत्र डिमादावारभटीप्रधाने विततरङ्गपीठोपयोगात्, भाण्डवाद्यप्रधानत्वाच्च परिक्रमणादेरुच्चतर-दीर्घतर-दीर्घताल-परिग्रहादियोगाच्च व्यक्तभावस्यासम्भवादष्टोत्तरशतहस्तो मण्डप इत्यर्थः ।'

तथाप्युपर्युक्ताष्टादशभेदेषु व्यावहारिकदृशा न सर्वेषामुपयोगः कर्तुं शक्यते ।[3] एतेषु विकृष्टमध्य एव सर्वथा प्रशस्यः प्रयोज्यश्चेति भरतोऽपि भाषते—

चतुष्षष्टिकरान् कुर्याद्दीर्घत्वे तु मण्डपम् ।
द्वात्रिंशतं च विस्तारान्मर्त्यानां यो भवेदिह ॥
अत ऊर्ध्वं न कर्तव्यः कर्तृभिर्नाट्यमण्डपः । ना०शा०२।२०,२१

अत एव भारतीयनाट्यमण्डपविचारे विकृष्टमध्य एव परामृश्यते ।

मण्डपनिर्माणं समायां स्थिरायां भूमौ कार्यम् । तत्र प्रथमं शोधनमनन्तरं लाङ्गलेन समुत्कर्षणं, ततः परं च सूत्रेण प्रमाणं क्रियते । दैर्घ्येण चतुःषष्टिकराणां मानं कृत्वा द्विधा विभजनीयम् । एतस्य द्विधाभूतस्य भूमिभागस्य पृष्ठतो यो भागः स पुनर्द्विधा विभाज्यः । एवं पृष्ठभागेऽपि षोडशहस्तौ द्वौ भागौ भवतः । विस्तारस्तु सर्वेषां भागानां द्वात्रिंशद्धस्तपरिमित एव । पृष्ठगतभागद्वये रङ्गपीठं, रङ्गशीर्षं नेपथ्यगृहं चेति त्रितयं प्रकल्प्यते । रङ्गपीठ-रङ्गशीर्षयोः प्रत्येकं दैर्घ्येणाष्टहस्तं भवति, नेपथ्यगृहं च षोडशहस्तम्, विस्तारेण च द्वात्रिंशद्धस्तमेव ।

---

१. एतेषां ज्येष्ठ-मध्यमावराणां क्रमेण अष्टोत्तरशत-चतुष्षष्टि-द्वात्रिंशद्धस्ता मानम् । यदाह भरतः—

अष्टाधिकं शतं ज्येष्ठं, चतुःषष्टिस्तु मध्यमम् ।
कनीयस्तु तथा वेश्म हस्ता द्वात्रिंशदिष्यते ॥ ना० शा० २।१०

२. 'एवं त्वाष्टादश भेदाः शास्त्रे निर्दिष्टाः'—ना० शा० २।९ अभिनवभारती ।

३. 'ते चावश्यं न सर्वेऽप्युपयोगिनस्तथापि च सम्प्रदायाविच्छेदार्थं निर्दिष्टाः ।' तत्रैव

केचित्तु रङ्गपीठरङ्गशीर्षयोरवस्थितिमधिकृत्य विसंवदन्ते, तन्न न्याय्यम् । रङ्गशीर्षस्य पश्चिमे भागे भवति नेपथ्यगृहमिति स्पष्टमेवोक्तं भरतेन—

समममर्घविभागेन रङ्गशीर्षं प्रकल्पयेत् ।
पश्चिमे च विभागेऽथ नेपथ्यगृहमादिशेत् ॥ ना० शा० २।३८, ३९

अभिनवगुप्तस्याप्यत्राविसंवादि मतं विद्यते—'ततः षोडशहस्तौ द्वौ भागौ भवतः । पृष्ठगतं भागमर्धेन विभज्याष्टहस्तं रङ्गशिरः । प्रविशतां पात्राणां चान्तःस्थानम् । नाट्यमण्डपस्य ह्युत्तानसुप्तवदवस्थितस्य रङ्गपीठं मुखम् । तदष्टहस्तं शिरः । तत्पृष्ठे तु दैर्घ्यार्धं षोडशहस्तं नेपथ्यगृहं भवति ।'[1]

नाट्यमण्डपस्योत्तानसुप्तपुरुषवदवस्थितौ पादभूमौ प्रेक्षागारम्, अनन्तरं रङ्गपीठं, ततो रङ्गशिरः तत्पृष्ठे च नेपथ्यगृहमित्येव क्रमोऽत्र प्रकटितः । विकृष्टमण्डपे रङ्गपीठापेक्षया रङ्गशीर्षमुन्नतं भवति, चतुरस्रे पुनः सममेव—

समुन्नतं समं चैव रङ्गशीर्षं तु कारयेत् ।
विकृष्टे तून्नतं कार्यं चतुरस्रे समं पुनः ॥ ना० शा० २।१०५

तथा चाभिनवगुप्तोऽपि रङ्गशीर्षस्योच्छ्रायं स्वीकुरुते ।[2]

१. अभिनवभारती ( ना० शा० २।३८ ) ।
२. 'विकृष्टमण्डपे रङ्गपीठापेक्षया रङ्गशिर उन्नतं वक्ष्यते । ना० शा० २।१०३-अ० भा० ]

# मत्तवारणी

मत्तवारणीनिर्माणविधिर्भरतेनेत्थं निर्दिष्टः —

रङ्गपीठस्य पार्श्वे तु कर्तव्या मत्तवारणी।
चतुःस्तम्भसमायुक्ता रङ्गपीठप्रमाणतः॥
अध्यर्धहस्तोत्सेधेन कर्तव्या मत्तवारणी।
उत्सेधेन तयोस्तुल्यं कर्तव्यं रङ्गमण्डपम्॥

—ना०शा० २।७०,७१

अभिनवगुप्तस्य मतेनात्र 'पार्श्वे' इत्यनेन पदेन उभयोः पार्श्वयोः, मत्तवारणीत्यत्रैकवचनेन च मत्तवारणीद्वयमेव विवक्षितम्। प्रेक्षागारापेक्षया सार्धहस्तपरिमाण उच्छ्रायो रङ्गपीठस्य भवति। अथ मत्तवारणी तदपेक्षयापि सार्धहस्तोत्सेधेन निर्मीयेत, उत तत्तुल्योत्सेधेन प्रेक्षागारापेक्षयैव सार्धहस्तोत्सेधोऽस्याः स्यादित्यत्र प्रश्नः। 'अध्यर्धहस्तोत्सेधेन कर्तव्या मत्तवारणी'-ति भरतोक्तिं विवेचयन्नभिनवगुप्त उभयमपि पक्षमुपस्थापयति।[1] मत्तवारणी अष्टहस्तविस्तारा समचतुरस्रा चतुःस्तम्भसमायुक्ता स्यादित्यत्र तु नास्ति विसंवादः। मत्तवारण्याः स्थितिमुपादेयतां चाधिकृत्य नैकमत्यम्। भरतस्य काल इयं सुविज्ञाता भवेत्, परवर्तिकाले पुनः प्रेक्षागृहेषु मत्तवारणी-निर्माण-परम्परा व्यलुप्यत इति प्रतीयते, यतो हि नाम विष्णुधर्मोत्तरपुराण-सङ्गीतरत्नाकर-सङ्गीतदामोदर-शिल्परत्न-प्रभृति नाट्य-वास्तुशास्त्र-ग्रन्थेषु प्रेक्षागृह-निर्माण-प्रकरणे इयमनुल्लिखिता। अभिनवगुप्तोऽप्यस्याः स्वरूपविषये नास्ति स्पष्टः। मानसार इयं किञ्चित् स्पृष्टा। तथैव समराङ्गणसूत्रधारेऽप्यस्या विवरणं प्राप्यते। मानसारे तु मत्तवारणस्य पर्यायाः प्रोक्ताः। यथा—

कपोतं प्रस्तरं चैव मञ्चं प्रच्छादनं तथा।
गोपानं च वितानं च वलभी मत्तवारणम्।
विधानं च तुपं चैवमेते पर्यायवाचकाः॥

मानसारे १४।९।१०

---

१. ततोऽपि बहिर्भित्तेरष्टहस्तान्तरस्तम्भापेक्षयाऽप्यष्टहस्तान्तरं स्तम्भद्वयमित्येतावदित्यष्टहस्तविस्तारा समचतुरस्रा मत्तवारणी भवति। ......अन्येषां हस्तमानोऽत्र यथा रङ्गपीठापेक्षया च सार्धहस्तपरिमाण उच्छ्रायः कार्यो मत्तवारण्याः। तयोरिति द्विवचनं ज्ञापकमेतच्चरितार्थमितीह नापेक्षित इति तस्या एव यावानुत्सेधस्तावान् रङ्गपीठस्य। तेन अधनभूभागापेक्षया सार्धहस्तप्रमाणोन्नतं रङ्गपीठमित्युक्तं भवति। तेन मत्तवारण्यालोकेन नात्यर्थं रङ्गपीठस्य दृष्टिक्षता। एतच्चोत्सेधेनेत्येकवचनेन सूचितम्। अन्यथोत्सेधाभ्यामित्युच्येत। अभिनव० ना० शा० २।७०,७१

समराङ्गणसूत्रधारे च राजप्रासादेषु मत्तवारणं निर्माप्यमिति निर्दिष्टम्—

मुखभद्रं भवेद् युक्तं वेदिका-मत्तवारणैः ।
क्षेत्रभागोदयार्धा भूराभूमिफलकान्तरम् ॥
स स्यादभीष्टविस्तारो भागोच्चं मत्तवारणम् ।
स्वोदयस्य त्रिभागेन तिर्यक् कार्योऽस्य निर्गमः ॥

राजगृहाध्याये १०१९

एतेन यावान् मत्तवारण्या उत्सेधस्तस्य तृतीयभागेन भागं कृत्वा उपरि छत्रं निर्माप्यमिति गम्यते ।

राजशेखरेण मत्तवारणीविषये निर्दिष्टं काव्यमीमांसायाम् । तथाहि अष्टभिः स्तम्भैरुपेता मत्तवारणी काव्यपरीक्षार्थं विहितायां शालायां कारणीया ।

विद्धशालभञ्जिकायां मत्तवारण्या रङ्गप्रयोगविषये भूयोऽपि राजशेखरः साकूतं सङ्केतयति । अस्या नाटिकाया द्वितीयाङ्के उद्याने नायिकाया आगमनं प्रतीक्षमाणं नायकं प्रति विदूषक आह—

पौगण्डआ विअ केच्चिरं उद्धजाणुअं चिट्ठिस्सामो ।
ता एहि, मत्तवारणीए उवविसम्ह ।'

ऊर्ध्वजानुकैरस्माभिरत्र न स्थातव्यं, तदेहि अस्यां मत्तवारण्यामुपविशाम इति विदूषकोक्त्या राजशेखरो रङ्गे मत्तवारण्याः सत्तां तदुपयोगित्वं च साभिप्रायं सूचयति । एवं च पात्राणामुपवेशनार्थं इतरपात्रेभ्यस्तेषां पार्थक्यप्रदर्शनार्थं च मत्तवारणी उपयुज्यते । अस्याः स्वरूपमपि राजशेखरेण सङ्केतितम् । बालरामायणनाटके रथस्योपरिभागोऽनेन मत्तवारणीत्यभिहितम् ।

मत्तवारणीमधिकृत्यार्वाचीनपण्डितेषु विप्रतिपत्तयो विलसन्ति । मत्तवारणीद्वय-माधुनिकरङ्गपीठस्य पार्श्वखण्डद्वयस्य सादृश्यं विभर्तीत्येके । मत्तानां वारणाय निर्मितं स्थानं मत्तवारणीत्यन्ये । उन्मत्तैर्जनैरुत्पादिते सम्मर्दे सम्भ्रमे वा विद्रवत्सु नटादिषु तेषां सुरक्षार्थं निर्मिता स्यान्मत्तवारणीति तेषामाशयः । मत्तानां वारणानां पंक्तिर्मत्तवारणी-त्यपरं मतम् । पंक्तिरियं रङ्गस्य शोभायै स्तम्भेषूत्कीर्णा स्यात् । तदेतद् सर्वं पण्डितानां बुद्धिविलासो न मनागपि मनसि चिनोति । एतेषु हरिश्चन्द्रदिवेकरस्य मत्तवारणी-विमर्शः उल्लेखमर्हति । स व्याख्याति—"पुरा मनोविनोदार्थं हस्तिना मल्लयुद्धानि संयोज्यन्ते स्म । द्वौ उन्मत्तौ वारणौ पञ्जरयोः पृथक्-पृथक् परस्परं सन्मुखं स्थापितौ । पञ्जरयोर्मध्ये एका वेदिरभवत् । अनावृतयोः पञ्जरयोः हस्तिद्वयं तत्र परस्परेण युयुधे ।" एतादृशा मल्लप्रयोगाः कालिदासकाले प्रचलिता आसन्, यतो हि महाकविना—

विक्रमव्यतिहारेण सामान्याऽभूद् द्वयोरपि ।
जयश्रीरन्तरा वेदिर्मत्तवारणयोरिव ॥ रघुवंशे १२·९३

इति कथयता तदभिज्ञानं प्रकटितम् । मत्तवारणयोरवरोधाय विनिर्मितपञ्जरद्वय-स्याकृतिसादृश्यात् रङ्गपीठे उभयपार्श्वयोर्निर्मितं चतुःस्तम्भ-समायुक्तं चतुरङ्गं स्थानमपि मत्तवारणीति निगदितम् ।[१] दिवेकरस्येदं व्याख्यानं विचारार्हम् ।

कुम्भविप्रदासयोर्मतेन चतुःस्तम्भसमायुक्ता उपरिभूमिका मत्तवारणी । इयं च स्वर्णकलशसमायुक्ता भवति ।

मत्तवारण्या उपयोगिता उपर्युक्तविवेचनेन ज्ञायत एव । इयं च अन्यपात्रस्य प्रवेशं प्रतीक्षमाणानां पात्राणां रङ्गेऽवस्थितये तथा च द्विस्त्रिश्चतुर्धा वा विभाजिते दृश्ये अभिनयार्थमपि उपयुक्ताभवत् ।

## कक्ष्या-विभागः

रङ्गपीठे कक्ष्याविभागोऽतितरामपेक्ष्यते । अस्योपादेयत्वं नान्तरीयकत्वं च भरतेन बहुशो विस्तरशः प्रपञ्चितम् । तथापि कक्ष्याविभागो न रङ्गे स्थूलरूपेण प्रत्यक्षीकरणार्हः, अयं च पात्रैर्मानसिकव्यापारेण कल्पनया वाध्यवसीयते । अत एवायं भरतेन नाट्यधर्मितया निरूपितः ।[२] रङ्गपीठपरिक्रमणेन कक्ष्यातो कक्ष्यान्तरगमनं भवति, तेन च गृह-नगरोद्यान-नदी-द्वीपाश्रमादिषु पात्राणां चंक्रमणं प्रदर्श्यते—

कक्ष्याविभागो निर्देश्यो रङ्गपीठपरिक्रमात् ।
परिक्रमेण रङ्गस्य ह्यन्या कक्ष्या भवेदिह ॥
कक्ष्याविभागे ज्ञेयानि गृहाणि नगराणि च ।
उद्यानारामसरितस्त्वाश्रमा अटवी तथा ॥
पृथिवी सागराश्चैव त्रैलोक्यं सचराचरम् ।
वर्षाणि सप्त द्वीपाश्च पर्वता विविधा तथा ॥
आलोकश्चैव लोकश्च रसातलमथापि वा ।
दैत्यानामालयश्चैव गृहाणि च वनानि च ॥
तथा सप्तसमुद्राश्च वर्षा वै पर्वतास्तथा ।
यत्र वार्ता प्रवर्तेत तत्र कक्ष्यां प्रवर्तयेत् ॥
पूर्वं प्रविष्टा ये रङ्गे ज्ञेयास्तेऽभ्यन्तरे बुधैः ।
पश्चात्प्रविष्टास्ते ज्ञेयाः कक्ष्याभागे तु बाह्यतः ॥
ना० शा० १३।३-९

1. **Mattavāraṇī**—H. R. Diwekar, Proceedings of All India Oriental Conf. 1959, vol II part I.

२. यत्रच कक्ष्याविभागोऽयं नानाविधिसमाश्रितः ।
रङ्गपीठगतः प्रोक्तो नाट्यधर्मी तु सा भवेत् ॥
एवं कक्ष्याविभागस्तु धर्मी युक्तय एव च ।
विज्ञेया नाट्यतत्त्वज्ञैः प्रयोक्तव्याश्च तत्त्वतः ॥ नाट्यशास्त्रे १३/८२, ८५

# जवनिका

नाट्यशास्त्रस्य द्वितीयाध्याये जवनिका न कुत्रापि सङ्केतिता। एतेन भारतीय-नाट्यमण्डपे जवनिकाया अभावो नानुमातुं शक्यते। यतो हि द्वितीयाध्याये नाट्यमण्डपस्य निर्माणविधिः स्थापत्यदृष्ट्या भरतेन वर्णितः, न तत्र जवनिका स्थानमर्हति। अन्यत्र तु भरतेन स्पष्टं 'प्रोक्तम् — पटेऽपकर्षिते रङ्गेऽभिनयार्थं नटाः प्रविशन्त्विति।

ध्रुवायां सम्प्रवृत्तायां पटे चैवापकर्षिते।
कार्यः प्रवेशः पात्राणाम्— ॥—ना० शा० १२।२-३

एवमेव पूर्वरङ्गस्य कानिचिदङ्गानि अन्तर्जवनिका-संस्थैर्नटादिभिः सम्पाद्यन्ते, अन्यानि च जवनिकायां विघटितायाम्—

एतानि तु बहिर्गीतान्यन्तर्जवनिकागतैः।
विघाट्य वै जवनिकां नृत्तपाठ्यकृतानि तु॥— ना० शा० ५। ११, १२

विष्णुधर्मोत्तरपुराणेऽपि—अनावृतजवनिके रङ्गे नटाः प्रविशन्त्विति सिद्धान्तितम्।[१] तथैव शुभङ्करस्य सङ्गीतदामोदरेऽपि जवनिका उल्लिखिता।[२] अत एव भारतीय-नाट्यमण्डपे जवनिकायाः सत्ता न कथमपि निवार्यते। तथापि तस्य स्वरूपस्योपयोगस्य च विषये बहवो विकल्पा सम्भवन्ति। ते च साकल्येनेत्थं कथयितुं शक्यन्ते—

किमियं जवनिका रज्ज्वादिसाहाय्येन रङ्गस्योपरि लम्बमाना अभवदुत दाक्षिणात्य-रङ्गपीठवद् नटेषु द्वाभ्यां नीयमाना। इयं मध्ये विभाजिता अभवदुत एकस्यैव पटस्य विहिता। इयं रङ्गपीठस्य दैर्घ्येण लम्बतेस्म उत विस्तारेण। अस्या अवस्थितौ रङ्गशीर्ष-नेपथ्ययोर्मध्य आसीदथवा रङ्गशीर्ष-रङ्गपीठयोरुताहो रङ्गपीठ-प्रेक्षागारयोः। तथैव जवनिकायाः संख्या-विषयेऽपि निर्धारणमपेक्ष्यते।

अत्रोच्यते। रङ्गे उपरिष्ठाल्लम्बमानः पट एव जवनिकेति वक्तुं शक्यते। अयं च पटो रज्ज्वादिसाहाय्येन तथा लम्बते यथास्यापकर्षणमाकर्षणं सम्भाव्येत। तथाहि— पटे चैवापकर्षिते (ना० शा० १२।२), विघाट्य वै जवनिकाम्० —(तत्रैव ५,१२) तथा च 'जवनिकायामपसारितायाम्' (उपर्युक्तेऽभिनवभा०) इत्यादिभिर्भरताभिनवगुप्तो-

---

१. ततो जवनिकाक्षेपैः प्रतिपात्रप्रवेशनम्। विष्णु० ध० पु० तृतीयखण्डे २०।९, बड़ौदा-सं० पृ० ४७

२. सङ्गीतदामोदरे चतुर्थाध्याये, पृ० ७० [ कलिकाता, सं० ]
'जवनी' इत्यपि जवनिकाया नामान्तरम् 'जवनी विनिर्गमाद्यु नटीव दयिता मनोहरति' इति गोवर्धनस्य आर्यासप्तशती ५३८

त्तिर्भिः अपसारण-पुनस्सारणयोग्यः पट एव जवनिकेति सूच्यते। रङ्गेऽस्य पटस्याव-स्थितिः स्थायिनी भवति, अत एव कूटियाट्ट-यक्षगानप्रभृतिदाक्षिणात्यनाट्येषु प्रयुज्यमाने रङ्गे नटद्वयेनानीयमानो नाट्यापेक्षया पुनरपनीयमानश्च पट एव जवनिकेत्यनुत्थानोपहतः पक्षः। भरताभिनवगुप्ताभ्यां जवनिकाया उल्लेखः पूर्वोपस्थितपदार्थरूपेणैव क्रियते, पूर्व, रङ्गप्रयोगावसरे पात्राणां प्रवेशनिर्गमावसरे नटद्वयं पटमेकमानयतु नयतु वेति न कुत्रापि ताभ्यामुच्यते न वा तयोरेतादृशो वाशयः प्रतीयते। कूटियाट्टयक्षगान—प्रभृतिषूपयुज्यमाना पटी तु भारतीये रङ्गमण्डपे सर्वथा निरवकाशेति सुस्पष्टमेव। भरताभिनवगुप्ताभ्यां रङ्ग उपयुज्यमाना जवनिका सर्वत्रैकवचनेनैव सूचिता; तस्याश्चावस्थितिविषयेऽभिनवगुप्तः सर्वथा निर्भ्रान्तमूचे—

तत्र जवनिका रङ्गपीठ—तच्छीर्षयोर्मध्ये,[१]

संस्कृतनाटकेषु कालिदासादिभिः प्रयुक्तौ पात्रस्य झटिति प्रवेशद्योतनार्थं 'पटी-क्षेपेण, अपटीक्षेपेणेति सङ्केतोऽपि अनयैव जवनिकया व्याख्यातुं शक्यते। गोवर्धनपाञ्चाल-स्तु पटी अपटी चेति पटद्वयं नेपथ्यगृहद्वारयोः संसक्तमिति ब्रुवाणः न मनस्यधिरोहति।[२] किं च अपटी, पटी, काण्डपटिका, प्रतिसीरा, तिरस्करिणीति पदानि एकस्या एव जवनिकाया वाचकानीति पटीक्षेपोल्लेखेन पटान्तरं लक्ष्यत इति कथनं विरुद्धमेव। कालिदासेनापि तिरस्करिणी-जवनिकेति-पदयोः पर्यायत्वमूरीकृत्य जवनिकायाः स्वरूपम-वस्थितिश्च भरतानुसारेणैव स्वीकृते। तथाहि—मालविकाग्निमित्रे जवनिकान्तरितायां मालविकायामग्निमित्रो बभाषे—

नेपथ्यगृहगतायाश्चक्षुर्दर्शनसमुत्सुकं यस्याः।
संहर्तुमधीरतया व्यवसितमिव मे तिरस्करिणीम् ॥

'नेपथ्यगृहगताया जवनिकान्तरिताया' इति नीलकण्ठ आटीकते—अथ नाट्यं परिसमाप्य विनिर्गतायां मालविकायां नायकः पुनर्ब्रूते—

द्वारपिधानमिव धृतेर्मन्ये तस्यास्तिरस्करिणीम्।

एतेन कालिदासविवृतायामग्निमित्रस्य नाट्यशालायां नेपथ्यगृह-रङ्गपीठयोर्मध्ये

---

१. नाट्यशास्त्रे अ० भा० गायकवाड़ सं० प्रथमो भाग, पृ० २१२

२. मतमिदं श्रीमता आनन्दकुमारस्वामिना प्रथम प्रतिपादितम्—'As for the curtain of course, there were two curtains, neither of them a drop curtain, but one over each doorway leading from the *Nepathyagṛha* one and from the stage, just as in the Chinese theatre even today, here any one, who cares, may see the actors entering with a toss of a curtain,"

—Hindu Theatre; A. K. Coomarswamy, IHQ Vol, IX 1933 p 594.

जवनिकाया आलम्बमानत्वं द्योत्यते, सा च जवनिका नेपथ्यगृहगतं प्रसाधनादिरतं नटो-नटादिकं समाजिकेभ्य आवृणुते स्म। प्रयोगं समाप्य नटा अनयैव नेपथ्यगृहं विशन्ति-स्मेत्यपि स्पष्टमेव। जवनिकावृतत्वान्नेपथ्यगृहस्यापि जवनिकेति नमान्तर निष्पन्नम्।[1] एवं च प्रेक्षागृहस्य दैर्घ्येण रङ्गपीठे जवनिका लम्बते स्मेति विल्सनमहाभागस्यापि मतं[2] पराहृतमेव। तथात्वे तु जवनिका नेपथ्यगतनटादीनां गुप्तयेऽलं न स्यात्।

रङ्गपीठ-प्रेक्षागारयोर्मध्ये लम्बमाना जवनिका ( drop curtain ) तु भरतस्य रङ्गविधाने संस्कृतनाटकानां प्रयोगेषु च सर्वथा अपरामृष्टा आसीदित्यत्र नास्ति सशीतिः। अन्यथा नाटकेषु अङ्कान्ते 'निष्क्रान्ताः सर्वे इति सङ्केतोऽनपेक्षितः स्यात्।[3]

रङ्गपीठ-तच्छीर्षयोर्मध्ये लम्बमानया जवनिकया रङ्गशीर्षे विन्यस्तस्य कुंपतस्य तथैव रङ्गपीठे प्रवेशाय प्रतीक्षमाणानां निर्व्यूढभूमिकानां रङ्गपीठात् प्रतिनिवृत्तानां वा पत्राणां गुप्तिस्तेषां प्रवेश-निर्गमौ च सम्पद्यन्ते।

इत्थं चायुक्तमेवैतद् यत् पटी तथा चापटीति संज्ञकं पटद्वयं नेपथ्यगृहभित्तिद्वारयो-रवलग्नं कल्पयित्वा तयो रङ्गे प्रवेश-निर्गम-व्यवस्थाया सम्भावनं नाम। इत्थं कल्पितेन पटद्वयेन प्रवेशो रङ्गशीर्ष एव प्रथमं स्यात्, न रङ्गपीठे। रङ्गपीठस्यैव प्रायशोऽभिनयार्थ-मुपयुज्यमानत्वात्, रङ्गपीठ-रङ्गशीर्षयोर्मध्ये जवनिकाया लम्बमानत्वाच्च कल्पितपटयो-रेकस्मात् प्रविष्टोऽपि नटः समाजिकानां कृतेऽदृश्य एव तिष्ठेत्। यद्यभिनयार्थमुक्तद्वार-द्वयेनैव प्रवेशस्तर्हि रङ्गपीठ-तच्छीर्षयोर्मध्ये लम्बमानाया जवनिकायाः का खलूपयोगिता? अतश्च गृहीतनेपथ्या नटा नेपथ्यगृहाद् यद्यपि उक्तद्वारद्वयेन रङ्गशिरसि विशन्ति, किन्तु सामाजिकपुरतस्तेषा प्रवेशो रङ्गपीठोपरि जवनिकयेव सम्पद्यते। रङ्गशिरसि तु गायक-वादकैः सह स्थिता नटा अभिनयार्थं सन्नद्धाः स्व-स्व-भूमिका-निर्वाहार्थं रङ्गपीठे प्रवेश-काल प्रतीक्षन्ते, भूमिकां वा निर्वाह्य प्रत्यायान्ति तत्र। यद्यपि नेपथ्यगृहगतद्वारद्वयेनापि प्रवेश-निर्गमौ व्यवस्थापितौ भरतेन, किन्तु न तौ सामाजिकदृशावलोकनीयौ। यदि पुनः भि-

---

१. 'नेपथ्यं स्यात्जवनिका रङ्गभूमिः प्रसाधनम्।'

[ इत्यजय., राघवभट्टेनार्थद्योतनिकायामुद्धृतम् काले सं० पृ० ४ ] अन्तर्जवनिका, जवनिकान्त-र्गृहमित्यादीन्यपि नामान्तराणि नेपथ्यगृहस्य प्रयुक्तानि। यथा दशरूपके 'अन्तर्जवनिकासंस्थैश्चूलिका-र्थस्य सूचना।' दश० १।६१ नेपथ्यं जवनिकान्तर्गृहमिति मालविकाग्निमित्रटीकायां नीलकण्ठः।

2. 'It seems possible also, that curtains were suspened transversely, so as to devide the stage into different portions, open equally to the audience, but screening one set of actors from the other, as if the one were within, and the other outside a house or chamber.';

Wilson : Select Specimen of the Hindu Theatre. P. LXVIII

३. अभिनवगुप्तः ( ना० शा० १८।२३ ) कथयति 'जवनिकया तिरोधानरूपं निष्क्रमणम्।' एतच्चिन्त्यम्।

नयार्थं रङ्गशिरसोऽप्युपयोगः स्यात् । तदुपरि लम्बमाना जवनिका च विघटितपूर्वा स्यात्, तदानीमेव नेपथ्यगृहगतद्वारद्वयेन प्रवेश-निर्गमौ सामाजिकस्य कृतेऽवलोकनीयौ स्याताम् ।

इयं जवनिका मध्येन विभाजिता स्यात्, अन्यथा ४८ हस्तविस्तृतस्य एकस्यैव पटस्यापकर्षणं दुस्साध्यं स्यात् । अप्रामाणिकमेतदिति केचित् ।[1] अपरे तु इयं स्थलद्वये त्रिषु पटेषु विभक्ता स्यादिति ब्रुवते ।[2] मत्तवारणीद्वयपृष्ठ एकैकशः तन्मध्ये चेति त्रयोऽपि पटा लम्बन्ते । विभाजनेनैतेन पटीक्षेपेण प्रवेशनिर्गमावपि जवनिकामध्यादेव सम्भाव्यते, तथैव च मुद्राराक्षससप्तमाङ्के जवनिकावृतशरीरस्य मुखमात्रदृश्यस्य चाणक्यस्यापि प्रवेशो विभाजितजवनिकामध्येनैव कर्तुं शक्यः ।[3] अथ राक्षसमुपसरतस्तस्य कृते 'जवनिकामपनीयोपसृत्य चे'-ति[4] रङ्गसङ्केतोऽपि लम्बमानां जवनिकामपसार्य रङ्गपीठोपरि तस्य प्रवेशं सूचयति । गोवर्धनपाञ्चालस्तु अस्मिन् दृश्ये चाणक्यप्रवेशाय कूडियाट्ट-प्रभृतिषु प्रयुज्यमानो रङ्गे नटद्वयेन आनीयमानोऽपनीयमानश्च पटः विशाखदत्तस्य प्रयोगार्थमिष्ट इति प्रतिपादयति । अयुक्तमेतत् गौरवान्मानाभावाच्च । उक्तजवनिकयैव चाणक्यप्रवेशस्य सौकर्येण सिद्धेः पुरुषद्वयेन पटस्यानयनापनयनाभ्यां गौरवम्, भरताभिनवगुप्तादौ तादृशस्य पृथक्तया प्रयुक्तस्य पटस्यानुल्लेखाच्च मानाभावः । अन्यच्च कूडियाट्टप्रभृतिषु भारतीया जवनिका न प्रयुज्यते, तदभावपूर्त्यर्थमेव तादृशः पटस्तत्रोपयुक्तः स्यात् । अत एवार्वाचीनैः कृतः पुरातनभारतीयरङ्गे दाक्षिणात्य पटस्यारोपो दुरुपपाद एव ।

पाञ्चालस्तु पुनः भवभूतिरचिते मालतीमाधवे चित्रजवनिकाया[5] उल्लेखमधिकृत्यदाक्षिणात्यानां पटी एव मालतीमाधवाभिनये प्रयुक्ता चित्रजवनिकेति व्याचष्टे । एतदप्यनुपपन्नमेव भरतेन नटेषु चित्रकाणां चित्रकाराणां वोल्लेखात्, यथा दाक्षिणात्यपट्याश्चित्रितत्वं तथैव भारतीयजवनिकायामपि चित्रणं सूपपादमेव । अतश्च केवलं चित्रेति पदेन मालतीमाधवे दाक्षिणात्यपटस्य कल्पनायां पुनरपि गौरवं मानाभावश्च । अपरं च सिद्धत्वेनैव भवभूतिना चित्रजवनिका उल्लिखिता, दाक्षिणात्यपटस्य तु रङ्गे उपस्थितिर्न भवति सिद्धा, अपितु साध्या एव ।

---

1. 'There is no ground for holding that the curtain was parted in the middle.'
   —Curtain in Ancient Indian Theatre : De.
   Ancient Indian Theatre : Mankad p 18.
2. Curtain On Classical Theatre : G. Panchal; Saṅgīta Nāṭaka. No. 25.
३. 'ततः प्रविशति जवनिकावृतशरीरो मुखमात्रदृश्यश्चाणक्यः ।' ( मुद्राराक्षस-सप्तमाङ्के ) ।
४. तत्रैव ।
५. मालतीमाधवषष्ठाङ्के मालतीवेश परिधातुकामो मकरन्द आह—
   'यावदितश्चित्रजवनिकामन्तर्धाय नेपथ्यं धारयामि ।' ( मा० मा० काले-सं० पृ० १२८ ) ।

भरताभिनवगुप्ताभ्यां सर्वत्र एकवचनेन तथा चैकस्या एव जवनिकाया उल्लेखात्, तयैव च पात्राणां प्रवेशनिर्गमयोरप्रविष्टानां निष्क्रान्तानां वा गुप्तिविश्रान्ती कुतपस्य चावरणमिति सर्वेषां व्यापाराणां सिद्धेरेका एव जवनिका भारतीये नाट्यमण्डपे दृष्टा। तदितरजवनिकाकल्पना भारतविरुद्धैव। यद्यपि परवर्तिग्रन्थेषु भारतीयजवनिकेतरपटा अपि विधीयन्ते,[१] किन्तु न नाट्यशास्त्रे संस्कृतनाटकेषु वा तेषां प्रयोगो नान्तरीयकः।

## कुतप-विन्यासः

कुतपविन्यासो रङ्गशिरसि स्यात्।[२] नेपथ्यरङ्गशिरो-मध्ये या भित्तिः, तत्र द्वारद्वयं भवति। नेपथ्यगृहाद् बहिः रङ्गशिरसि अनयोर्द्वारयोर्मध्ये कुतपो न्यस्यते।[३] रङ्गपीठ-रङ्गशीर्षयोर्मध्ये लम्बमाना वितता जवनिका प्रायशः प्रेक्षागारस्थजनानां दृग्भ्यः कुतपम् आवृणुते।

कुतपः पूर्वरङ्गस्य अङ्गभूते प्रत्याहारविधौ विन्यस्यते।[४] रङ्गस्य सर्वासु दिक्षु स्यात् तेषामुपवेशनम्।[५] अयं चोपवेशनविधिरभिनवेन विशदं तत्रैव विवृतः—

'नेपथ्यगृहद्वारयोर्मध्ये पूर्वाभिमुखो मार्दङ्गिकः। तस्य वामतः पाणविकौ। रङ्गपीठस्य दक्षिणतः उत्तराभिमुखो गायनः। अस्याग्रे उत्तरतो दक्षिणाभिमुख-स्थिता गायिक्यः। अस्य वामे वैणिकः। अन्यत्र वंशवादकौ।

---

१ तमिलमहाकाव्ये सिलप्पदिकारे नाट्यप्रयोगावसरे त्रयाणां पटानां प्रयोगः सूचितः। तथैव जीवकचिन्तामणावपि। सङ्गीतचिन्तामणौ तिस्रो जवनिका विहिताः तासु प्रथमा प्रेक्षास्थलरङ्गयोर्मध्ये (Drop Curtain), तस्याः पृष्ठे च जवनिकाद्वयम्। वेमेनापि रङ्गे त्रयः पटाः स्युरिति उल्लिखितम्। भरतकोशः, पृ० ८१९

२. कुतपः सम्फेट-गायक-वादक-समूहः। कुर्नाट्यभूमिस्तां तपति उज्ज्वलयतीति कृत्वा। कुतं शब्दं पातीत्यन्ये। ना० शा० २।६८ अ० भा०।

३. ये नेपथ्यगृहद्वारे मया पूर्वं प्रकीर्तिते।
तयोर्भाण्डस्य विन्यासो मध्ये कार्यः प्रयोक्तृभिः॥ ना० शा० १३।२।

४. कुतपस्य तु विन्यासः प्रत्याहार इति स्मृतः।
तथावतरणं प्रोक्तं गायिकानां निवेशनम्॥ ना० शा० ५।१७।
गायिक्योऽपि कुतपान्तर्भूता एव, तासां निवेशनार्थं प्रत्याहारातिरिक्तमवतरणं नाम पूर्वरङ्गाङ्गं किमर्थं निर्धारितमिति प्रश्नः। अत्राभिनवः समादधाति—'नारदाद्यैस्तु गन्धर्वैः (ना० शा० ५।३२) इति भाविश्लोके केवलपुरुषाणां गातृत्वं वक्ष्यमाणमिहाशंक्येतेति पृथगवतरणमुक्तमिति।'

५. रङ्गपीठस्य चतसृषु दिक्षु कुतपविन्यासात्।' (ना० शा० ५।२१ अ० भा०)।

# प्रेक्षागृहम्

## द्वारविधानम्

विकृष्टनाट्यमण्डपे नेपथ्य-रङ्गशीर्षयोर्मध्ये स्थितायां भित्तौ द्वारद्वयं निर्मीयते।[१] इदं द्वारद्वयं दक्षिणस्यामुत्तरस्यां दिशि क्रियते, येन प्रवृत्त्यनुसारतः पात्राणां प्रवेशो भवति।[२] अस्य च द्वारद्वयस्य कूर्पराभिनतिसदृशी विशिष्टा आकृतिर्भवतीत्यभिनवः[३]। चतुरस्रनाट्यमण्डपे तु नेपथ्यगृहभित्तावेकमेव द्वारं स्याद् इति भरतः।[४] प्रेक्षागृहाद् बहिर्गतानां नटादीनां प्रवेशाय नेपथ्यगृहेऽन्यदप्येकं द्वारम्।[५] तत्साम्मुखीनं प्रेक्षागारे सामाजिकानां च प्रवेशायापि द्वारमेकम्।[६] एवं चतुर्द्वारं भवति विकृष्टनाट्यगृहम्।[७] चतुरस्रं तु पुनः त्रिद्वारमेव स्यात्।[८]

केषाञ्चिन्मतेन नाट्यमण्डपस्य पार्श्वयोर्भित्तिद्वयेऽन्यदपि द्वारद्वयं स्यात्। एवं विकृष्टनाट्यगृहं षड्द्वारं भवेत्।[९]

त्र्यस्रगृहे पुनरपि द्वारविधानं विशिष्यते। अस्य त्रिकोणत्वात् एकं द्वारं कोणेनैव स्यादपरं च रङ्गपीठस्य पृष्ठतः।[१०]

---

१. कार्यं द्वारद्वयं चात्र नेपथ्यगृहकस्य तु।—ना० शा० २।७४

२. सर्वत्र च पक्षे दक्षिणोत्तरगतं द्वारद्वयं पात्राणां प्रवृत्तिभेदकृतात् प्रदक्षिणा प्रदक्षिणप्रवेशत्वात्। ना० शा० २।७४ अ० भा०।

अत्र नेपथ्यगृहस्य द्वारद्वयं कार्यम्। एकं दक्षिणतः, अपरमुत्तरतः।—तत्रैव

३. तच्च द्वारद्वयमापादितं सत् कूर्पराभिनत्या भवति।

४. द्वारं चैकं भवेत्तत्र रङ्गपीठप्रवेशनम्।—ना० शा० २.१०१

अत्र अभिनवगुप्त आह—'कक्ष्याविभागेन तावत् द्वे द्वारे, तेन द्वारमिति जातावेकवचनम्, एकशब्दस्य राश्यभिप्रायेण। राशिकरणे निमित्तं पात्रप्रवेशोपायनम्, तथा च कक्ष्याध्याये वक्ष्यति—

ये नेपथ्यगृहद्वारे मया पूर्वं प्रकीर्तिते।
तयोर्भाण्डस्य विन्यासः ··· ··········॥

५. जनप्रवेशनं चान्यदाभिमुख्येन कारयेत्॥—ना० शा० २।१०८

'जनप्रवेशनं च तृतीयद्वारेण नेपथ्यगृहस्य। येन भार्यामादाय नटपरिवारः प्रविशती' त्यभिनवः।

६. रङ्गस्याभिमुखं कार्यं द्वितीयं द्वारमेव तु॥ ना० शा० २।१०२

'अन्यत्तु द्वारमाभिमुख्येन पूर्वस्यां दिशि कुर्यात्। द्वारद्वया सामाजिकजनप्रवेशार्थम्' अभिनवभारती।

७. एवं चतुर्द्वारं नाट्यगृहम्। ( ना० शा० २।१०२-अ० भा० )

८. त्रीणि वा कार्याणि मतान्तरे इति संगृहीतं भवति। ना० शा० २।१०२ अ० भा०

९. अन्ये तु आद्यद्वारद्वयमित्यादि येन हेतुनान्यद्वारद्वयं पार्श्वस्थितं कुर्यात्कोणसिद्धमिति षड्द्वारं नाट्यगृहमाचक्षते। ( ना० शा० २।१०५ अ० भा० )

द्वाराणि षट् चैव भवन्ति चास्य रङ्गस्य दिग्भागविनिश्चितानि। ना० शा० १३।६६

१०. द्वारं तेनैव कोणेन कर्तव्यं तस्य वेश्मनः।
द्वितीयं चैव कर्तव्यं रङ्गपीठस्य पृष्ठतः॥ ना० शा० २।१०८

## द्विभूमित्वम्

'कार्यः शैलगुहाकारो द्विभूमिर्नाट्यमण्डपः ।'—ना० शा० २।८१

इति भरतोक्त्या परिकल्प्यते । अत्र द्विभूमित्ववाचोक्तेस्तात्पर्य-विषये विविधानि मतानि प्रावर्तन्त । तद्यथाभिनवगुप्त आह—

'द्वे भूमी रङ्गपीठस्याधस्तनोपरितनरूपेणेति केचित् । मण्डपभित्तेर्बहिर्निर्गत-मत्तवारणीप्रमाणेन सर्वतो द्वितीयभित्तिनिवेशेन देवप्रासादाट्टालिकाप्रदक्षिणसदृशी द्वितीया भूमिरित्यन्ये । उपरिमण्डपान्तरनिवेशनादित्यपरे । अद्विभूमिरित्येके उपाध्यायास्तु वीप्सागर्भं व्याचक्षन्ते । द्वे द्वे भूमी यत्र निम्नात् ततोऽभ्युन्नता इति क्रमेण रङ्गपीठनिकटा तत्प्रभृति द्वारपर्यन्तं यावद्रङ्गपीठोत्सेधतुल्योत्सेधा भवति । एवं हि परस्परानाच्छादनं सामाजिकानाम् ।'

उपर्युक्तेषु प्रथम-द्वितीय-पक्षौ न मनसि श्लिष्यतः, रङ्गपीठ एव तच्छीर्षसन्निवेशाद् द्वितीयभित्तिनिवेशाद् वा द्विभूमित्वासिद्धेः । तृतीयोऽपि पक्षोऽनुत्थानपराहत एव, उपरिमण्डपान्तरनिवेशस्य भारतीयेऽन्यत्र शिल्पशास्त्रादिग्रन्थेषु वानुल्लेखात् । अतश्च चतुर्थोऽभिनवगुप्तोपाध्यायानां भट्टतौतपादानामेव पक्षो ग्राह्यः, भरतसम्मतत्वात् । भरतेन प्रेक्षकाणां निवेशनस्य विधाने सोपानाकृतित्वात् भूमिभागसमुत्सेधजनितं द्विभूमित्वं सूचित-मेव । तद्यथा—

> स्तम्भानां बाह्यतश्चापि सोपानाकृतिपीठकम् ।
> इष्टकादारुभिः कार्यं प्रेक्षकाणां निवेशनम् ॥
> हस्तप्रमाणैरुत्सेधैर्भूमिभागसमुत्थितैः ।
> रङ्गपीठावलोक्यं तु कुर्यादासनजं विधिम् ॥

ना० शा० २।९५।९७

केचित्—चीनदेशीय-नाट्यमण्डपे उपरि मण्डपान्तरनिवेशनादेव द्विभूमित्वं, विमानयानादिप्रदर्शनार्थं चेतत् सौकर्यावहमिति कृत्वा मण्डपान्तरनिवेशनमेव द्विभूमित्व-तात्पर्यमिति मतं स्थिरयन्ति । अभारतीयमेतत् । विमानयानाद्यभिनयनाय भरतेन स्पष्टमेव गत्यङ्गहारादिनिरूपणात्, तत्कृते मण्डपान्तरनिवेशनस्य अनावश्यकत्वाच्च ।

नटो रङ्गं पूर्वदिशा प्रविशतु । प्रयोगदृष्ट्या प्रेक्षकसम्मुखो नटो यया मार्गे सरति सा एव दिक् पूर्वा मन्यते ।[1] क्वचिद् रङ्गस्थलं विदिक्षु अपि भवति,[2] तथात्वे नेपथ्यगृहद्वारं

---

१. पृष्ठे कृत्वा कुतपं नाट्ये युक्ता यतोमुखं भरताः ।
सा पूर्वा मन्तव्या प्रयोगकाले तु नाट्यज्ञैः ॥—ना० शा० १३।६५

२. अथ बाह्यप्रयोगेषु प्रेक्षागृहविवर्जिते ।
विदिक्ष्वपि भवेद्रङ्गः कदाचिद् भर्तुराज्ञया ॥—१३।६४

यस्यां दिशि अनाश्रियते, सा एव पूर्वा दिक् कल्पनीया।[1] भौगोलिकी पूर्वा दिक् यत्र कुत्रापि स्यात्, नाट्यप्रयोगेषु त्वियमेव पूर्वा दिक् मन्तव्या।[2] पात्रस्य येन मार्गेण द्वारेण च प्रवेशः, तेनैव निष्क्रमणं, येन च निष्क्रमणं, तेनैव प्रवेशः कार्यः।[3] प्रविशतां निष्क्रामतां च पात्राणां कक्ष्याः पृथक्-पृथक् स्युः।[4] पात्रेषु ये पूर्वं प्रविष्टास्ते कक्ष्यासु अभ्यन्तराः, ये च पश्चात् प्रविष्टास्ते बाह्यतो ज्ञेयाः।[5] पश्चात् प्रविष्टो नटो दक्षिणाभिमुखः सन्नात्मनिवेदनं करोति।[6]

प्रवेशश्च पात्राणां प्रवृत्त्यनुसारतो द्विधा—प्रदक्षिणप्रवेशोऽप्रदक्षिणप्रवेशश्च।[7] आवन्तीदाक्षिणात्य-प्रवृत्त्योः प्रदक्षिणप्रवेशो विधीयते। पाञ्चाल्यामौड्रमागध्यां चाप्रदक्षिणप्रवेशः। प्रदक्षिणविधिश्चाभिनवगुप्तेन प्रकटितः —

'तत्र दाक्षिणात्य उत्तरेण द्वारेण प्रविश्य पश्चिमायां दिशि परिक्रम्य ततोऽपि दक्षिणस्यां ततः पूर्वस्यां तत उत्तरस्यां परिक्रमेत। परिक्रम्य च तस्यामेव दिश्यात्म-निवेदनं कुर्यात्। तदुक्तं दक्षिणाभिमुख इति। तत उत्तरस्याः पूर्वां ततोऽपि दक्षिणां ततः पश्चिमां प्राप्योत्तरद्वारेणैव निष्क्रामेत् एवं सात्वत्यादौ तद्विपर्ययेण पाञ्चाल्याम्। तदस्यां दक्षिणद्वारेण प्रवेशो निष्क्रमणं च प्रदक्षिणेन दक्षिणदिशा प्रवेशोऽभ्यन्तरकक्ष्याव्यवस्थित-पात्रनिकट एवेति स्यात्। एवमपसव्यप्रवेश इति।

ना० शा० अ० भा० १३।५४, पृ० ११३१-३४

प्रवेशः प्रथमं नेपथ्यगृह-माण्डद्वारयोरेकस्मात् रङ्गशिरसि, रङ्गशिरसश्च जवनिकया रङ्गपीठे भवति यत्र जवनिका न स्यात्, अनावृता वा स्यात्, तत्र उक्तद्वारयोः सामाजिकप्रत्यक्ष एव प्रवेशः स्यात्।

---

१. विधानमुत्क्रम्य यथा च रङ्गे विना प्रमाणाद् विदिशः प्रयोगे।
द्वारन्तु यस्मात् समुदक्षभाण्डे प्राचीं दिशं तां मनसाध्यवस्येत्॥—ना० शा० १३।१७

२. यतो मुखं भवेद् भाण्डं द्वारं नेपथ्यकस्य च।
सा मन्तव्या तु दिक् पूर्वा नाट्यप्रयोगेषु नित्यशः॥—ना० शा० १३।११, बड़ौदा सं० १३।५९

३. ना० शा० १३।१२-१४

४. तत्रैव १३।१५

५. तत्रैव १३।९

६. तत्रैव १३।१०

७. तत्रैव १३।५१

# षड्दारुकम्

षड्दारुकसन्निवेशो रङ्गशिरसि भवति।[1] विचित्ररचनामण्डितानि षड् दारूणि स्तम्भानामध उपरि च योज्यन्ते, तानि च साकल्येन षड्दारुकमुच्यन्ते। तद्यथाह अभिनवगुप्तः—

'नेपथ्यगृहभित्तिलग्नौ स्तम्भावष्टहस्तान्तरावन्योन्यं निवेश्य तयोर्यन्मुखं तदपेक्षया चतुर्हस्तान्तरं स्तम्भद्वयम्। तेषामधस्तनं काष्ठमुपरितनं चेति षड् दारूणि। यत्र षड् दारूणि तत् षड्दारुकम्। संज्ञायां कन्। तत्तेन विचित्ररचनोपेतत्वं लभ्यते।'
—ना० शा० २।७३ अ० भा० पृ० १८५

एतेषां षड्दारूणां तत् तद् विशिष्टमभिधानमपि भरताभिनवगुप्ताभ्यां सूचितम् तद्यथा—(१) ऊहः (२) प्रत्यूह. (३) निर्यूहः (४) व्यूहः (५) संयूहः (६) समूहश्च। एतेषां लक्षणानि यथा—

'अत्र तूहः स्तम्भशिरसो दूरं निर्गतः काष्ठः। प्रत्यूहः ततो विनिर्गता तुला। आकाशे भित्त्यारोपितकाष्ठ संजवनोपेतः व्यूहः। स्तम्भाश्रिताः सिंहादयो व्यालानुबन्धाश्च निर्यूहाः। कुहराणि पर्वतपुरनिकुञ्जगह्वररूपाणि समूह इति षड्दारुकम्।' तत्रैव अ० भा०

अतो रङ्गस्य शोभार्थे स्तम्भेषु संयोजितानां रम्यरचनोपेतानां काष्ठखण्डानामेव षड्दारुकत्वं गम्यते। न केवलमूहप्रत्यूहाभिधानि षड्दारूणि एव, अपि तु अन्येऽपि सुन्दर-रचनासंवलिता काष्ठखण्डा रङ्गे तत्र तत्र योजयितुं शक्यन्ते इति भरतोऽभिप्रैति—

एवं रङ्गशिरः कृत्वा दारुकर्म प्रयोजयेत्।
ऊह-प्रत्यूह-संयुक्तं नानाशिल्पप्रयोजितम्॥
नाना सञ्जवनोपेतं बहुव्यालोपशोभितम्।
रसालभञ्जिकाभिश्च समन्तात् समलङ्कृतम्॥
निर्यूह-कुहरोपेतं नानाग्रथितवेदिकम्।
नाना विन्याससंयुक्तं चित्रजालगवाक्षकम्॥
सुपीठधारिणीयुक्तं कपोताली-समाकुलम्॥
नानाकुट्टिमविन्यस्तैः स्तम्भैश्चात्युपशोभितम्॥

एतेनोपलक्षणात् षड्दारुकेण तु रङ्गशिरसः स्तम्भेष्ववश्यमेव भाव्यमिति। अथ च ऊह-प्रत्यूहादिषड्दारुकव्यतिरिक्ताः कपोताली-प्रभृतयोऽन्या अपि काष्ठरचनास्तत्र भवितुमर्हन्तीति च गम्यते।

षड्दारुकविषये आधुनिका विद्वांसस्तांस्तान् विकल्पानुपन्यस्य भ्रान्ता दृश्यन्ते।[2] किन्तु भरताभिनवगुप्तयोरनेन विवेचनेन भ्रान्तीनां विकल्पानां च निरवकाशत्वं सुसिद्धम्।

---

१. ना० शा० २।७३
२. श्री सुब्बारावमतेनाभिरङ्गशीर्षं द्वितीयभूमिनिर्माणाय षण्णां दारूणां निवेशः षड्दारुकम्।
—ना० शा० बरौदा-सं०, प्रथमो भागः पृ० ४४३

# परवर्ति-प्रेक्षागृह-स्वरूपम्

भारतीयं नाट्यशास्त्रमनु तेषु तेषु ग्रन्थेषु प्रेक्षागृहं विवृतम्। तेषु केचन शिल्प-शास्त्र-वास्तु-शास्त्रादिविषयकाः, अपरे वा सङ्गीत-नाट्यादिविषयकाः। केचन भारतीयामेव परम्परां पोषयन्ति, अपरे चापरामेव पद्धतिमुपोद्वलयन्ति। भारतीयप्रेक्षागृहस्य केचनानुन्मीलिताः पक्षाः एतेषून्मीलिता भवन्ति, तास्ताश्च नाट्यपद्धतयोऽप्येभिर्जायन्त इति एतेषु ग्रन्थेषु निरूपितानि प्रेक्षागृहतत्त्वानि विवेचनमपेक्षन्ते।

## विष्णुधर्मोत्तरपुराणम्

पुराणमिदं खिस्तस्य पञ्चम-सप्तम-शतकयोर्मध्ये विरचितं मन्यते।[1] अत्र सर्वेऽपि नाट्यशास्त्रीया विषया विमृष्टाः। प्रेक्षागृह-निरूपणे विष्णुधर्मोत्तरं भारतीयाद् विभिद्यते। तथाहि—अत्र प्रेक्षागृहस्य द्वैविध्यमेव ऊरीकृतं, न तु त्रैविध्यम्। त्र्यस्रं गृहमत्र उज्झितमेव, विकृष्टस्य स्थानेऽप्यायतं स्थापितम् —

नाट्यं मण्डप एव स्यान्मण्डपं द्विविधं भवेत्।
आयतं चतुरस्रं तु द्वात्रिंशद्हस्तसम्मितम्॥
चतुरस्रं तु कर्तव्यमायतं द्विगुणायुतम्।
हीनाधिकं न कर्तव्यं दृष्टादृष्टशुभप्रदम्।
हीने भवति सम्मर्दो विस्तीर्णे नाट्यगेययोः॥

—वि० ध० पु० तृतीयखण्डे विंशोऽध्यायः ४-६

एतेन परवर्तिकाले त्र्यस्रगृहस्य लोपोऽभवदित्यनुमातुं शक्यते। अथवा विष्णुधर्मोत्तरे देवगृहेषु निर्मितो नाट्यमण्डप एव वर्णितः, तत्र त्र्यस्रमण्डपस्याप्रचलनात् अयं पुराणकारेण परित्यक्तः स्यात्।

रङ्गपीठे लम्बमाना जवनिकापि विष्णुधर्मोत्तरे उल्लिखिता, जवनिकाक्षेपेणैव पात्राणां प्रवेशः स्यादित्यपि च सूचितम्।[2]

## शिल्परत्नम्

शिल्परत्नेऽपि नाट्यगृहस्वरूपं भिन्नतयेव वर्णितम्। तत्र परिमाणं पदेषु न हस्तेषु इति विशेषः। अष्टाविंशति-चतुर्विंशति-विंशति-पदेषु प्रेक्षागृहं परिमीयते। तत्र स्तूप्या निर्माणमपि भवेत्। अलिन्द-चित्रपट्टयोरप्युल्लेखः शिल्परत्ने प्रेक्षागृहान्तर्गततया विहितः। नाट्यमण्डपोऽत्रचतुर्धा विभाजितः। रङ्गपीठस्तत्र आयतः स्यात्। नेपथ्यगृह-कुतपस्थान-प्रेक्षागारादिविभाजनं नाट्यशास्त्रवदेवात्र प्रकाशितम्। शिल्परत्ने वर्णितो नाट्यमण्डपो देवालये राजधान्यां च निर्मातुं शक्यते।[3]

---

१. वि० ध० पु०—बड़ौदासंस्करणे डॉ० प्रियबालाशाहमहोदयाया भूमिका।

२. ततो जवनिकाक्षेपैः प्रतिपात्रप्रवेशनम्।
वि० ध० पु० तृतीयखण्डे २०१९. पृ० ४७

३. द्रष्टव्यम् परिशिष्टम् १

## सङ्गीतरत्नाकरे राजकीया रङ्गशाला

सङ्गीतरत्नाकरे राजप्रासादान्तर्निर्मिता नाट्यशाला वर्णिता । इयं च नाट्यशाला पुष्पैरलङ्कृता, वितानैः सुसम्पन्ना रत्नस्तम्भैश्च विभूषिता विभाति । सङ्गीतरत्नाकरकारेण प्रकरणेऽस्मिन् प्रेक्षकाणां निवेशनं विस्तरेण वर्णितम् । तत्र सभापतिः सिंहासनमध्यास्ते । प्रधानाश्चान्तःपुरिका तं दक्षिणेनोपविशन्ति । तत्पृष्ठभागे प्रधानपुरुषा विद्वांसश्च निवेश्यन्ते । एवमेव कवयः, ज्योतिर्विदो वैद्याः मन्त्रिणः विलासिन्यो वा यत्र यत्रोपविशन्ति तत्सर्वमत्र समीक्षितम् । चामरधारिण्यः वेत्रधराश्च मध्येशालं शोभन्ते । गायकाः कथकाः, वन्दिनश्चापि निर्धारितेषु स्थानेषूपविशन्ति ।[1]

## सङ्गीतदामोदरः

सङ्गीतदामोदरः शुभङ्करेण षोडशशतके प्रणीतः । अत्रापि सङ्गीतरत्नाकर इव राजकीया रङ्गशाला वर्णिता । सा च भरताद् भृशं विभिद्यते । प्रेक्षागृहप्रकारा न शुभङ्करेण निरूपिता इति एकमेव प्रेक्षागृहमस्याभिप्रेतमिति प्रतीयते । तस्य विस्तारो विंशतिहस्ताः । रङ्गभूमौ नायकस्य गायिकानां कुतपस्य चोपवेशनमनेन विशिष्टं प्रोक्तम् । नेपथ्यं रङ्गपीठश्चेति विभागद्वयमेव रङ्गस्य शुभङ्करमतेन प्रतीयते । रङ्गभूमिं वर्णयित्वा अनेन जर्जररूपं विस्तरेण निरूपितम् ।[2]

शुभङ्करेण जवनिकाया अवस्थितिः कुतपपृष्ठेऽध्यवसीयते । भरताभिनवगुप्ताभ्यां तु रङ्गपीठ-तच्छीर्षयोर्मध्ये । शुभङ्करेण रङ्गपीठ-रङ्गशीर्षयोर्विभाजनं न कृत, रङ्ग-नेपथ्ययोर्मध्ये स्थितायाः भित्तेः स्थानमेव जवनिका आपन्नेति विशेषः ।

शुभङ्करेण कुतपविन्यासोऽपि भिन्नतयैव प्रोक्तः । भरते तु पूर्वाभिमुखो मार्दङ्गिको भवति । अत्र तु गायिकानामुभयोः पार्श्वयोः मृदङ्गवनुष्टयम् । भरते गायिक्यो दक्षिणाभिमुखस्थाः स्युः, अत्र तु पश्चिमतः ।[3]

## भावप्रकाशनम्

भावप्रकाशनकारः शारदातनयः त्रिविधप्रेक्षागारेषु विकृष्टस्थले वृत्तगृहं स्वीकुरुते । डॉ० पी० के० आचार्य-महाभागाना मतेन शारदातनयस्यैव पाठः स्वीकार्यः । तथापि वृत्तप्रेक्षागृहं निरूपयतः शारदातनयस्य समक्षं भरताभिनवगुप्ताभ्यां भिन्नैव कापि परम्परा आसीदिति प्रतीयते । वृत्ताकारं प्रेक्षास्थलं नागार्जुनीकोण्डायामुत्खननेनोपलब्धम् परं नाट्यशास्त्रे अभिनवभारत्यामन्यत्र नेदं प्रमाणीक्रियते । शारदातनयेन संगीतकप्रयोगदृष्ट्यैव वृत्तचतुरस्र-त्र्यस्रमिति प्रेक्षागृहत्रितयं निरूपितम् ।[4]

---

१. द्रष्टव्यम् परिशिष्टम् ३
२. ३. द्रष्टव्यम्—परि० ३
४. भावप्रकाशने दशमाध्याये ।

**विश्वकर्मवस्तुप्रकाशः**

ग्रन्थोऽयं[1] विश्वकर्मणा विरचितो मन्यते। अत्र राजप्रासादस्था रङ्गशाला वर्णिता। इयं च रङ्गशाला राजप्रासादसम्मुखम्, अमात्यभवनपार्श्वयोरन्यत्र वा निर्मातुं शक्या। इयं च देव-गान्धर्व-मानुष्य-भेदेन त्रिविधा भवति। अत्र त्रीणि द्वाराणि स्युर्येषु सशस्त्रा रक्षकाः तिष्ठन्ति। प्रेक्षागारे लक्ष्म्युमाशिवप्रभृतीनां प्रतिमा निवेश्यन्ते। परित वापी उद्यानं च स्यात्।

कृतपनिवेशो रङ्गवेद्यां भवेत्। नेपथ्यगृहमपि द्विधा विभज्यते, एकत्र नटीनामित-रत्र च नाटानां परिच्छदो भवेत्। नाट्यशाला मणि-दर्पण-चित्रादिभिर्भूषिता स्यात्। द्वारेषु रक्षका अन्तश्च चामरग्राहिण्यः स्युः।

**मानसारः**

मानसारे राजप्रासादान्तर्वर्ति नाट्यगृहं निरूपितम्।[2] अस्य ग्रन्थस्य सप्तचत्वारिंशा-त्तमेऽध्याये मध्यमरङ्गो वर्णितः। तत्र रङ्गभूमिः मध्येशालं शोभते। अतो मध्यरङ्गोऽयं कीर्तितः।[3] द्वात्रिंशत्तमेऽध्याये गणिकालय-वादकालयनाट्यकारालया वर्णिताः।[4]

**सङ्गीतमकरन्दः**

सङ्गीतमकरन्दो नारदरचितोऽभिमतः। अत्र चतुरस्रं नाट्यगृहमेव केवलं वर्णितम्। इदं च विस्तारेण दैर्घ्येण च षण्णवतिहस्तानां भवति। इत्थं भरतप्रोक्तस्य ज्येष्ठमण्डपस्य प्रमाणमत्र गृहीतम्। नाट्यशालायां चास्यां कामसूत्रोक्ताश्चतुरशीतिबन्धा उत्कीर्यन्ते। तथैव नाट्यशास्त्रोक्ता नृत्तबन्धा अपि। शालेयं विविधवर्णमणिरत्नैः पुष्प-पताकाभिश्च समलंक्रियते। द्वाराणि चात्र चत्वारि भवन्ति। तच्च "चतुर्द्वारं नाट्यगृह-मिति" भरताभिनवगुप्तयोरुक्त्या सङ्गच्छते। मध्येशालं चतुर्विंशतिहस्तविस्तारा मनोरमा वेदिर्भवति, यत्र च राज्ञ आसनं स्थाप्यते। वस्तुतो राजप्रासादस्याङ्गभूतेयं नाट्यशालात्र वर्णिता, अतश्च कामसूत्रोक्तबन्धा रत्नाद्यलङ्करणानि च तत्र संभाव्यन्ते।[5]

**शिवतत्त्वरत्नाकरः**

ग्रन्थोऽयं श्रीवासवराजेन प्रणीतः। अत्र इक्केरीपुर्यां श्रीवेङ्कटप्पराजा निर्मिता रङ्गशाला वर्णिता।[6] अस्याः निर्माणविधौ हस्तिदन्त—चन्दनादिबहुमूल्यद्रव्याणि उप-युज्यन्तेस्म। परितः प्रेक्षागृहमुद्यानं विललास। प्रकाशाय रङ्गस्य तेषु तेषु स्थानेषु दीपस्थानं कृतम्। यथास्थानं च चित्रफलकानि निहितानि।

१. तन्जोर-सरस्वती महल-ग्रन्थालयः, १९५८-क्र० ४९. पृ० ५२३-३२ इ०—परिशिष्ट—(४)
२. Mānasara P. K. Acharya, Oxford university Press XI-VII.76
३. ४. द्रष्टव्यम्—परिशिष्ट—(५)
5. Theatre Architechture; V.Raghavan [ The Theatre of Hindus, pp. 160–161 ]
६. तत्रैव

**समराङ्गणसूत्रधारः**

भोजकृते समराङ्गणसूत्रधारे गान्धर्ववेश्म निरूपितम् । इद राजप्रासादान्तर्भूतम् । गान्धर्ववेश्मनि प्रेक्षणक-सङ्गीतकादीनि आयोज्यन्ते स्म ।[1]

**नारद-शिल्पम्**

नारदशिल्पे दैव-गान्धर्व-क्षात्र-भेदेन त्रिविधं प्रेक्षागृहं प्रकीर्तितम् । एतेषु प्रथमं देवालये द्वितीयं नगरेषु पौरैः स्तृतीयञ्च राजप्रासादे निर्मीयन्ते । दैव-प्रेक्षागृहे दिव्या भावाः क्षात्रे पुनः वीरा गान्धर्वे च शृङ्गारादयः सर्वे भावाः प्रदर्श्यन्ते । अस्य प्रेक्षागृहस्य स्थलं त्रिधा भिन्नम् । तत्र मध्यभागे रङ्गः स्यात् । तत्पृष्ठे जवनिका भवति, तस्याश्च पृष्ठतो बहवो भवन्ति प्रकोष्ठाः, रङ्गोपकरणनिधानाय, प्रसाधनाय च । प्रेक्षागारे ब्राह्मणानामासनानि रङ्गस्य सर्वथा निकटस्थानि स्युः, तथैव क्षत्रियाणामपि । स्त्रीणामुपवेशनाय द्वितीया भूमिर्निर्मीयते ।[2]

**सिलप्पदिकारम्**

तमिलभाषायाः सर्वप्राचीने महाकाव्ये सिलप्पदिकारे नृत्यप्रदर्शनार्थमुपयुज्यमानो रंगपीठो वर्णितः । अयं अष्टहस्तदीर्घ उच्छ्रायेण च हस्तमात्र भवति । पृष्ठतश्चास्य द्वारद्वयं स्यात् ।[3]

**कुम्भविप्रदासौ**

भारतीयां सरणि श्रयद्भ्यामपि कुम्भविप्रदासाभ्यां रङ्गशालानिरूपणे कानिचिन्नूतनतत्त्वानि प्रकटीकृतानि । तौ चतुर्विधं नाटयगृहं मन्येते—(१) विकृष्टम्—१०८ × ६४ हस्तमानम् (२) चतुरस्रदीर्घम्—६४ × ३२ हस्तमानेन क्षत्रियाणां कृते (३) चतुरस्रसमम्—३२ × ३२हस्तमानेन ब्राह्मणानाम्, (४) त्र्यस्रम्—इतरवर्णानां कृते । प्रथमं गृहं विशालतमं देवालयेष्वेव भवति ।

विप्रदासो नवीनं तत्त्वं योजयति । नाटयगृहं पञ्चहस्तान्तरेण परितः त्रिहस्तोच्छ्रिता प्राकारभित्तिर्निर्मातव्या, यत्र प्रवेशाय एकं द्वारं स्यात् । तत्र प्रहरिणः स्थापिताः स्युः । ईदृशी प्राकारभित्तिर्नागार्जुनीकोण्डायां नाटयशालां परित उत्खनिता ।

रङ्गस्थले रङ्गपीठ-रङ्गशीर्षयोः पार्थक्यमूमिरासीत् । चतुःस्तम्भसमायुक्ता उपरिभूमिका मत्तवारणी निर्मिता । अस्याश्चतुर्षु स्तम्भेषु द्वयमुत्तरतो द्वयं दक्षिणतः स्यात्, उपरि चैनां सुवर्णकलशो निधीयते । षड्दारुकविषये नेपथ्य गृहद्वारपार्श्वयोः स्तम्भद्वयं तदुपरि अपरश्च स्तम्भा इति षड्दारुकमित्यनयोर्मतिः ।[4]

**हम्मीरः**

हम्मीरेण प्रकृष्ट-चतुरस्र-त्र्यस्रा इति त्रिधा नाटयमण्डपः प्रकीर्तितः । तच्च प्रत्येकं श्रेष्ठ-मध्यमाधमभेदैस्त्रिधेति नवत्वम् । एतेषु श्रेष्ठो मण्डपो देवानां मध्यमं मानुषाणामवरं चान्येषामिति विभागः ।[5]

---

1—2. Studies in Natyasastra-Tarleker p. 197

3. Silappadikaram, Oxford, univ. Press p. 101

४. द्र०—परिशिष्टम्—६   ५, द्र०—परिशिष्टम्—७

# उपसंहारः

भारतीयं नाट्यशास्त्रं प्रमुखतः परिशील्य नाट्यमण्डपस्वरूपं गवेषितमस्माभिः। नाट्यशास्त्रानन्तरमेतत्प्रकरणप्रतिपादकानि सन्तीतराणि शास्त्राणि, तान्यपि निभालितानि, किन्तु नाट्यमण्डपनिर्माणविधिनिरूपणे भारतीयं नाट्यशास्त्रं सर्वथा प्रकृष्यते। नाट्यप्रयोगसौकर्येण, कुतपसन्निवेशेन, रङ्गपीठ-रङ्गशीर्ष-विभागेन, मध्यावलम्बिजवनिकया, षड्भिश्चतुर्भिर्वा द्वारैः सोपानाकृतिपीठकप्रेक्षकनिवेशनेन च भरतप्रतिपादितं विकृष्टमध्यं प्रेक्षागृहं निर्दुष्टं, सर्वातिशायि, सर्वकालोपयोग्यं तथा चेदानीमप्युपादेयतामर्हति।

'प्रयोगप्रधानं हि नाट्यशास्त्रमिति' कविकुलगुरुवचोऽनुसारेण प्रयोग एव रङ्गशालाया निकषः। प्रयोगसौकर्यार्थं भरत-निरूपित-रङ्गशालायां स्वल्पं परिवर्तनं यदि विधीयते, न तत्र दोषः। अतश्च महाकविना कालिदासेन मालविकाग्निमित्रे वर्णितायां सङ्गीतशालायां नेपथ्यगृह-रङ्गयोर्मध्ये न भित्तिरपितु जवनिका ऊरीकृतेति प्राक् परामृष्टमेव। तथैव च सङ्गीतदामोदरकारेण शुभङ्करेणापि जवनिकापृष्ठे कुतपं इति भरतोक्तसन्निवेशं विरोधयता कुपतपृष्ठे जवनिका वर्णिता। भरत-सम्मता मत्तवारणी न सर्वत्रोपयोगावहा, अतश्चानर्थक्यं गमिता कालान्तरेण च सा सूत्रधारैर्नाट्यकारैश्च विस्मृतप्रायेति प्रतिभाति। एवमेव रङ्गस्य रङ्गशीर्ष-रङ्गपीठयोर्विभागोऽपि न सर्वत्र प्रयुज्यते, नापि प्रयोगार्हो वा। अत एव एतस्य विभागस्य विषये यथा भारतीये नाट्यशास्त्रे तथान्यग्रन्थेष्वपि विकल्पाः क्वचिद् दृश्यन्ते। भारतीये भारत्यां च क्वचित् समग्रस्य रङ्गस्य कृते रङ्गपीठं, क्वचिद् रङ्गपीठस्य कृते वा रङ्ग इति पदं प्रयुक्तं दृश्यते।[१] प्रयोगनिरतैर्भरतैः क्वचिद् विभाजनमिदमपाकृत्य समग्रोऽपि रङ्ग एक इति प्रयुक्तः स्यात्। विकृष्टमध्ये रङ्गे रङ्गशीर्षस्य तत्पीठापेक्षयोन्नततरत्वात् शक्यते, विभाजनमूरीकर्तुं। अन्यत्र तु विभाजनं कुतपसन्निवेशाद् जवनिकाया अवलम्बमानत्वादेव प्रतीतः स्यात्। यदि च जवनिका कुतपयोः स्थितावपि विपर्यासः क्रियते तदा तु रङ्गशीर्ष-रङ्गपीठयोः द्विधा विभागस्य लोप एव स्यात्। एतादृशी स्थितिः परिवर्तिकाले क्वचिदुत्पन्नेत्यनुमातुं शक्यते। एवमेव द्वाराणां संख्याविषये। चतुर्द्वारं (विकृष्टमध्य) नाट्यगृहम् इति कथयित्वापि भरताभिनवगुप्ताभ्यां षड्द्वारत्वमप्यस्वीकृतम्। वस्तुत एतादृशा विकल्पा नातिमहत्त्वपूर्णाः, तेऽपि च भरतसम्मतप्रेक्षागारस्य मूलयोजनां परिवर्तितुमक्षमाः। प्रयोगसौकर्यदृष्ट्या यदि नटा भारतीय-नाट्यशालायामितस्ततः किञ्चित् परिवर्तयन्ति, तत्तु विगणय्य सैद्धान्तिकदृशा तु भरतवर्णितं स्वरूपं वस्तुतः ग्राह्यम्, तच्चादर्शतलसंस्थितमिव निर्मलं नाट्यशास्त्रावगाहनपुरस्सरं प्रतिभाति, प्रत्युपस्थापितं च प्रकृते प्रबन्धे इति दिक्।

---

१ द्र० ना० शा० १३।१,९-१०, १५

## भरतसम्मतं विकृष्टमध्यनाट्यगृहम्



विविदिषासंन्यासे जन्मप्रदातृणां काम्यकर्मणां परित्यागस्तथापरप्रकारके विविदिषा-संन्यासे प्रैषोच्चारणादिपूर्वकं दण्डधारणाद्याश्रमग्रहणमावश्यकम्। उद्दालकश्वेतकेतुसनत्कुमारनारदादयः श्रुतिप्रसिद्धाः अर्जुनादयश्च स्मृतिप्रथिता ज्ञानिनो विविदिषासंन्यासस्योदाहरणत्वेन गणयितुं शक्यन्ते।

विद्वत्संन्यासस्योपपादनं परमहंसोपनिषदि परिदृश्यते। परमहंससंन्यासस्य द्वितीयोऽयं भेदः। सोपानक्रमेण विविदिषयाऽऽत्मज्ञाने सति विद्वत्संन्यासः संगच्छते मैत्रेय्यानुमतो याज्ञवल्क्यगृहीतः संन्यासो विद्वत्संन्यासस्य दृष्टान्तः। विविदिषा-सन्यासो ज्ञानप्राप्तेरिच्छया विद्वत्संन्यासश्च ज्ञाने सति गृह्यत इत्युभयोरन्तरम्। विद्वत्संन्यासं विवेचयन् विद्यारण्यमुनिराह—"सम्यगनुष्ठितैः श्रवणमननिदिध्यासनैः परमतत्त्वं विदितवद्भिः सम्पाद्यमानो विद्वत्संन्यासः"[1] इति।

इत्थं ब्रह्मविद्याधिकारिणा मुमुक्षुणा परमहंसपरिव्राजकेन भवितव्यमिति सुचिन्तितः शङ्करसिद्धान्तःशांकरसम्प्रदायावलम्बिभिरितरैरप्याचार्यैरद्वैतिभिः समर्थितः सुदृढीकृतश्चेति स्पष्टतामायाति ब्रह्मविद्याधिकृताधिकारनिरूपकतत्तद्-ग्रन्थानामनुशीलनेति शम्।

---

१. तदेव पृ० २६